MIMAMSA DHARMA SHASTRA Text Books Series No.-8

# SHĀSTRADĪPIKĀ

*by*

**PARTHASARTHI MISHRA**

*Second Volume*

( From Second Pada of First Chapter to the fifth Adhyaya end )

***EDITED***

*by*

MIMAMSARATNAM A. SUBRAHMANYA SASTRY
**"SAMMANITA DARSHANA PRADHYAPAK"**
**Sadhubela Sanskrit Mahavidyalaya**
**Varanasi (U. P.)**

**Makar Sankranti** **14-1-75**

मीमांसादर्शन-धर्मशास्त्रग्रन्थमालाया अष्टमं पुष्पम्

# 'शास्त्रदीपिका'

सर्वतन्त्रस्वतंत्रश्रीमत्पार्थसारथिमिश्रप्रणीता

तस्याः

द्वितीयो भागः

[ प्रथमाध्यायद्वितीयपादादारभ्य पञ्चमाध्यायपर्यन्ता ]

मीमांसारत्नेन पं० अ० सुब्रह्मण्यशास्त्रिणा
साधुवेलासंस्कृतमहाविद्यालये सम्मानित-
दर्शनप्राध्यापकपदमलंकुर्वाणेन
संशोध्य प्रकाशं नीता

मकरसंक्रान्तिः वाराणसी
१४–१–७५

प्रकाशकः
मीमांसारत्नं पं० अ० सुब्रह्मण्यशास्त्री
साधुबेलासंस्कृतमहाविद्यालयः
सकरकन्द गली, वाराणसी–१

:⁘:


मूल्यं १५ रूप्यकाणि

:⁘:

तृतीयं संस्करणम्

:⁘:

मुद्रक
नरेन्द्रकुमार प्राणलाल आचार्य
आचार्य मुद्रणालय
गायघाट, वाराणसी–१

# प्रास्ताविकं किञ्चित्

अथेदानीं शास्त्रदीपिकाया द्वितीयो भागो मूलमात्रं प्रकाश्यते ।

शास्त्रदीपिका श्रीमत्पार्थसारथिमिश्रप्रणीता । येयं शास्त्रीयमावरणम् समूलमुन्मूलयन्ती अन्वर्थनामधेया । अत्रेदंप्रथमः प्रारम्भः सूत्राणि विहृय-अधिकरणस्वरूपमात्रनिरूपणस्य । एतन्मूलक एवाभियुक्तानां प्रवादः पप्रथे अधिकरणव्यवस्थापकः पार्थसारथिमिश्र इति । न्यायोपबृंहितमतिगम्भीरं न शक्नोति इदमित्थमिति परिच्छेत्तुं गीर्वाणगुरुरपि, यत् प्रभाकरमतावलम्बिभिस्स्वशेमुषीवैभवेनाऽन्यथा अन्यथोन्नीयमानेषु न्यायेषु प्रवृत्तो चान्धगोलाङ्गूलन्यायेन लोके शास्त्रदीपिकां प्राणैषीत् पार्थसारथिमिश्रः । सुविशदमिदं समेषां विदुषाम् । बहुषु मीमांसाग्रन्थेषु अयमेक एव ग्रन्थोः बहूनि वर्षसहस्राणि आच हिमवतः आच कुमारिकायाः अध्ययनाध्यापनेषु निर्विवादं सर्वैरपि विद्वद्भिः सबहुमानमाद्रियमाणः । सुप्रसिद्धैस्सर्वैरपि मीमांसकैर्व्याख्यातेयं शास्त्रदीपिका । किंबहुना माकिं चत्वारिंशत् व्याख्यानान्यासन्निति ग्रन्थसूचीतोऽवगम्यते । अत एतदुपज्ञमेवाधिकरणप्रस्थानं परिष्कृतावस्थमिति मीमांसकमतनिगर्वः । अत्र यद्वक्तव्यं तत् सर्वं तर्कपादभूमिकायामुपपादयिष्यामः । तत्र शास्त्राध्यायपादाधिकरणार्थसंग्रहेण पार्थसारथिमिश्रः मीमांसककुलस्योत्तमर्ण इति नातिशयोक्तिलेशोऽपि ।

तत्र तत्र सति प्रसंगे प्राभाकरमतनिरासार्थमेवैषा प्रवृत्तिरिति निश्चयः । गरीयानस्याभिनिवेशो भाट्टमीमांसकमते, प्रभाकरमतोपरोधात् भाट्टमतसंरक्षणगौरवं पार्थसारथिमिश्रस्यैव, नान्यस्य कस्यचित् । यतो ह्ययं साग्रहं सधिक्कारंच निरस्यति प्राभाकरसिद्धान्तम् । अनेन तिरस्कृतस्य प्राभाकरमतस्य नाद्यावधि कश्चिदुद्धर्ता दरीदृश्यते, तत्र तत्र शास्त्रार्थसंग्रहेण, अध्यायार्थसंग्रहेण, पादार्थसंग्रहेण, अधिकरणार्थसंग्रहेण च श्रीमानयंपार्थसारथिमिश्रोऽस्मानत्यन्तमुपाकार्षीत् । अतः अधमर्णं मीमांसककुलमिति नातिशयोक्तिः । माधवीयेऽधिकरणमालाविस्तरे शास्त्रदीपिकागतश्लोकानामुदाहरणात् शास्त्रदीपिकासरणिमेवानुसरतीति

नापरोक्षमिदं विदुषाम् । तर्कपादे च सौत्रान्तिकयोगाचारादिसिद्धान्तं स्फोटवादम् वैशेषिकमतं सांख्यमतमद्वैतवेदान्तमतञ्च यथावदेवानुवदन् स्वस्य सर्वमन्त्रतंत्रताम् अभिव्यनक्ति । अयञ्च भारतवर्षे सर्वत्रो उच्चकक्षासु पाठ्यत्वेन स्वीकृतोऽस्ति, परमद्यत्वे महाप्रबन्धः कुत्रापि नोपलभ्यते ।

भाट्टदीपिकाया अध्ययनाध्यापनावसरे शास्त्रदीपिकाया योजनया सह भाट्टदीपिकाया अध्यापनं कर्तव्यमिति अस्मत्पूज्यपादानां स्वर्गीयचिन्नस्वामिशास्त्रिचरणानाम्, मीमांसाकण्ठीरववैद्यनाथशास्त्रिचरणानाञ्चैकमत्यमस्मिन् विषये न्यूनतापरिहाराय, एवं भारतीयैस्सर्वैर्विद्वद्वरेण्यैस्समादृतोऽयं महानिबन्धस्सर्वासूच्चतमपरीक्षासु साम्प्रतं कुत्रापि नोपलभ्यते,तेनाध्येतारः,अध्यापकाश्च क्लिश्यन्तितमाम् । तन्निरासेन, तेषां सौलभ्याय कराले पत्रादि ( कागज ) दुर्लभे मुद्रणादिव्ययभारसंकुले काले शास्त्रसंप्रदायसंरक्षणप्रचारणादिकमेवोद्दिश्य स्वकीयबहुद्रव्यव्ययेनास्य ग्रन्थस्य ( मूलमात्रं ) द्वितीयो भागः सांप्रतं प्रकाशं नीयते, अवशिष्टस्तृतीयभागोऽपि अचिरादेव प्रकाशयिष्यते ।

अत्र यद्वक्तव्यम्, तत्सर्वं तर्कपादस्य ( प्रथमाध्यायपादस्य ) भूमिकायां सुविशदमुपपादयिष्यते परिशिष्टादिभिस्सहितम् । यद्यपि सव्याख्यानस्यैव संपादनमभिसंहितमासीत् । परन्तु समपेक्षितपर्याप्तसाधनवैकल्येन, समयसाध्यत्वेन च समुपैक्षिषि । अवसरान्तरे, तदपि संपादयिष्यते ।

अक्षरसंयोजकदोषात् मानवमात्रसुलभाश्चाशुद्धीः संशोध्य पाठयेयुरिति पाठकमहाभागास्सानुनयं प्रार्थ्यन्ते, अन्ते च विद्वांसो विनिवेद्यन्ते मदीयपरिश्रमं सफलंन्त्विति ।

इति सुधीजनवशंवदः

[ म०म० चिन्नस्वामिशास्त्रिचरणानां शिष्यः ]

मीमांसारत्नं अ० सुब्रह्मण्यशास्त्री

श्रीकाशीहिन्दूविश्वविद्यालयस्य धर्मशास्त्रमीमांसादर्शनविभागाध्यक्षपदात् प्राप्तावकाशः सांप्रतं

सम्मानितदर्शनप्राध्यापकः

साधुबेलासंस्कृतमहाविद्यालयः, वाराणसी-१

# शास्त्रदीपिका

## अथ प्रथमाध्यायस्य द्वितीयः पादः

### अर्थवादाधिकरणम्

आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥ १ ॥ शास्त्रदृष्टविरोधाच्च ॥ २ ॥ तथा फलाभावात् ॥ ३ ॥ अन्यानर्थक्यात् ॥ ४ ॥ अभागिप्रतिषेधाच्च ॥ ५ ॥ अनित्यसंयोगात् ॥ ६ ॥ विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ॥ ७ ॥ तुल्यश्च सांप्रदायिकम् ॥ ८ ॥ अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥ ९ ॥ गुणवादस्तु ॥ १० ॥ रूपात्प्रायात् ॥ ११ ॥ दूरभूयस्त्वात् ॥ १२ ॥ स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनात् ॥ १३ ॥ आकालिकेप्सा ॥ १४ ॥ विद्याप्रशंसा ॥ १५ ॥ सर्वत्वमाधिकारिकम् ॥ १६ ॥ फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात् ॥ १७ ॥ अन्त्योर्यथोक्तम् ॥ १८ ॥

'अथातो धर्मजिज्ञासे'त्यत्र प्रमाण-स्वरूप-साधन-फलैः साभासैर्धर्मः जिज्ञास्यत्वेन प्रतिज्ञातः। तत्रास्मिन्नध्याये प्रमाणं निरूप्यते, 'किं प्रमाणं धर्मे' इति। तेन यदेव किंचिद्धर्मप्रमाणनिरूपणमर्थवाद-मन्त्र-स्मृति-नामधेयादिगोचरम्, तत्सर्वमत्रैव संगतम्। नह्यत्र चोदनाप्रामाण्यसाधनं लक्षणार्थः, येन स्मृत्यादेरसंगतिः स्यात्। किं तर्हि ? धर्मप्रमाणनिरूपणम्। तदुक्तं भाष्यकारेण 'को धर्मः कथंलक्षणकः' शा. भा. पृ. ९ इति, सर्वस्मिंश्चाध्याये तदेव क्रियत इति समस्तमध्यायं प्रमाणलक्षणमाचक्षते—इति। तेन लक्षणसंगतिस्तावत्सिद्धा।

प्रकृतसंगतिरपि चोदनानां प्रामाण्ये पदपदार्थसंबन्धस्यौत्पत्तिकत्वेन वाक्यार्थप्रतीतेर्मूलवत्तया चोपपादिते, अनन्तराधिकरणे वेदद्वारेण तासां पौरुषेय-

त्वमाशङ्कितम्। यथोक्तं भाष्यकारेण 'संनिकृष्टकालाः कृतकाः वेदा इदानींतनाः, ते च चोदनानां समूहाः। तत्र पौरुषेयाश्चेद्वेदाः, असंशयं पौरुषेय्यश्चोदनाः' शा. भा. पृ. १०० इत्येवमाशङ्क्य, वेदापौरुषेयतया तदवयवानां चोदनानामप्यपौरुषेयतया प्रामाण्यं प्रतिपादितम्। एवं चोदनानां वेदावयवानां प्रामाण्ये साधिते, तदवयवत्वेनोपस्थितानामर्थवादादीनां भागानामप्यपौरुषेयत्वसामान्याच्चोदनावत्प्रसक्तं प्रामाण्यमस्ति, नवेति चिन्त्यत इति। तदिदमुक्तम्—

'सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः।
विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते' ॥ तं. वा. पृ० १०५, इति।

अस्यार्थः—सिद्धप्रमाणभावं चोदनांशे वेदं त्रिधा विभज्य, किं तावन्मात्रस्यैव प्रामाण्यम्, उत सकलस्येति विचार्यते। न विधेरेव, किन्तर्हि विध्यर्थवादमन्त्राणां सर्वेषां सर्वशः—सर्वप्रकारं विधि-स्तुति-स्मृतिभिर्धर्मप्रतीतावुपयोगः प्रतिपाद्यते—इति।

यद्वा चोदनार्थमप्युक्तेनापौरुषेयत्वेन समस्तस्य प्रामाण्यं सिद्धप्रायमपि बोधकशक्त्यभावमाशङ्क्य स्थिरीक्रियते विध्यर्थवादमन्त्राणामिति, नायमर्थः-विधेरप्युपयोगः प्रतिपाद्यत इति, किं तर्हि? विध्यादीनां सर्वेषामुपयोगोऽस्ति, न विधेरेवेति प्रतिपाद्यते—इति।

नामधेयाभिप्रायं वा विधिग्रहणम्। यद्वा अर्थवाद—मन्त्रयोः स्तुति—स्मृतिभ्यामुपयोगे कथिते, अर्थाद्विधेरपि सामान्यसिद्धमुपयोगित्वं साक्षाद्विधानेन विशेषरूपेण साधितं भवतीत्यभिप्रायः। औदुम्बराधिकरणे वा विध्युपयोगः प्रतिपाद्यत इत्यभिप्रायः।

तत्रास्मिन्नेव सूत्रे विध्युद्देशातिरिक्तानां सर्वेषामेवानर्थक्यं पूर्वपक्षीक्रियते। सिद्धान्तेऽपि स्वाध्यायविधिवशादेवार्थवत्तया भवितव्यमित्येतावत्साधारण्येनैवाभिधास्यते, पश्चात्तु क्रमेण स्तुत्याद्युपयोग इति वेदितव्यम्। तत्र प्रथममर्थवादेष्वेव सिद्धान्तकथनात्तानेवोदाहृत्य चिन्त्यते—यानि 'वायुर्वै क्षेपिष्ठा देवता' तै. सं. २-१-१. त्येवमादीनि विधिभावनातदंशत्रयातिरिक्तार्थानि, तानि किं धर्मे प्रमाणम्, उत नेति संशयः। तदर्थमिदं विचारयितव्यम्—किं विध्युद्देशेनैषामेकवाक्यत्वम्, उत भिन्नवाक्यतेति। तत्सिद्ध्यर्थमप्येतच्चिन्तनीयम्—कि विध्युद्देशार्थवादयोः परस्पराकाङ्क्षास्ति, नवेति। तत्रैवं पूर्वपक्षः—

अर्थवादा निराकाङ्क्षा भूतार्थप्रतिपादनात्।
विध्युद्देशाः समाप्यन्ते विशिष्टार्थविधानतः॥ १॥

यथाश्रुतिगृहीतानि तावत्सन्तम्, असन्तं वा भूतमर्थमन्वाचक्षते, न धर्माधर्मौ। न चाध्याहारादिभिस्तत्प्रतिपादनम्। अपरिपूर्णेषु खल्वध्याहारादयः, परिपूर्णानि चैतानि, 'स एवैनं भूतिं गमयती'ति विशिष्टार्थप्रतिपादनादर्थान्तराकाङ्क्षाभावात्। अनाकाङ्क्षत्वादेव च न सन्निहितेनापि 'वायव्यं श्वेतमालभेत' तै. सं. २।१।१ इत्यनेनैकवाक्यता। विशिष्टार्थप्रतिपादनमेव हि लोके पदानां कार्यमवधारितम्, न प्रयोजनवदर्थप्रतिपादनम्, येन तल्लिप्सया विध्येकवाक्यता कल्प्येत। आख्यायिकारूपाणां बहुलमुपलब्धेर्लोके। स्वाध्यायविधिवशाद्वेदस्य कृत्स्नस्य प्रयोजनवदर्थपर्यवसानमवगतमिति चेत्। न। दृष्टोऽर्थस्तेनानुसर्तव्यः, न तद्वशेनार्थकल्पना, तद्वरमदृष्टार्थता स्वाध्यायाध्ययनस्य। तन्न तावदर्थवादानामाकाङ्क्षा।

नापि विध्युद्देशस्य, तस्यापि विशिष्टभावनाविधानेन निराकाङ्क्षत्वात्। नच प्रवर्तनाय प्राशस्त्यापेक्षा। विधित एवानपेक्षात्समीहितसाधनभावावगमेन प्रवृत्तिसिद्धेः। नवार्थवादैः प्राशस्त्यं प्रतिपाद्यते, भूतार्थमात्रप्रतिपादनात्। लक्षणया हि तेभ्यः प्राशस्त्यं गम्यते, नच श्रौतस्यार्थस्य सम्भवे सा युक्ता। एकवाक्यतया च लक्षणा स्यात्। नच तस्यां प्रमाणमस्ति, तस्मादानर्थक्यम्। एवम् मन्त्रनामधेययोरपि दर्शयितव्यम्, ताभ्यामपि धर्माधर्मप्रमित्यनुदयात्। तस्मादेषामप्रामाण्यम्, तेन न समस्तो वेदः प्रमाणमित्यवधारणा सिध्यति—इति। सिद्धान्तस्तु—'विधिनात्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः'—

स्वाध्यायविधिना वेदः पुरुषार्थाय नीयते।
सर्वस्तेनार्थवादानां प्राशस्त्येन प्रमाणता॥ २॥

स्वाध्यायाध्ययनविधिना दृष्टार्थत्वात्सकलस्य वेदस्य प्रयोजनवदर्थपर्यवसानम् बोधितम्। अर्थवादानाञ्च भूतार्थप्रतिपादनेन प्रयोजनानवाप्तेः, यस्ततो लक्ष्यमाणः क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यतीति प्राशस्त्यरूपोऽर्थः, सोऽनन्तरप्रवृत्तविध्युद्देशाकाङ्क्षितत्वात्प्रयोजनाकाङ्क्षां शक्नोति पूरयितुमिति गृह्यते। स्वाध्यायविधिरेव च प्रयोजनवदर्थपर्यवसानं बोधयन् प्राशस्त्यपरतया विना तदनुपपत्तेः तात्पर्यमेषां बोधयति, तात्पर्याच्च लक्षणासिद्धिः, ततश्चैकवाक्यत्वम्। यत्तु दृष्टोऽर्थः स्वाध्यायाध्ययनविधिनानुसर्तव्यः, न तद्वशेनार्थकल्पनेत्युक्तम्, तत्सत्यम्, लाक्षणिकोऽप्यर्थो दृष्ट एव।

दृश्यत एव हि श्रौतार्थद्वारेण तत्संबन्धिन्यर्थान्तरे प्रत्ययः। संभवति तु श्रौतपरत्वे तात्पर्याभावान्न लक्षणाङ्गीक्रियते। अतश्च स्वाध्यायविधिनार्थवादस्यापि पुरुषार्थपर्यवसानं बोधयता परंपरयापि दृष्टलाभे स्वर्गादिकल्पनानुप-

पत्तेर्भूतार्थमात्रस्याप्रयोजनत्वात्प्राशस्त्यपरत्वं लक्षणयाङ्गीक्रियते। तद्धि पुरुषप्रवर्तनाय विधिरपेक्षते।

यत्तु स्वयमेव विधिः समीहितसाधनतां बोधयन्नलमेवानपेक्षः प्रवर्तयितुमित्युक्तम्। तत्रोच्यते। सत्यम्, विधिरेव प्रधानं प्रवृत्तिकारणम्, तस्यैव त्वनुग्राहिका प्राशस्त्यावगतिः। फले हि निसर्गसुन्दरे स्वयमेव लिप्सा भवति, तत्साधने तु दुःखाकरे स्वतस्तावद्द्वेष एव, अवश्यञ्च साधने प्रवर्तमानस्य तत्रैव रुच्या भवितव्यम्। हितसाधनत्वावगतिरपि तत्रैव च रुचिम् जनयन्ती प्रवृत्तिहेतुः स्यात्, नान्यथा, सा च पुरुषेभ्यः प्रमादालस्यादियुक्तेभ्यः कर्म दुःखात्मकं रोचयन्ती गुणकथनमपेक्षते। अवगतसमीहितसाधनभावमपि कर्मारुचिगोचरं सत् सताम्, असतां वा गुणानां कीर्तनाद्रोचतेतरामिति सर्वजनीनमेतत्। तदेवं विधीनामध्ययनविधिवशेन दृष्टे पुरुषप्रवर्तने प्रवर्तमानानां प्राशस्त्यापेक्षत्वात् अर्थवादानाञ्चाध्ययनविधिवशेनैव प्रयोजनमपेक्षमाणानां मिथः नियम इति, विधिना सहैककार्यकरत्वात्तद्वदेवार्थवादानामपि सिद्धं प्रामाण्यम्।

एवम्—मन्त्राणामपि स्वाध्यायाध्ययनविधिवशादेव प्रयोजनवत्त्वावगमाद्विधि—स्तुत्योश्च द्वितीयेऽध्याये निराकरणात्प्रकरणादिवशेन प्रधानाङ्गभूतानां दृष्टम् अदृष्टं वा प्रयोजनं कल्प्यत इति नाप्रामाण्यम्। नन्वेवमपि अङ्गत्वे प्रयोजनं लभ्यते, नतु प्रामाण्यम्। नैष दोषः। पदार्थानां वाक्यार्थे प्रामाण्याभ्युपगमात्। उक्तं हि 'पदार्थास्तत्स्मृतिर्वा स्यात्' [ श्लो. वा. अ. ७ श्लो १११ ] इति। तेन मन्त्रविशिष्टमर्थं बोधयतः प्रधानवाक्यस्यार्थे मन्त्राणामपि प्रामाण्यं संभवति। तेन मन्त्राणामपि प्रयोजनवत्त्वात्प्रामाण्यमस्तीत्येतावत्सिद्धम्। प्रयोजनविशेषस्तु प्रस्तुतमर्थवादाधिकरणं परिसमाप्य, पश्चाद्वक्ष्यते। तथा नामधेयस्यापीति, सिद्धम् सकलस्य वेदस्य प्रामाण्यम्।

इति प्रथममर्थवादाधिकरणम्।

———

## विधिवन्निगदाधिकरणम् ( औदुम्बराधिकरणम् )

**विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥ लोकवदिति-चेत् ॥ २० ॥ न पूर्वत्वात् ॥ २१ ॥ उक्तन्तु वाक्यशेषत्वम् ॥२२॥ विधिश्चानर्थकः क्वचित्, तस्मात्स्तुतिः प्रतीयेत, तत्सामान्यादितरेषु तथात्वम् ॥ २३ ॥ प्रकरणे संभवन्नपकर्षो न कल्प्येत, विध्यानर्थक्यं हि तं प्रति ॥ २४ ॥ विधौ च वाक्यभेदः स्यात् ॥ २५ ॥**

पूर्वोक्ताक्षेपेण त्विदमारभ्यते—यदुक्तं नानर्थक्यमर्थवादानामिति, तद्गृह्णीमः, स्तुत्यर्थत्वन्तु केषुचिन्न मृष्यामहे। यथा—'औदुम्बरो यूपो भवति, ऊर्ग्वा उदुम्बरः, ऊर्क्पशवः, ऊर्जैवास्मा ऊर्जं पशूनाप्नोति, ऊर्जोवरुध्यै' तै. सं. २–१–१ इत्येवमादिषु विधिसंभवादित्येवमाक्षिप्यते।

अत्रैवं विचार्यते—किमौदुंवरो यूपो भवतीत्यौदुंबरताया 'ऊर्जोवरुध्यै' इति फलम्, उत सर्वोऽयमर्थवाद इति। तदर्थं च किमेवञ्जातीयकेन विधिविभक्ति-रहितेन साधनत्वमौदुम्बरतायाः शक्यते प्रतिपादयितुम्, न वेति।

तत्र पूर्वपक्षः—'ऊर्जं पशूनाप्नोति, ऊर्जोवरुध्यै' इत्यनेन पशूनां साध्यत्वम् गम्यते श्रुत्या, लक्षणया तु प्राशस्त्यम्। फलविधौ चार्थवत्त्वम्, आनर्थक्यमर्थ-वादत्वे ! साध्यस्य च साधनापेक्षत्वात्तत्सन्निधावुच्चरितमौदुंवरत्वमसत्यपि विधौ साधनत्वेनावगम्यते। साधनत्वावगमादेव च प्रवृत्तिसिद्धेर्नार्थो विधिना—इति।

सिद्धान्तस्तु—विधावसति भावनाया औदुम्बरताभवनाक्षिप्तायाः सैव भाव्या स्यात्, न फलम्। सन्निहिता च सा, विप्रकृष्टन्तु फलम्। अतोऽपि न फलसंवन्धः। तेन यद्यपि तावदूर्जं पशूनाप्नोति, ऊर्जोवरुध्यौ, इत्यनेन फलामभि-धातुम् शक्यते, तथाप्यविहितस्यौदुम्बरत्वस्य फलवचनमनर्थकमित्यर्थवादत एवात्र विधिरुन्नेतव्यः। नच स्तुतित्वेन विधिशक्तिमुपजनय्य, पुनस्तेनैव फलकल्पना संभवति, वाक्यभेदप्रसङ्गात्। तस्मादर्थवादः।

नचैवंविधेन कामशब्दरहितेन शक्यते फलं प्रतिपादयितुमिति पर्णमय्य-धिकरणे वक्ष्यामः। अत्र तु साधनांशविचारमुखेनार्थवादत्वमुक्तम्। तत्र तु साध्यांशविचार इत्यपौनरुक्त्यम्। अथवा साध्यांशेऽप्यत्रैव विचारिते, रात्रिसत्र-न्यायेन फलपरत्वमप्यपापश्लोकश्रवणादीनामाशङ्क्य, निराकरिष्यते चतुर्थे।

न चौदुम्बरतायाः फले विधीयमानायाः प्रकरणादाश्रयो लभ्यते, तत्रास्मादेव वाक्यादाश्रयकल्पनायां वाक्यभेदः। पशुयागो हि प्रकृतः, सः तावदयोग्यः। यत्र हि गुणः कारकतामापद्यते, स आश्रयः। यथा-होमो दध्नः, न चौदुंबरता शक्नोति यागे कारकीभवितुम्। तदाश्रयत्वे च यूपग्रहणानर्थक्यम्, अनुवादासंभवात्। यत्तु पशुनियोजनं यूपद्वारेण योग्यम्, तदपि सह यूपेनैव-अप्रकृतम्। न च प्रकृतिवच्छब्देन तस्य सन्निधिसंभवः। स हि प्राकृतमित्थंभावम् सामान्येन सन्निधापयति, तत्र न यूपस्य स्वरूपेण विपरिवृत्तिरस्ति। अविपरिवर्तमानञ्च न शक्नोत्याश्रयाकाङ्क्षां पूरयितुम्। तादृशी च विपरिवृत्तिर्जुह्वादीनामप्यस्तीति, तेषामप्याश्रयत्वं स्यात्। तत्र तथैव यूपग्रहणानर्थक्यम्। तत्र वाक्येनैवाश्रयसंबन्धे फलसंबन्धे च विधीयमाने वाक्यभेदः।

एकदेशिनां तु वाक्येनैवाश्रयसंबन्धम्, फलसंबन्धञ्च गुणाधिकारेऽभ्युपगच्छतामिहापि तथैव संभवात्, यदेकवाक्येन संबन्धद्वयासंभवादप्रामाण्यमाशङ्क्य, तन्निरासार्थं स्तुत्यर्थत्वमापादितम्, तदनर्थकम्।

कश्चित्त्वाह-यूपस्यादृष्टत्वात्तत्संबन्धो दधिहोमसम्बन्धवन्न लोकतो लभ्यते, ततस्तस्य, फलसम्बन्धस्य च नैकस्माद्वाक्यात्सिद्धिः—इति। तदसत्। यद्यपि यूपत्वमदृष्टम् तेन तु निमित्तेन यस्मिन्काष्ठे यूपशब्दो वर्तते, तस्य चौदुम्बरजातेश्च लौकिक एव सम्बन्धः। यदि चैवं न लभ्यते, 'खादिरं वीर्यकामस्य यूपं कुर्यादि' त्यत्रापि एकवाक्यता न स्यात्। अस्तु तत्र वाक्यभेद इति चेत्। वार्तमेतत्, एकवाक्यत्वावगमात्। यदि चात्रैकस्मिन्नाख्याते वाक्यभेदः, तथासत्यौदुंबरो यूपो भवति, ऊर्जं पशूनाप्नोती'त्याख्यातद्वये सुतरां वाक्यभेदः, प्रामाण्यञ्च संभवतीति, दूरापेतमप्रामाण्यम्।

अथ खादिरो यूपो भवतीत्येतद्वाक्यविहितयूपसम्बन्धाश्रयणेन फलसम्बन्धविधिः—यः खादिरो यूपः, स वीर्यकामस्येति। तथासति खादिरत्वं न क्रत्वर्थं स्यात्, उक्थ्यवत्, व्यूढवच्च फलार्थमेव स्यात्। उभयार्थञ्चैतदिष्टं खादिरत्ववदुभयार्थतां दधिग्रहस्य वदतो निबन्धनकारस्यापि। तस्माद्यूपाश्रितस्य खादिरत्वस्येवौदुंबरत्वस्य फलार्थविधिसंभवान्नाप्रामाण्यशङ्केत्यास्तां तावत्। तस्मादौदुंबरता यूपोद्देशेन विधीयते, तत्स्तुतिरियमूर्जोवरुध्या इति सिद्धम्।

इति द्वितीयं विधिवन्निगदाधिकरणम्।

हेतुवन्निगदाधिकरणम् ॥ ३ ॥

हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥ स्तुतिस्तु शब्दपूर्वत्वात् अचोदना तस्य ॥ २७ ॥ व्यर्थे स्तुतिरन्याय्येति चेत् ॥ २८ ॥ अर्थस्तु विधिशेषत्वाद्यथा लोके ॥ २९ ॥ यदि च हेतुरवतिष्ठेत निर्देशात्, सामान्यादिति चेदव्यवस्था विधीनां स्यात् ॥ ३० ॥

एवमानर्थक्यप्रतियोगिनः,विधिप्रतियोगिनश्चार्थवादा विचारिताः। इदानीम् हेतुप्रतियोगिनो विचार्यन्ते। एवं श्रूयते–'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' शत. ब्रा. २.४.३.२३ इति। तत्र संशयः-किं शूर्पेण होमे कर्तव्येऽन्नकरणता हेतुः, उतार्थवादः–इति। तत्र हिशब्दश्रुत्या हेतुत्वं गम्यते, लक्षणया प्राशस्त्यम्। अनर्थकप्रायश्चार्थवादः। हेतुस्त्वर्थवान्। कः पुनरर्थो हेतोः ? येन येनान्नं क्रियते, शूर्पादन्येनापि दर्वीपिठरादिना, तेन तेनापि होमसिद्धिर्हेतोः प्रयोजनम्। कथमप्रसिद्धायां व्याप्तौ हेतुव्यपदेशः। अत एव हेतुव्यपदेशाद्व्याप्तिमन्तरेणानुपपद्यमानात् व्याप्तिवचनं कल्प्यते,–येन येनान्नं क्रियते, तेन तेन होतव्यमिति। तेन वचनेन सर्वान्नकरणविधायिना शूर्पस्यापि होमसाधनत्वसिद्धेश्शूर्पेण जुहोतीत्यवयुत्यानुवादः। तेनेदृशमिदं वाक्यं श्रुतानुमितैकदेशनिष्पन्नं शूर्पस्य होमसाधनत्वमन्नकरणत्वाद्धेतोः, अतः शूर्पम्, अन्यद्वा यदन्नकरणं, तेन होतव्यमिति पूर्वपक्षः।

सिद्धान्तस्तु–शूर्पस्य तृतीयाश्रुत्या करणत्वं गम्यते, न तदानुमानिकैर्दर्वीपिठरादिरादिभिर्विकल्पितुमर्हति। न च वेदेनोच्यमानं शूर्पस्य होमसाधनत्वम् हेतुमपेक्षते, वेदस्यैव तत्र प्रमाणत्वात्। अर्थवादस्त्वपेक्षितः प्ररोचनार्थत्वेन, तस्मादर्थवादत्वम्। एवंचाप्रसिद्धव्याप्तिवचनकल्पनाक्लेशो न भविष्यति। क्रियते इति चावर्तमाने वर्तमाननिर्देशः प्ररोचनार्थत्वे युक्तो भवति। नहि भूते भाविनि वा तादृशी प्रीतिर्यादृशी वर्तमाने। तेन रुच्यर्थत्वेन लक्षणया वर्तमाननिर्देशो युक्तः। विध्यर्थत्वे तु निष्प्रमाणकं लक्षणाश्रयणम्। न च श्रौतेन वर्तमानान्नक्रियेण मुख्यान्नकरणेन शक्यते होमः कर्तुम्। तस्मादर्थवादत्वम्।

इति तृतीयं हेतुवन्निगदाधिकरणम्।

मन्त्राधिकरणम् ॥ ४ ॥

तदर्थशास्त्रात् ॥३१॥ वाक्यनियमात् ॥३२॥ बुद्धशास्त्रात् ॥३३॥ अविद्यमानवचनात् ॥ ३४ ॥ अचेतनेऽर्थबन्धनात् ॥ ३५ ॥ अर्थविप्रतिषेधात् ॥३६॥ स्वाध्यायवदवचनात् ॥३७॥ अविज्ञेयात् ॥३८॥ अनित्यसंयोगान्मन्त्रानर्थक्यम् ॥३९॥ अविशिष्टस्तु वाक्यार्थः ॥४०॥ गुणार्थेन पुनःश्रुतिः ॥४१॥ परिसंख्या ॥४२॥ अर्थवादो वा ॥४३॥ अविरुद्धं परम् ॥ ४४ ॥ संप्रैषे कर्मगर्हानुपालम्भः संस्कारत्वात् ॥४५॥ अभिधानेऽर्थवादः ॥ ४६ ॥ गुणादविप्रतिषेधः स्यात् ॥ ४७ ॥ विद्यावचनमसंयोगात् ॥ ४८ ॥ सतः परमविज्ञानम् ॥ ४९ ॥ उक्तश्चानित्यसंयोगः ॥ ५० ॥ लिङ्गोपदेशश्च तदर्थवत् ॥ ५१ ॥ ऊहः ॥ ५२ ॥ विधिशब्दाश्च ॥ ५३ ॥

गतोऽर्थवादप्रसङ्गः, मन्त्रेष्विदानीं चिन्ता, तेषामपि स्वाद्येऽधिकरणे आनर्थक्यमाशङ्क्य स्वाध्यायविधिबलेनार्थवत्तया भवितव्यमित्येतावदपर्यवसितम् कथितम्, तत्पर्यवसानायेदानीमर्थविशेषश्चिन्त्यते। तेषाञ्च क्रम–प्रकरणाभ्याम् क्रत्वङ्गत्वं भवत् किं दृष्टेनैवार्थप्रकाशनोपकारेण भवति, किंवोच्चारणमात्रेणादृष्टम् कुर्वताम्–इति।

तत्र —

> यदि दृष्टार्थतैव स्यान्मन्त्राम्नानमनर्थकम्।
> प्रत्यायनाददृष्टञ्चेत्तदुच्चारणतो वरम् ॥ ३ ॥

शक्यते ह्युपायान्तरेणापि प्रयोगवेलायामर्थप्रकाशनम्। तद्यदि तावन्मात्रमेव कार्यं मन्त्राणां स्यात्, नित्यवदाम्नानमनर्थकं स्यात्। अथ तु मन्त्रप्रत्यायनाददृष्टं कल्प्येत, ततो यद्दूरमपि गत्वा कल्प्यमदृष्टम्, तदुच्चारणादेव कल्पयितुम् युक्तम्। तद्धि पुरुषव्यापारगोचरः। प्रत्यायनं तु तस्मिन्ननुष्ठिते स्वयमेव भवति, स्वव्यापारे च पुरुषो नियुज्यते, यत्र च नियुज्यते, तत्र फलाकांक्षा। तेन याऽवश्यंभाविन्यदृष्टकल्पना, सा तत्रैव युक्ता, न तु तस्य प्रत्यायनार्थत्वम्,

अत्यायनन्त्वदृष्टार्थमिति युक्तम्। तस्माददृष्टार्था मन्त्राः। तथा च तदर्थशास्त्राद्युपपत्तिः। इतरथा परिसंख्याद्याश्रयणे क्लेशः स्यात्-इति।

अत्राभिधीयते—

यस्य दृष्टं न लभ्येत स्यात्तस्यादृष्टकल्पना।
अनुष्ठेयस्मृतेश्चेह मन्त्रोच्चारणमर्थवत्॥ ४॥
स्मरणं च प्रयोगार्थं प्रयोगाच्च फलोदयः।
एवं दृष्टार्थतालाभान्नादृष्टपरिकल्पना ॥ ५॥

यस्तु मन्त्रेणैव स्मर्तव्यमिति नियमः, तस्य न किंचिद्दृष्टमस्तीत्यदृष्टम् कल्प्यते। मन्त्रोच्चारणस्य तु दृष्टेनैवार्थवत्त्वात्, तत्रानुपपत्त्येकशरणमदृष्टकल्पनमनवकाशम्। तदर्थशास्त्रादयोपि गुणार्थार्थवादपरिसंख्यादिभिः परिहृताः।

तस्मात्प्रकाशनेनैवं मन्त्राणामुपकारिता।
उपायनियमादेव त्वदृष्टपरिकल्पनम्॥ ६॥

इति चतुर्थं मन्त्राधिकरणम्।

इति शास्त्रदीपिकायां प्रथमाध्यायस्य द्वितीयः पादः समाप्तः॥ २॥

---

# अथ प्रथमाध्यायस्य तृतीयः पादः

## स्मृत्यधिकरणम् ॥ १॥

धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्॥ १॥

अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्॥ २॥

'कथंलक्षणको धर्मः' इत्येतदिह लक्षणार्थ इत्युक्तम्। तत्र प्रथमे पादे चोदनाप्रामाण्यं सिद्धम्। द्वितीये त्वर्थवादादेः। एवं कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम्। इदानीं पौरुषेयीषु स्मृतिषु, आचारेषु च वैदिकपरिगृहीतेषु चिन्ता।

यद्यपि चोदनाप्रामाण्यमप्रामाण्येऽपि स्मृतीनां न विहन्यते, तथापि किंलक्षणो धर्म इति जिज्ञासाधिकारात्स्मृतिप्रामाण्यं लक्षणे संगतम्।

नन्वप्रामाण्ये स्मृतीनां वेदस्यापि तत्सापेक्षत्वादप्रामाण्यं स्यात्। 'यां जनाः प्रतिनन्दन्ती'त्ययं मन्त्रो रात्रिदेवताककर्माङ्गत्वेन प्रतीयते। स्मार्ते च कर्मणि रात्रिर्देवतेति, तदपेक्षस्य मन्त्रस्य तदप्रामाण्यादप्रामाण्यं स्यात्, तत्सामान्यादितरेषु तथात्वमिति सकलस्य वेदस्याप्रामाण्यम्। तेन वेदप्रामाण्यसिध्यर्थमेव स्मृतिप्रामाण्यमिति संगतिः—इति।

नैतदेवम्। यदा हि स्मृतेरप्रामाण्यम्, तदा मन्त्रस्य स्मार्तकर्माङ्गत्वे किम् प्रमाणम्। न तावल्लिङ्गम्, तस्य सामान्यसंबन्धप्रमाणसापेक्षत्वात्। नापि स्मृतिवाक्यम्, तस्याप्रामाण्यात्। यद्यपि च लिङ्गमात्रं विनियोजकं स्यात्, तथापि फलवदङ्गत्वेनाफलस्य विनियोगात्, स्मृत्यप्रामाण्ये च स्मार्तस्य कर्मणः फलवत्त्वाभावान्न तादर्थ्यं मन्त्रस्य, येन सापेक्षता स्यात्। सत्यपि च मन्त्राप्रामाण्ये, सकलस्याप्रामाण्यं कुतस्त्यम्। नहि मन्त्रस्य स्वारसिकमप्रामाण्यम्, येन शब्दमात्रे स्यात्, अपितु सापेक्षैकवाक्यत्वकृतम्। नच कृत्स्नस्य तदस्तीति, कथमप्रामाण्यम्? तस्मान्नैवं संगतिः संभवतीति, पूर्वोक्तैव संगतिर्ज्यायसी, धर्मप्रमाणचिन्ताधिकारात्स्मृतीनामपि तत्र प्रामाण्यं प्रतिपाद्यत इति। नचैवं चोदनैवेति प्रतिज्ञाव्याकोपः। तन्मूलत्वेन, तदन्तर्भावेण वेतरेषां प्रामाण्यात्स्वातन्त्र्येण प्रामाण्याभावात्।

तदिह किं स्मृत्याचाराणां धर्मे प्रामाण्यम्, उत नेति विचार्यते। तदर्थम् श्रुतिमूलत्वमेषाम्, उत भ्रान्त्यादिमूलत्वमिति विचारयितव्यम्।

तत्र—

प्रायेणानृतवादित्वात्पुंसां भ्रान्त्यादिसंभवात्।
चोदनानुपलब्धेश्च श्रद्धामात्रात्प्रमाणता ॥ ७ ॥

संभवद्भ्रमविप्रलम्भेषु पुरुषेषु न तावन्निर्विचिकित्समेव प्रामाण्यं स्वध्यवसानम्। अतश्चाननुष्ठानात्फलतोऽप्रामाण्यमेव। किंच नैषां प्रत्यक्षादिमूलत्वेन प्रामाण्यम्, तेषां धर्माधर्मयोरप्रवृत्तेः। न च स्वातन्त्र्येण वेदवत्, पौरुषेयत्वात्। न चोदनामूलत्वेन, तदनुपलम्भात्। नह्यनुपलभ्यमानाश्चोदनाः मूलत्वेन स्वप्रमेयं प्रतिपादयन्ति। न चासां प्रत्यक्षेणोपलम्भसंभवः, अनुच्चार्यमाणत्वात्। उच्चार्यमाणत्वे वा स्मृतिप्रणयनवैयर्थ्यम्। प्राक्पठिता अपि संप्रति पुरुषक्षयादुत्सन्ना इति चेत्। न। विकल्पासहत्वात्। यो ह्युत्सादनं चोदनानां वदति,-

स वक्तव्यः—किमेका काचिच्छाखा स्मार्तश्रुतिसङ्घात्मिका पूर्वमासीत्, सा चेदानीमध्येतृक्षयादुत्सन्नेति कल्प्यते, किंवा बह्वीषु शाखास्वितस्ततः स्मृतिमूलभूताः श्रुतयः पठिताः संप्रत्युत्सन्ना इति। तत्र सहस्रं सामशाखाः, एकशतमध्वर्युशाखाः, एकविंशतिशाखं बाह्वृच्यमित्यादिशाखापरिमाणस्य परम्परया सर्वलोकस्मरणान्नाधिका शाखा संभावयितुं शक्यते। नापि पठ्यमानानामेव शाखानामवहिताध्येतृकाणां मध्ये कासांचिच्चोदनानामुत्सादसंभवः। नच संप्रत्यपि पठ्यन्त एव विप्रकीर्णस्मृतिमूलभूताः श्रुतय इति युक्तम्, स्मृतिप्रणयनवैयर्थ्यादित्युक्तम्। तन्न तावदिदानीम्, अतीतकाले वा पठिताः श्रुतयः स्मृतीनां मूलम्।

नापि नित्यानुमेयाः, अन्धपरम्परान्यायात्। या हि चोदना न कदाचिदुच्चार्यते, तस्यां सर्वपुरुषप्रत्यक्षादिप्रसराभावाद्दुर्लभतरमस्तित्वम्। ननु स्मृतिलिङ्गवशेनानुमानं प्रसरत्येव सर्वेषां लिङ्गादिकल्प्यास्विव श्रुतिषु। विषम उपन्यासः। लिङ्गादयो हि सर्वपुरुषप्रत्यक्षाः श्रुतिमन्तरेणानुपपद्यमानाः युक्तं यत्तस्यां निश्चयमादधति। स्मृतिवाक्यरचना तु पौरुषेयी पदार्थविषयोपलभ्यते, तद्विषयमेव रचयितुर्ज्ञानं कल्पयति। अष्टकाकर्तव्यताविषयञ्च स्मृतिवाक्यमिति, नूनमयमष्टकाकर्तव्यतां वेदेत्येतावत्प्रथमं कल्पयति, न श्रुतिस्वरूपम्, नापि श्रुतिज्ञानम्। एवमर्थज्ञाने स्मृतिकारस्य कल्पिते, तस्मात् ज्ञानलिङ्गाज्ज्ञेयभूतार्थानुमानम्, न श्रुतिकल्पनम्। एवं स्मृतिकारस्यापि स्मृत्यन्तरलिङ्गादर्थे एवानुमानमिति, निष्प्रमाणिका श्रुतिकल्पना स्यात्। अथोच्येत। न खलु परकीयेन ज्ञानेन झटित्येव ज्ञेयनिश्चयः, मूलानुसंधानसापेक्षत्वात्। तत्र यदि स्मृतिकारस्यार्थविषयज्ञानमूलमनुसंदधानः स्मृत्यन्तरमेव संभावयेत्, तदपि च ज्ञानस्यैव लिङ्गम्, नार्थस्य। एवं ततः पूर्वतरमपि स्मरणं ज्ञानस्यैव लिङ्गम्, नार्थस्येति न क्वचिदर्थनिश्चयो लैङ्गिको लभ्यत इति, श्रुतिरेव कल्पयितव्या।

यद्येवम्, श्रुतावपि तुल्यमेवैतत्, स्मृतिकारस्य मूलतया श्रुतिज्ञानमेव प्रथमम् कल्प्यते, न श्रुतिसद्भावः। श्रुतिविषयेण तु ज्ञानेन ज्ञेयभूतश्रुतिनिर्णयः, परज्ञानेन च तद्विषयश्रुतिनिश्चयो मूलानुसंधानसापेक्षः। मूलञ्च स्मृतिकारस्य स्मृत्यन्तरमेव, तदपि चार्थज्ञानद्वारेण श्रुतिज्ञानस्यैव लिङ्गम्, न श्रुतिसद्भावस्येति न क्वचित्कस्यचिदपि श्रुतिसद्भावनिश्चयो लैङ्गिको लभ्यते। लिङ्गादीनि तु श्रुतिसद्भावमेव कल्पयन्तीत्युक्तो विशेषः। तेन यदि परकीयेण ज्ञानेन प्रागेवार्थनिश्चयः, ततोऽर्थस्मरणपरम्परयार्थस्यैवानुमानान्न श्रुतिसिद्धिः। अतः स्मृत्यन्तरमेव मूलं स्यात्, अन्धपरम्परया च रूपनिश्चयस्तदा स्यात्। चैत्यवन्दनादीनामपि पुंवाक्य-

परम्परया धर्मत्वानुमानं स्यात्। अथ मूलानुसंधानसापेक्षम्, ततो यथैव, वयम्, मानवीयात्स्मरणान्मनोरर्थविषयं श्रुतिविषयञ्च ज्ञानमात्रं कल्पयित्वा श्रुतिसद्भावमनिश्चित्य,तन्निश्चयाय मनोः श्रुतिसद्भावमूलं प्रमाण मृगयामहे, तथा मनुरप्यन्यस्य, सोऽप्यन्यस्येति, न श्रुतिसद्भावसिद्धिः। एवमुभयथापि श्रुतिर्नित्यानुमेया न सिध्यतीति, न तन्मूलत्वेन प्रामाण्यं स्मृतीनाम्। अतः श्रद्धामात्रविजृम्भितं स्मृतिप्रामाण्यमिति प्राप्ते—

अभिधीयते—

वैदिकैः स्मर्यमाणत्वात्तत्परिग्रहदार्ढ्यतः।
संभाव्यवेदमूलत्वात्स्मृतीनां वेदमूलता ॥ ८ ॥

य एव हि वेदस्यैव धर्ममूलता, नान्यस्येति आस्थिता मन्वादयः, तेषामष्टकाधर्मादिषु धर्मत्वस्मृतिर्न कथञ्चिदुपपद्यते, न यदि वेदमूलता। तथा वैदिकानामेवाऽविगीतपरंपरया परिग्रहो वैदिकत्वस्मरणञ्चैषु शिष्टानां नासति वेदमूलत्वेऽवक्लपते। संभवति च त्रैवर्णिकानां वेदसंयोग इति तन्मूलत्वमेवाध्यवसीयते।

कथमनुच्चारितानां मूलत्वोपपत्तिरिति चेत्,? उच्चार्यन्त एव स्मृतिमूलभूताः श्रुतयः संप्रत्यपि विप्रकीर्णाः काश्चित्कचित्कस्यांचिच्छाखायाम्, विप्रकीर्णत्वाच्च शाखान्तराध्यायिभिः शाखान्तरगतानामनुपलम्भात्तादर्थ्येनार्थवन्निबन्धनम्, तदुपलम्भेपि वा मन्दधीभिरनुपसंहरणीयानामुपसंहारफलं स्मृतिप्रणयनमिति, न वैयर्थ्यम्। अतः स्मृतयः प्रमाणमिति सिद्धम्।

इति प्रथमं स्मृत्यधिकरणम्।



विरोधाधिकरणम् ॥ २ ॥

## विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ॥ ३ ॥

उत्सृष्टस्य स्मृतिप्रामाण्यस्यापवादः क्रियते। अत्र प्रत्यक्षश्रुतिविरुद्धाः स्मृतयः उदाहृत्य विचार्यन्ते—किं प्रमाणम्, अप्रमाणं वेति। तदर्थं च पूर्ववदेव श्रुतिमूल-

त्वम्, भ्रान्त्यादिमूलत्वं वेति चिन्तनीयम्। अत्र पूर्वाधिकरणं समस्तमेव पूर्वः पक्षः। प्रत्यक्षश्रुतिविरोधात् मूलश्रुतिकल्पनानवक्लृप्तिः, द्वयसंभवात्। व्रीहि-यवादिश्रुतिवत्। यत्र हि द्वयोरसंभवः, तत्रैकविषयेण प्रत्यक्षेणेतरविषयकमनुमानम् प्रमेयापहारादनायासेन निराक्रियते, वह्नाविव शैत्यानुमानम्। यत्र तु द्वयसंभवः, तत्र शीघ्रप्रवृत्तमपीतरन्नेतरस्य विषयमपहरतीति, तद्विषयमनुमानं न शक्नोति प्रतिषेद्धुम्। संभवति च युगपदनुपसंहरणीयार्थमपि श्रुतिद्वयं व्रीहियव-बृहद्रथन्तर-ग्रहणादिविषयश्रुतिवदिति, प्रत्यक्षेणापि स्पर्शनविधिना सर्ववेष्टनश्रुतिविषय-मनुमानं न शक्यं निराकर्तुम्। कथं तर्हि श्रुतिलिङ्गादिषु पूर्वपूर्वेणोत्तरोत्तरस्य बाधः। तत्रापि हि श्रुतिद्वयसंभवात्, न कॢप्तया कल्प्या निराकर्तुं शक्यते। उच्यते। नैव तत्र प्रमेयापहारनिबन्धनो बाधः, किंतु कल्पनामूलोच्छेदात्। यावद्धि मन्त्राम्नानमनवगतप्रयोजनम्, प्रकरणी चाकृतार्थः, तावदेव तत्सिध्यर्थं श्रुतिकल्पनं प्रमाणवत्। यदा तु कॢप्तया द्वयोरपि नैराकाङ्क्ष्यं, तदा मूलोच्छेदा-दाकाङ्क्षाधीना श्रुतिकल्पना नैवोन्मज्जति। अत्र तु प्रत्यक्षश्रुत्या न स्मृतेर्मूलाकाङ्क्षा निवर्त्यते। यतो मूलोच्छेदादनुमानविरोधः स्यात्। यदि परं प्रमेयापहारादग्ना-विव शैत्यानुमानं प्रत्यक्षेण बाध्यते। नचैवं संभवति, श्रुतिद्वयसंभवात्। अग्नेर्हि शैत्यौष्ण्ये न संभवतः, परस्परोपमर्दकत्वात्तयोः। अतः प्रत्यक्षेणौष्ण्येन शैत्यस्यापहृतत्वान्न तद्विषयमनुमानमुदेतुमुत्सहते। अत्र च संभवति श्रुतिद्वयम् व्रीहियवादिवदित्युक्तम्।

अथवा श्रुतिद्वयप्रमेये न मिथो विरुद्धे, नहि व्रीहिशक्त्या यवशक्तिर्बाध्यते, सा वा तया, स्पर्शनशक्त्या वा वेष्टनशक्तिः, सा वा तया। शक्तिमात्रं हि विधेः प्रमेयम्, अतोऽत्रानुमानस्य प्रत्यक्षेणाविरोधाद्विरुद्धानामपि प्रामाण्यमिति प्राप्ते—

अभिधीयते—

अप्रामाण्यं विरुद्धानामशक्त्यार्थविधानतः।<br>
औदुंबरीं न शक्नोति सर्वां वेष्टयितुं स्पृशन्॥ ८॥

वेष्टितां वापि संस्प्रष्टुमतोऽन्योन्यविरोधतः।<br>
प्रमेयापहृतेरेव बाधः स्यादग्निशैत्यवत्॥ ९॥

अशक्यार्थविषयता हि मूर्धाभिषिक्तमप्रामाण्ये निदानं विधीनाम्। सागरम् तरेदित्यादिवत्, अशक्यं च स्पृशता वेष्टयितुम्, वेष्टयता स्प्रष्टुं वा, अतो वेष्टयेत् स्पृशेदित्यशक्यार्थविधानान्न तावदुभयोरपि प्रामाण्यं संभवतीत्यवश्यमन्यतरत्-बाधितव्यम्।

ननु शक्तिमात्रं विधेः प्रमेयम्, संभवति चाननुष्ठीयमानयोरपि शक्तिरिति, सत्यप्यनुष्ठानविरोधे प्रमेयभूतशक्त्यविरोधादुभयोः प्रामाण्यमुपपन्नमिति, नैकस्यापि बाधो युज्यते। तत्किमिदानीं सागरं तरेदग्निना सिञ्चेदित्यादीनामपि प्रामाण्यम्, अननुष्ठीयमानस्यापि शक्तिसद्भावात्। तथा सामान्यविशेषशास्त्रयोरविरोधः स्यात्, आहवनीयपदयोरपि शक्तिसंभवात्। अतश्चाहवनीयस्य न पदेन बाधः स्यात्। अविरुद्धस्य दुर्बलस्यापि बाधायोगात्। नचात्र श्रुत्यादिभिरिव लिङ्गादीनां मूलोच्छेदेन श्रुतिकल्पनाविरोधाद्बाधसंभवः। सामान्यशास्त्रस्यापि प्रत्यक्षत्वात्तन्मात्रेण होमान्तरेष्विव पदहोमेऽप्याहवनीयसिद्धेः। अतोऽत्र सामग्रीविरोधासंभवात्प्रमेयविरोधादेव बाधोऽङ्गीकर्तव्यः। शक्तिमात्रे च प्रमेये तद्विरोधाभावान्न विरोधः सिध्येत्। एवमुत्पत्त्युत्पन्नशिष्ट–नित्यनैमित्तिकादिषु प्रसङ्गो दर्शयितव्यः। तस्मादवश्यमनुष्ठानविरोधे शास्त्रविरोधोऽङ्गीकर्तव्यः।

किंच न शक्तिमात्रं भूतार्थकथनवद्विधिना बोध्यते। प्रवर्तनारूपो हि विधिरर्थात्समीहितसाधनशक्तिं बोधयति, प्रवर्तना च अशक्यविषया न संभवतीति स्यादेवाप्रामाण्यम्। यदा तु समीहितसाधनतैव विध्यर्थ इत्याश्रीयते, तदापि न तन्मात्रं विधिः, किंतु कर्तुः समीहितसाधनता, नचाशक्येऽर्थे कर्तृत्वम् संभवतीत्यप्रामाण्यम्। यथोक्तं 'आख्यातशब्दानामर्थं ब्रुवतां शक्तिः सहकारिणी' शा० भा० पृ. ३६९ ति। तेनाशक्यानुष्ठानमर्थद्वयं बोधयतोः प्रमाणयोः प्रमेयविरोधादवश्यमन्यतरत् बाधितव्यम्। तत्र प्रत्यक्षेणानुमानस्य बाधोऽग्नाविव शैत्यानुमानस्येति, सिद्धमप्रामाण्यं स्मृतीनां श्रुतिविरुद्धानाम्।

व्रीहियवादिषु तु द्वयोरपि प्रत्यक्षत्वेनागृह्यमाणविशेषत्वान्नैकेनेतरस्य बाधः संभवति, विरुद्धार्थत्वाच्च न द्वयोराञ्जस्येन प्रामाण्यम्। नचाप्रामाण्यमविद्यमानदोषयोः संभवतीति, गत्यन्तराभावादुभयोरपि पाक्षिको बाधः कल्प्यते। न चैवं शास्त्रस्याप्रामाण्यम्, यथा सामान्यशास्त्रस्य विशेषशास्त्रबाधितस्यापि नाप्रामाण्यम्, तद्वदिहापि।

ननु बाधितं भवति, अप्रमाणं न भवतीति, व्याहतमेतत्। सत्यमेतत्। नत्वत्र पारमार्थिकः शास्त्रार्थो बाध्यते, येनाप्रामाण्यं शास्त्रस्य स्यात्, किंतु प्रतिपक्षमनालोचयतो यः शास्त्रस्य स्वरसतः सार्वत्रिकः प्रत्ययः, सोऽत्र बाध्यते, तद्बाधाच्च पाक्षिकानुष्ठानपरत्वं शास्त्रस्याऽध्यवसीयते। सामान्यशास्त्रस्येव विशेषानाक्रान्तविषयपरत्वमिति, नाप्रामाण्यम्। न चैवं स्मृतिवशेन श्रुतिस्वरूपभङ्गेन स्पर्शनस्य

पाक्षिकत्वं कल्पयितुं शक्यते। स्मृतेः स्वतोऽप्रामाण्येन श्रुतिबाधासामर्थ्यात्, श्रुतिकल्पनस्य च प्रत्यक्षश्रुतिविहितस्पर्शनविरोधेन विरुद्धत्वात्।

ननु पाक्षिकत्वेनापि प्रत्यक्षश्रुतेरुपपत्तेर्यस्मिन्पक्षे सा नास्ति, तत्र स्पर्शाभावेन वेष्टनस्यापि शक्यानुष्ठानत्वात्तद्विषये श्रुतिकल्पनमुपपन्नमिति चेत्। न। इतरेतराश्रयत्वात्। स्वरसतो हि श्रुतिवाक्यादपाक्षिकं स्पर्शनं गम्यते। तस्मिंश्च अपाक्षिके न स्मार्तश्रुतिकल्पनम्, अशक्यत्वात्। नहि स्पृशता वेष्टयितुं शक्यते। तत्र स्पर्शनस्य पाक्षिकत्वे सति शक्यार्थतामासाद्य काल्पनिकी श्रुतिरात्मानं लभते। तस्याञ्च लब्धात्मिकायां तद्विरोधात्स्पर्शनस्य पाक्षिकत्वमिति, इतरेतराश्रयत्वम् स्यात्। अतोऽत्र श्रुत्यसंभवाद्भ्रान्त्यादिमूलकत्वादप्रमाणमेवंजातीयकं स्मरणम्। नह्यसंभवद्भ्रान्त्यादिकं स्मरणं कस्यचिच्छक्यमध्यवसातुम्। संभाव्यमाने तु भ्रान्त्यादौ दृष्टानुगुणाऽदृष्टकल्पना। असति विरोधे कर्तृसामान्याद्वैदिकपरिग्रहदार्ढ्यानुपपत्त्या च श्रुत्यनुमानमिति, न सर्वत्रैकरूप्यम्—इति।

इति भाष्यमतेन द्वितीयं विरोधाधिकरणम्॥ २॥

हेतुदर्शनाधिकरणम्॥ ३॥

## हेतुदर्शनाच्च॥ ४॥

अधिकरणान्तरं वा। अत्र गृह्यमाणकारणं श्रुत्यविरुद्धस्मरणमुदाहरणम्। 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाती' त्यादिकम्। तत्प्रमाणम्, अप्रमाणं वेति विचार्यते। कर्तृसामान्यात्प्रत्यक्षश्रुतिविरोधाभावात्प्रामाण्यमिति प्राप्ते—

उच्यते—न दृष्टे हेतौ हेत्वन्तरानुमानं क्रमते। दृष्टश्चात्र लोभ एव हेतुरिति। तत एव स्मृत्युपपत्तेर्नात्यन्तापरिदृष्टवैदिकवचनकल्पनोपपत्तिः। अतः श्रुतिविरुद्धम्, दृष्टकारणञ्च स्मरणमप्रमाणम्, ततोऽन्यत्प्रमाणमिति।

इति भाष्यमतेन तृतीयं हेतुदर्शनाधिकरणम्।

## अथ वार्तिकमतम् ।

यस्त्वाचार्यैरधिकरणभङ्गो दर्शितः, तत्रायमभिप्रायः। भवेदेवम्—स्मृतेर्बाधः, यदि स्मृतेर्मूलं न कदाचिदपि कैश्चित्कस्यामपि शाखायां पठ्यत इत्यध्यवसितुम् शक्यते, तदा हि तत्र सर्वपुरुषाणामेव प्रत्यक्षप्रसराभावात्केवलं स्मृत्यनुमान-समधिगम्यं श्रुतिवाक्यमनुमानस्य च प्रत्यक्षविरोधेऽनुदयात्सकलजनसमस्त-प्रमाणपथातिवर्ति गगनकुसुमायमानं स्यात्। न चैवमध्यवसातुं शक्यम्। अनन्त-चरणाधाराणामनेकसहस्राणां वेदशाखानां कात्स्न्येंनोपलम्भासंभवात्। एवञ्चान-ध्यवसीयमाने सत्यपि विरोधे दुर्लभतरमप्रामाण्यम्, नित्यानुमेयश्रुतिमूलतानिरा-करणात्। यदा हि शाखान्तरगतानि पुरुषान्तरप्रत्यक्षाण्येव वेदवाक्यानि स्मृतीनां मूलम्, तदा वेष्टनवाक्यमपि पुरुषान्तरप्रत्यक्षतया संभाव्यमानं कथमिव शक्यं नास्तीति वक्तुम्।

द्वेधा हि तस्यासत्त्वावधारणम्—बाधकप्रमाणसद्भावात्, साधक-प्रमाणाभावाद्वा भवेत्। बाधकसद्भावोऽपि द्वेधा—दृश्यादर्शनाद्वा, तदभावनिय-तार्थान्तरदर्शनाद्वा। न तावद्दृश्यादर्शनम्, समस्तशाखोपलम्भाभावादित्युक्तम्। नच विरुद्धश्रुतिदर्शनं तदभावनियतम्, येन तद्दर्शनात्तदभावोऽवधार्येत। विरुद्धा-नामपि ग्रहणाग्रहणादिश्रुतीनां सहस्रस्य दर्शनात्। तेन न तावद्बाधकसद्भावः।

नापि साधकाभावः। स खल्वात्मनः, सर्वेषां वा भवेत्। न तावत्स्वप्रमाण-निवृत्त्या वस्त्वभावनिश्चयः, अतिप्रसङ्गात्। न च समस्तपुरुषाणामत्र प्रमाणम् नास्तीति शक्यं निश्चेतुम्। संभवति हि तस्य शाखान्तरे समाम्नानम्, पुरुषान्त-रैश्च प्रत्यक्षीकरणम्। नित्यानुमेयत्वे हि सर्वेषामिहानुमानमेव प्रमाणं स्यात्। तच्च प्रत्यक्षश्रुतिविरोधान्नोदेतीति, सर्वपुरुषाणां साधकप्रमाणाभावादीषत्करम-भावावधारणं स्यात्। न च तदस्तीत्युक्तम्, अन्धपरंपरादोषात्। अतः पुरुषान्त-राणामिह प्रत्यक्षसंभवात् तस्य चात्मप्रत्यक्षतुल्यत्वान्न स्मार्तश्रुतिनिराकरणम्। तदुक्तम्—

'आत्मीयात्परकीयस्य दौर्बल्यं नैव किञ्चन।
प्रत्यक्षत्वाविशेषेण स्वप्रत्यक्षसमं हि तत्'॥ इति।

यदा चैवं स्वशाखापठितश्रुतितुल्यप्रमाणकं स्मार्तमपि वेदवाक्यम् संभाव्यते, तदा स्मृतिलिङ्गकानुमानं न केनचित्प्रतिबध्यत इति, न निर्मूलत्वम् स्मृतेर्वक्तुं शक्यते। ततश्च वेष्टन—स्पर्शनयोरात्मीय—परकीयप्रत्यक्षश्रुतिविहित-योस्तुल्यकक्षप्रमाणतया विकल्पो न्याय्यः।

यदि परमात्मीयस्य प्रत्ययस्य विस्रम्भणीयत्वात्तेनैव परप्रत्यक्षमनादृत्य व्यवहारः क्रियते, ततः क्रियताम्। अनादरश्च सहस्रतमेऽप्यंशे परप्रत्ययस्यादृष्टमूलस्य न्यायाभासनिमित्तत्वसंभवात्, भ्रान्त्यादिमूलत्वसंभवाद्वा। 'अङ्गं वा-समभिव्याहारादि' का-श्रौ-४-१-३० ति। 'उभौ वाऽविशेषादि' का-श्रौ-३-४-१२ इत्यादिवत्। नत्वप्रामाण्याध्यवसानम्।

व्यवहारविशेषौचित्यप्रतिपादनार्थं चेदं सूत्रं 'विरोधे त्वनपेक्षं स्यादि'ति। श्रुतिस्मृत्योर्विरोधे यत्प्रमाणान्तरानपेक्षं श्रुतिवाक्यम्, तदेव ग्राह्यम्। असति ह्यात्मप्रत्यये परप्रत्ययानुमानक्लेशाश्रयणम्—इति। यथाहुः—

'यावदेकं श्रुतौ कर्म स्मृतौ वाऽन्यत्प्रतीयते।
तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते'॥ तं. वा. पृ. १९३ इति।

तेन फलतोऽप्रामाण्यं श्रुतिविरुद्धानां स्मृतीनामिति स्थितम्। भाष्यमप्यननुष्ठानरूपाप्रामाण्यपरं व्याख्येयम्।

वार्तिकोक्तं वर्णकान्तरम्।

यद्वा—यान्येतानि त्रयीविद्भिर्न 'परिगृहीतानि शाक्यादिभिर्निर्मितानि धर्मशास्त्राभासानि, तेषामनेनाप्रामाण्यं पूर्वसूत्रोक्तकर्तृसामान्यप्रत्युदाहरणत्वेनोच्यते। तेषां हि प्रत्यक्षादिमूलत्वेन प्रामाण्यं प्रत्यक्षसूत्रे निराकृतम, मन्वादिवद्वेदमूलत्वेन प्रामाण्यमिह निराक्रियते। तेषां ह्यसत्यपि प्रसिद्धवैदिकैरग्निहोत्रादिभिः कर्तृसामान्ये भिन्नप्रस्थाना वा वेदा मूलं भविष्यति। यथैवाथर्वणस्य त्रयीभिन्नप्रस्थानरूपता, तथा चतुर्भ्योऽपि वेदेभ्यो भिन्नरूपा वेदाः संभवेयुः। ते चेदानीं प्रलीनाः। मन्वादीनामपि हि केचित्प्रलीनशाखामूलतामनुमन्यन्ते, तद्वदत्रापि भविष्यति। इत्थञ्च संभवति प्रामाण्ये, नाप्रामाण्यं युक्तमिति भवति केषांचिदाशङ्का, सा च मन्दविषन्यायेन निराकर्तव्यैवेत्येवमर्थमिदमधिकरणम्। कृतः पूर्वपक्षः।

सिद्धान्तस्तु—अविच्छिन्नवैदिकपरिग्रहानुपपत्त्या मन्वादिष्वनुपलभ्यमानोऽपि वेदः कल्पितः, शाक्यादिष्विदमत्यन्तविपरीतमवैदिकम्, अप्रमाणञ्च तत्, इत्येव शिष्टानां स्मरणम्, वेदवैदिकद्वेषिण एव तेषां प्रामाण्यमनुमन्यन्ते। दृष्टानुसारिणी च कल्पना, न तद्वैपरीत्येन। अतोऽत्र वेदकल्पना दवीयसीत्यप्रामाण्यमेव तेषाम्, असन्मूलत्वात्—इति।

इति वार्तिकमतेन विरोधाधिकरणं समाप्तम्।

## शिष्टाकोपाधिकरणम् ॥ ४ ॥

**शिष्टाकोपेऽविरुद्धमिति चेत् ॥ ५ ॥ न, शास्त्रपरिमाणत्वात् ॥ ६ ॥**
**अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ७ ॥**

'आचान्तेन कर्तव्यम्, यज्ञोपवीतिना कर्तव्यम्, 'दक्षिणाचारेण कर्तव्यमि'त्येवमादीनि क्रत्वङ्गस्मरणान्युदाहरणम्। किं प्रमाणम्, अप्रमाणं वेति विचारः। तदर्थं च प्रत्यक्षश्रुत्या विरुध्यन्ते, नवेति। तदर्थमप्येभिः क्रतुमध्येऽनुष्ठीयमानैः कस्यचिच्छ्रुत्यर्थस्य क्रमादेर्भवति बाधः, न वेति। अथवाऽभ्युपेत्यैव विरोधम् प्रमाणम्, अप्रमाणं वेति विचारः, तदर्थञ्च प्रमाण-प्रमेयबलाबलविसंवादे किं ज्यायः इति चिन्त्यते। तथाहि—श्रुतिस्मृत्योः प्रमाणयोः श्रुतिर्बलीयसीति स्थितम्, अतः श्रौतत्वात्क्रमादयः स्मार्तेभ्य आचमनादिभ्यो बलीयांसो विज्ञायन्ते। प्रमेयस्वरूपालोचने पदार्थगुणत्वात्क्रमादेराचमनादयः पदार्था बलीयांसोऽवगम्यन्त इति बलाबलद्वयविसंवादात्कतरेण निर्णय इति संदेहः।

तत्र पूर्वः पक्षः—

श्रुत्युक्तानां क्रमादीनां स्मार्तैराचमनादिभिः।
व्याकोपः स्यादतस्तावत् विस्पष्टैव विरोधिता ॥ ११ ॥
ततः श्रुतिबलीयस्त्वात्स्मृतेः स्यादप्रमाणता।
पूर्वभाविप्रमाणस्थं प्रमेयस्थाद् बलाबलात् ॥ १२ ॥
ज्यायस्तेनैव निर्णीते न पश्चादितरादरः।
नैराकाङ्क्ष्यात्प्रमातॄणामतः स्मृत्यर्थबाधनम् ॥ १३ ॥

'वेदं कृत्वा वेदिं कुर्यादि'ति क्रमः। कालश्च—यः प्रधानेनाङ्गानामविप्रकर्षः, प्रयोगप्राशुभावश्च प्रयोगवचनावगतः, यश्च पूर्वाह्णादिः। परिमाणञ्चाविस्मृतसर्वपदार्थानुष्ठानसिद्ध्यर्थं प्रयोगविधिनैवाकाङ्क्षितं पदार्थविधिप्रचयावगतम्। तदेतत्त्रितयमपि क्रम-काल-परिमाणात्मक्रमाचमनादिभिरन्यथात्वं प्रतिपद्यते। तेन विरोधस्तावदस्त्येव। विरोधे च श्रुतेर्बलीयस्त्वात्स्मृत्यर्थस्याचमनादेर्बाधः।

न च श्रुत्यर्थत्वेऽपि पदार्थगुणभूतत्वात्क्रमादेर्दौर्बल्यमाचमनादेः स्मृत्यर्थस्यापि पदार्थत्वाद्बलीयस्त्वमिति वाच्यम्। प्रमाणपूर्वको हि प्रमेयावगमः। तेन पूर्वभाविप्रमाणस्थं बलाबलं पूर्वमवगम्यते। तेन चाचमनादिभ्यः क्रमादीनां बलीयस्त्वे-

निर्णीते, निराकाङ्क्षत्वान्न पश्चादवगतं प्रमेयबलाबलमादर्तव्यम्। तस्मादाचमनादि-स्मृतीनामप्रामाण्यम्—इति।

सिद्धान्तस्तु—

पदार्थप्राप्त्यपेक्षत्वात्क्रमादेरविरोधिता ।
विरोधेऽपि च दौर्बल्यं पदार्थेभ्यो गुणत्वतः ॥ १४ ॥

सर्वेषु हि पदार्थेषु प्रयोगवेलायां तद्विशेषणतया क्रम आश्रीयत इति, तेन पदार्थप्राप्त्यपेक्षत्वात्क्रमस्य, अत्यन्तजघन्यप्रमाणकोऽपि पदार्थः पूर्वं प्राप्नोति, पश्चात्क्रमः सर्वपदार्थप्रयोगाङ्गतयावतरन्नपि न पदार्थैर्विरुध्यते। कालोऽप्येवमेव प्रयोगाङ्गत्वात्, यावन्तः पदार्था अवधारिताः, तेषां सर्वेषामेव पूर्वाह्णादिकालत्वम्, प्रधानसंनिकर्षः, प्रयोगप्राशुभावश्च। परिमाणन्तु न कस्यचिच्छास्त्रस्यार्थः। प्रयोग-विधिरपि न तदाक्षिपति, अन्यथाप्यविस्मरणसिद्धेः।

अथापि शास्त्रार्थः, तथापि प्रयोगौपयिकत्वात्प्रयोगस्य च प्रयोज्यपदार्थ-प्राप्त्यपेक्षत्वादविरोधित्वम्। यद्यपि क्रमादीनामाचमनादिभिर्विरोधः स्यात्, तथापि सर्वपदार्थगुणत्वाद्दौर्बल्यम्। आचमनादयस्तु पदार्थत्वाद्बलवन्तः। न च प्रमाण-बलाबलस्य पूर्वभावित्वम्। न हि प्रमाणयोः स्वरूपतो विरोधः, अपितु प्रमेय-विरोधनिमित्तः। प्रमेयगतं हि विरोधमालोच्य, प्रमाणविरोधबुद्धिर्भवति। तद्यदैव प्रमेययोर्विरोधो गम्यते, तदैव तयोर्बलाबलमपीति, तत एव निर्णये कृते नैराकाङ्क्ष्यात्प्रमाणबलाबलमनादर्तव्यमिति, न स्मृतेर्बाधः। यद्धि स्वभावादेव एवाप्रमाणम्, (शाक्यवाक्यं) तत् सर्वं दैवानादर्तव्यम्। यत्तु बलवद्विरोधापेक्षम-प्रमाणम्, तत् तदभावापेक्षया प्रमाणमेवेत्यवगन्तव्यम्। नचात्र बाधकमस्ति, प्रमाणबलाबलस्याबाधकत्वात्। तस्मादाचमनादेर्बलीयस्त्वात्तदनुरोधेनैव श्रुत्युक्ता क्रमादयो बाध्यन्त इति, अचमनादिस्मृतीनामबाधात्प्रामाण्यम्—इति।

इति भाष्यमतेन चतुर्थं शिष्टाकोपाधिकरणम्।



## शिष्टाकोपाधिकरणे वार्तिकमतम् ।

नन्विदमेवाधिकरणम्, पूर्वपक्षस्यातिमन्दत्वात्, यज्ञोपवीतादेश्च प्रत्यक्षश्रुतिविहितत्वेनानुदाहरणत्वात्। तस्माद्यत्पूर्वं शाक्यादिशास्त्राभासानामप्रामाण्यमुक्तम्, तत्रैव चोद्योत्तरत्वेनाद्यं सूत्रद्वयं व्याख्येयम्। यद्धि तेष्वहिंसादिवचनम् श्रुति–स्मृतिशिष्टं न कोपयति, तत् प्रमाणं भवत्विति चेत्?

तत्रोत्तरम् 'न शास्त्रपरिमाणत्वादि'ति। न खलु येन केनचित्प्रमितो धर्मः फलं साधयति (तत्प्रमाणं भवति) 'स्वाध्यायोऽध्येतव्यः'। तै. आ. २ अनु. १५ शत. ब्रा. ११-५-७-२ 'वेदोऽखिलो धर्ममूलम्, तद्विदां च स्मृतिशीले गौ. ध. सू. १–२। धर्मज्ञसमयः प्रमाणम्, वेदाश्च' आप. ध. प्र. १–२–३।

'पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश' ॥ या. आ. श्लो. ३

त्येवमादिभिरेव धर्मप्रमितेर्नियमानादन्यतः प्रमितस्य फलसाधनत्वाभावेन धर्मत्वाभावात्तेषामप्रामाण्यम्–इति।

इति वार्तिककारीयं प्रथमं वर्णकम् ।



## अथ द्वितीयं वर्णकम् ।

यत्तु–तृतीयं सूत्रं 'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् तेष्वदर्शनाद्विरोधस्ये" ति, तत् सदाचारप्रामाण्यप्रतिपादनार्थमधिकरणान्तरं व्याख्येयम्। अत्रानिबन्धनाः सदाचाराः वसन्तोत्सवादिविषया उदाहरणम्, प्रमाणमप्रमाणं वेति संदेहः। तदर्थं च श्रुत्यादिमूलत्वम्, भ्रान्त्यादिमूलत्वं वेति चिन्तनीयम्। तत्र स्मृत्यधिकरणे कर्तृसामान्यादाचाराणामपि स्मृतिवत्प्रतिपादितमपि प्रामाण्यम् निर्निबन्धनतया व्यतिक्रम–साहससङ्कराद्याक्षिप्य समाधीयते। यदि वसन्तोत्सवादयोऽष्टकादिवद्वेदमूला भवेयुः, ततस्तद्वदेव मन्वादिभिरपि निबध्येरन्। अनिबन्धनात्तु नैषां मूलं केनचिद्दृष्टम्। आचारपरंपरामात्रमेव दृष्ट्वा मन्वादिभिरपि सदाचारः प्रमाणमित्येवं परोक्षरूपेणाभिधानात्प्रामाण्यमनुमीयत इति मन्यामहे।

तत्र सैवान्धपरंपरा स्यात्, धर्मव्यतिक्रम-साहसदर्शनाच्च नाचारमात्राच्छक्यम् धर्माध्यवसानमिति पूर्वः पक्षः।

सिद्धान्तस्तु—धर्मबुध्द्या वैदिकैरनुष्ठानमसति वैदिकत्वेऽनुपपन्नम्। व्यतिक्रमसाहसदर्शनं तु रागद्वेषादिनिबन्धनत्वान्न धर्मबुद्धिनिबन्धनम्। धर्मबुद्धिनिबन्धनस्य चाचरितस्यागृह्यमाणकारणत्वात्, श्रुति-स्मृतिविरोधादर्शनाच्च धर्मलिङ्गत्वाव्यभिचारः। मन्वादिभिस्तु लाघविकैर्यदि नाम स्वरूपेणानिबध्य, सामान्यात्मना शिष्टाचारः प्रमाणमित्युक्तम्। नैतावता कश्चिद्दोषः। तस्मात्स्मृतिवदाचाराणामपि धर्मे प्रामाण्यं सिद्धम्।

इति वार्तिककारीयं द्वितीयं वर्णकम्।



भाष्यमतेन यववराहाधिकरणम् ॥ ५ ॥

तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ॥८॥ शास्त्रस्था वा तन्निमित्तत्वात् ॥ ९ ॥

आचारप्रसङ्गाच्छन्दस्यार्थे प्रयोगरूपाचारविप्रतिपत्तौ बलाबलं चिन्त्यते। अत्र भाष्ये आर्यम्लेच्छविशेषानुपादानात्, वाक्यशेषेण सिद्धान्तकथनात्, शिष्टाचारस्य च पूर्वप्रकृतत्वाद्यत्र शिष्टानामेव मिथोऽभिधानविप्रतिपत्तिः—केषांचिद्वाक्यशेषानुगुणा, केषांचिदननुगुणा, तत्र तुल्यबलतामाशङ्क्य, वाक्यशेषानुगुणाया बलीयस्त्वं प्रतिपाद्यत इति लक्ष्यते, तत्तदाहरणाभावाद्यवादिशब्दानाम् दीर्घशूकादिष्वेव सर्वशिष्टप्रयोगात्, अन्यस्यापि शिष्टप्रयोगस्य विप्रतिपत्तिविषयस्योदाहरणस्यादर्शनात् 'संदिग्धेषु वाक्यशेषादि' मी.द.१–४–२९ त्यनेन गतप्रायत्वात्।वाक्यशेषाच्चेन्निर्णयः, ततोऽसति वाक्यशेषेऽभियुक्तानभियुक्तप्रसिद्ध्योश्च तुल्यबलत्वप्रसङ्गादयुक्तमिति मत्वा, आचार्यैरन्यथाऽधिकरणं व्याख्यातम्।

इति भाष्यमतेन यववराहाधिकरणम्।



## वार्तिककारमतेन पील्वधिकरणम् ।

यत्रार्यम्लेच्छयोरभिधानविप्रतिपत्तिः, यथा पीलुशब्दमार्या वृक्षविशेषे प्रयुञ्जते, म्लेच्छास्तु हस्तिनि । तत्र चिन्त्यते किं तुल्यबलत्वम्, उतार्यप्रसिद्धिः बलीयसी—इति । तत्र—

लोकप्रसिद्धिगम्यत्वाच्छब्दार्थस्योभयोरपि ।
समा विप्रतिपत्तिः स्याच्छास्त्रार्थे हि बलाबलम् ॥ १५ ॥

यः शास्त्रप्रमाणको धर्मः, तत्र शास्त्राभियोगशून्येभ्यो म्लेच्छेभ्यस्तदभियोगशालिनामार्याणामस्ति बलीयस्त्वम् । व्यवहारगम्यस्तु शब्दार्थः । स च म्लेच्छानामप्यविशिष्ट इति प्रमाणाविशेषादविशिष्टो द्वयोरपि शब्दार्थः । यच्चार्येष्वनादित्वकारणमवध्यस्मरणम्, तदपि समानं म्लेच्छेष्वपि । तस्मात्समेयमभिधानविप्रतिपत्तिः स्यादिति प्राप्ते—

ब्रूमः—

प्रतिपादकतामात्रं म्लेच्छेष्वप्यवगम्यते ।
अविप्लुतस्तु शब्दार्थः शिष्टेष्वेवावधार्यते ॥ १६ ॥

न तावदेवं न्याय्यमुभावपि शब्दार्थाविति, अनेकादृष्टशक्तिकल्पनाप्रसङ्गात्, शब्दप्रयोगेऽपि चान्यतरस्याप्यनवधारणात्, व्यवहारानुपपत्तिप्रसङ्गात्, कदाचित्कस्यचिदुपादानेऽष्टदोषविकल्पापत्तेः, एकत्र मुख्यत्वेन, अन्यत्र गौणत्वेनापि प्रयोगोपपत्तेः, गौणेऽपि प्रयोगे पार्श्वस्थानां मुख्याभिमानसंभवात्, तैरेव चान्येभ्यो मुख्यत्वस्य कथनान्मुख्याभिधानपरम्परानुवृत्तिसंभवात् ।

तत्र यदि न कथंचिदपि विशेषोऽवधार्येत, तदा गत्यभावाद्द्वयोरप्यभिधेयता स्यात् । अस्ति त्वभियुक्तानभियुक्तयोर्विशेषः । शास्त्रस्था हि शब्दैकसमधिगम्यधर्माधर्माविप्लुतिलिप्सया शब्दार्थतत्त्वं विविच्य परिपालयन्ति । म्लेच्छास्तु दृष्टार्थव्यवहारस्य यथाकथंचित्सिद्धेः प्रयोजनाभावान्नाविप्लुतिसिद्धौ यतन्ते । अतो यद्यपि प्रतिपादकतामात्रं म्लेच्छेष्वपि सिद्ध्यति, तथाऽपि विप्लुतिसंभवान्न तेषु शब्दार्थतत्त्वसिद्धिरित्यार्यप्रसिद्ध्यैव निर्दोषया बलीयस्याऽर्थसिद्धिरिति, पील्वादिशब्दा वृक्षाद्यर्थाभिधायिन इति स्थितम् ।

भाष्यमप्यार्यम्लेच्छविगानाभिप्रायं व्याख्येयम् । वाक्यशेषश्चाभ्युच्चयत्वेनोक्तः, न मूलहेतुतया—इति ।

इति प्रथमं पीलुवर्णकम् ।



## वार्तिकमतेन स्मृतिशिष्टाचारबलाबलनिरूपणम् ।

स्मृत्याचारविरोधे वा—यत्र मन्वादिनिबन्धनानामनिबन्धनानाञ्चाचाराणां विरोधो मातुलदुहितृपरिणयनादिषु, तत्र किं तुल्यकक्षत्वम्, उत स्मृतीनाम् बलीयस्त्वमिति चिन्त्यते ।

तत्र—

बलाबलविशेषस्तु कक्षान्तरितकारितः ।
श्रुतिस्मृत्योरिह त्वेवं न द्वयोः श्रुतिमूलतः ॥ १७ ॥

श्रुत्या हि साक्षादर्थः प्रतीयते, स्मृत्या तु श्रुतिकल्पनयेत्येकान्तरितप्रामाण्यत्वादव्यवहितप्रामाण्या श्रुतिर्बलीयसी—इति । तेन तत्र युक्तं यत् स्मृतेरननुष्ठानलक्षणमप्रामाण्यम् । इह त्वेवं विशेषो नास्ति, द्वयोरपि श्रुतिमूलत्वेनैकान्तरितयोरविशेषात् । तस्मात्समा विप्रतिपत्तिः—इति ।

अत्रोच्यते—

सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना ।
तस्यास्तेन बलीयस्त्वमाचारान्निर्निबन्धनात् ॥ १८ ॥

प्रत्ययिततरा हि मन्वादयः स्मर्तारः । तत्स्मरणं गुणवत्तरकर्तृकत्वादितरजनचारित्र्याद्विश्रम्भणीयतरमिति व्यक्तमेतत् । अपि चाचरितॄणां जनानाम् स्वयमितस्ततोविप्रकीर्ण—परप्रकरणादिगतश्रुत्युद्धरणेनार्थं प्रतिपत्तुमसामर्थ्यादवश्यमेते महर्षिभिरेव ज्ञात्वा, स्मृत्वा समर्पितमर्थमनुतिष्ठन्तीत्यङ्गीकार्यम्, अतश्च आचारस्य स्मृतिकल्पनेन श्रुतिकल्पकत्वमिति व्यन्तरितप्रामाण्याद्दुर्बलत्वम् । अपि चाचारेषु कर्मस्वरूपमात्रमेव प्रत्यक्षम्, कर्तव्यता तु विमर्शपूर्वमर्थसुखादिहेत्वन्तरासंभवनिरूपणेन पारिशेष्यात्कल्पयितव्या । ताञ्च कल्पयित्वा, पश्चान्मूलकल्पनमिति विप्रकर्षः । सनिबन्धनासु तु स्मृतिषु द्रागेव ग्रन्थतः कर्तव्यता गम्यते, मूलमात्रन्तु कल्प्यमिति सन्निकर्षः । सर्वेषां च स्मृतिविरुद्धाचाराणाम् मातुलदुहितृपरिणयनादिविषयाणां कामादिहेत्वन्तरं स्पष्टमेव दृश्यत इति, न कथञ्चिदपि श्रुतिमूलत्वं संभावनीयम् । नचात्र विकल्पाभ्युपगमेनोभयोरपि प्रामाण्यं संभवति, वस्तुनि विकल्पासंभवात् । न हि मातुलदुहितृपरिणयनात्प्रत्यवायोत्पत्तिः, अनुत्पत्तिश्च संभवतीति, अवश्यमन्यतरस्याप्रामाण्यमाश्रयणीयम् । तत्र गृह्यमाणनिमित्तस्याचारस्याप्रामाण्यमिति, सिद्धमेवंजातीयकानां दुराचारत्वम् ।

इति वार्तिकमतेन द्वितीयं वर्णकम् ।



## अथ वार्तिकमतेन तृतीयं वर्णकम् ।

### ( त्रिवृच्चर्वश्ववालाधिकरणम् )

अथवा—त्रिवृच्चर्वश्ववालादौ यत्र-लोक—वाक्यशेषयोरर्थविप्रतिपत्तिः। यथा 'त्रिवृद्बहिष्पवमानमि' तां. ब्रा. अ. २०. खं.१ ति.। अत्र त्रिवृच्छब्दस्य त्रैगुण्यम् लोकादर्थोऽवगम्यते, वाक्यशेषात्तु स्तोत्रीयानवकम्। 'आदित्यः प्रायणीयः पयसि चरुरि' तै. सं. ६-७ ५-५ ति चरुशब्दस्य स्थाली, वाक्यशेषादोदनः। 'आश्ववालः— प्रस्तरः' इति अश्वस्य वालः, वाक्यशेषात्तु काशः। 'ऐक्षव्यौ विधृती' इतीक्ष्ववय वात्मिके लोकात्, वाक्यशेषात्तु काशमूलके। किं तत्र लोक-वाक्यशेषयोस्तुल्य-बलवत्त्वम्, उत वाक्यशेषस्था प्रतीतिः बलीयसीति संशयः।

तत्र—

पदार्थपदसंबन्धे तुल्यत्वं लोकवेदयोः।
अदृष्टसाधनत्वे हि लोकाद्वेदोऽतिरिच्यते ॥ १९ ॥

विध्युद्देशात्तावदेतावदवगम्यते—यदिह त्रिवृदादिशब्दाभिधेयम्, तत् वाक्यार्थान्वयीति, किं तस्याभिधेयमित्यन्यतोऽवगन्तव्यम्। तत्र लोकस्याप्य-भिधेयनिर्णये वाक्यशेषतुल्यत्वम्, ततोऽधिकं वा सामर्थ्यमस्तीत्यर्थद्वयमपि तुल्यप्रमाणकत्वाद्विकल्पेन ग्रहीतव्यमिति पूर्वः पक्षः।

सिद्धान्तस्तु—

वाक्यैकत्वं विधिस्तुत्योर्विषयैक्याद्दते न हि।
तेनात्र वाक्यशेषस्था प्रतिपत्तिर्बलीयसी ॥ २० ॥

यदि लौकिकोऽर्थो विध्युद्देशेनाश्रीयते, अन्यार्थो वाक्यशेषः, अन्यार्थश्च विध्युद्देश इति, न कथञ्चन संबन्धः स्यात्। तस्माद्यत्र वाक्यशेषः 'त्रिवृद्बहिष्पवमानमि'त्यादिषु, तत्र तावत्तदनुगुण एवार्थः समाश्रयणीय इत्येता-वदिहाधिकरणे स्थितम्।

यदा चैवं वाक्यशेषवशात्स्तोत्रीयानवकमपि वाच्यमित्यवधारितम्, तदा यत्र वाक्यशेषो नास्ति 'त्रिवृदग्निष्टुदग्निष्टोमः' तां. ब्रा १७—६—१ इत्यादिषु, तत्राप्यनेनैवार्थेन भवितव्यं रूढिवशादिति दशमे वक्ष्यते। चरुशब्दोऽप्यो-दनस्थाल्योः परस्परसंबन्धित्वाद्वाक्यशेषावधारितौदनवचनत्वेन स्थाल्या-'मन्यायश्चानेकार्थत्वमि मी. द. १—३—२६ ति' प्रतिबद्धशक्तित्वाल्लाक्षणिकः। तेनासत्यपि वाक्यशेषे 'सौर्यं चरुं निर्वपे'दि तै. सं. २-३-२-३ त्यादावप्योदन-वचनत्वमेवेति दशमे मी. द. १०—१—१२ वक्ष्यते।

आश्ववालेक्षवीशब्दावपि काश-तन्मूलयो रूढत्वात्, अन्यत्रापि तदर्थावेव भवतः, न चात्र 'संदिग्धेषु वाक्यशेषादि'त्यनेन गतत्वम्, असंदेहात्, इह हि वाक्यशेषात्प्रागर्थान्तरमेव निर्णीतं वाक्यशेषेण बाध्यते, न तु प्रथमम् संदिग्धं तेन निर्णीयते—इति ।

इति तृतीयं वर्णकम् ।

---

पिकनेमाधिकरणम् ॥ ६ ॥

## चोदितं तु प्रतीयेताविरोधात्प्रमाणेन ॥ १० ॥

आर्यप्रसिद्धिविरोधे म्लेच्छप्रसिद्धेरप्रामाण्यमुक्तम्, इदानीं किं म्लेच्छप्रसिद्धिरित्येवाप्रमाणम्, उत बलवद्विरोधादेवाप्रमाणम्, अविरोधे तु तस्या अपि भवत्येवाभिधेयनिर्णये प्रामाण्यमिति चिन्त्यते । पिक-नेम-सत-तामरसादिशब्दाः न क्वचिदार्याणां प्रसिद्धाः, म्लेच्छानां तु कोकिलादिषु प्रसिद्धाः । तत्र यद्यप्रमाणमेव म्लेच्छप्रसिद्धिः, ततस्तेषां निरुक्तादिवशेनार्थकल्पनम् । अथ तु सा प्रमाणम्, ततः सैवाश्रयिष्यते, तदत्र म्लेच्छप्रसिद्धिः प्रामाण्ययोग्या, न वेत्येतावदधिकरणशरीरं । सत्यपि तु प्रामाण्ये किं म्लेच्छगतत्वाद्दुर्बला निरुक्तादिद्वारा शास्त्रस्थत्वाद्बलीयसी, उतेयमेव दुर्बला कल्प्यत्वात्, म्लेच्छप्रसिद्धिस्तु क्लृप्तत्वाद्बलीयसीत्येतत्प्रासङ्गिकम् । शिष्टाकोपे ह्येतदवस्थितं, स्वरूपगतमेव बलाबलं प्रमाणद्वारकाज्ज्याय इति, तेनैव न्यायेनात्रापि प्रयोक्तृद्वाराद्बलाबलात् क्लृप्तकल्प्यत्वेन स्वरूपगतमेव ज्यायो भवति । तेन गतप्रायम्, इह प्रसङ्गत उक्तं भाष्यकारेण । प्रामाण्यसंभवासंभवमात्रं तु म्लेच्छप्रसिद्धेश्चिन्त्यते ।

तत्र पूर्वः पक्षः—

म्लेच्छेषु हि पदार्थानां विप्लुतिर्भूयसी यतः ।<br>
ततस्तेषु प्रसिद्धेऽर्थे न विश्रम्भः कथंचन ॥ २१ ॥

पदानि पदार्थाश्चापभ्रंशप्राया एव म्लेच्छेषु बाहुल्येन, तेषु कथमिवाविप्लुतपदार्थावधारणम् । अतोऽप्रमाणं म्लेच्छप्रसिद्धिः । न हि ते दृष्टार्थ-

व्यवहारित्वाच्छब्दार्थाविप्लवे यत्नं कुर्वन्ति। तस्माद्विप्लुतिसंभवात्तेषु प्रसिद्धोऽर्थः न विश्रम्भणीयः,। निरुक्तादिद्वारेण त्वर्थकल्पनं पिकादीनाम्—इति।

सिद्धान्तस्तु—

पदानि तावदेतानि वेदादिष्वेव दर्शनात्।
अविप्लुतानि तेषां च भाव्यमर्थेन केनचित्॥ २२॥
नित्येनार्येष्वसौ नास्ति यतो म्लेच्छेषु विप्लुतिः।
म्लेच्छप्रसिद्ध एवार्थस्तेषामिति हि निर्णयः॥ २३॥

पिकादिपदानि तावद्वेदवेदाङ्गादिषु दृष्टत्वादविप्लुतानि, तदेषां नित्येन केनचिदर्थेन भवितव्यम्। न चामीषामार्येष्वर्थः कश्चिदस्ति। यत्र मुख्यानि भूत्वा म्लेच्छप्रसिद्धेऽर्थे गौणभ्रान्त्यादिनिमित्तप्रयोगभाञ्जि विप्लुतिं गच्छेयुः। न ह्यसति मुख्ये गौणादिसंभवः। तस्मात् म्लेच्छप्रसिद्ध एवार्थोऽमीषां नित्योऽध्यवसीयते। अतः सिद्धमविरुद्धेषु प्रसिद्धवाचकेषु म्लेच्छानामभिधेयनिर्णये प्रामाण्यम्—इति।

इति षष्ठं पिकनेमाधिकरणम्।



सप्तमं कल्पसूत्राधिकरणम्।

**प्रयोगशास्त्रमिति चेत्॥ ११॥ नासन्नियमात्॥१२॥ अवाक्यशेषाच्च॥ १३॥ सर्वत्र च प्रयोगात्संनिधानशास्त्राच्च॥ १४॥**

अत्र कल्पसूत्राण्युदाहृत्य किं प्रमाणम्, अप्रमाणं वेति भाष्ये विचारितम्।

ननु स्मृत्यधिकरण एव सर्वेषां वेदातिरिक्तानां प्रामाण्याप्रामाण्यचिन्ता वृत्ता। तत्र केचिदाहुः-तत्राशब्दतया पूर्वपक्षमुक्त्वा, शब्दानुमानेन सिद्धान्तितम्, एतानि वैदिकार्थनिबन्धनत्वात्प्रत्यक्षशब्दानीति न तत्रोदाहरणम्, स्मृतयो हि प्रायेणेतस्ततोविप्रकीर्ण-परप्रकरणपठित-वाक्यशेषगतसिद्धवन्निर्देशानुपपत्तिकल्पिततिरोहितप्रायविधिमूलाः, तद्यथा 'नयनं दक्षिणं पूर्वमाङ्क्ते, सव्यं हि पूर्वं

मनुष्या आञ्जते 'तै. सं ६-१-१-६ इति प्रसिद्धवत्सव्यस्य पूर्वं मञ्जनं निर्दिष्टम्, तच्च दृष्टप्रयोजनाभावात्प्रमाणान्तरेणाप्राप्तमित्यनुपपत्त्या विधिः कल्प्यते।

तथा—'तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति' तै. सं. ६–५–५ 'तस्माद्गर्भेणाविज्ञातेन ब्रह्महे' तै. सं. ६–९–१० त्येवंविधं स्मृतीनां मूलम्, अतएव चैषु स्मार्तत्वप्रसिद्धिः, प्रत्यक्षश्रुतावविहितत्वात्। दर्शपूर्णमासादिषु तु प्रत्यक्षविधिसद्भावाच्छ्रौतत्वम्, इममेव च विशेषमभिप्रेत्य, गौतमेनोक्तं 'प्रत्यक्षश्रुतिविधानात् गार्हस्थ्यस्ये' गौ. ध. १–३५ ति, न तु स्मृतिपरम्परयैवानुमेयत्वम्, अन्धपरम्परादोषात्, अत एव प्रत्यक्षश्रुतिविरोधे स्मृतेरननुष्ठानम्। स्मृतयो हि सिद्धवन्निर्देशानुपपत्तिकल्पितविधिमूलतयाऽपि संभाव्यन्ते। कल्पना च प्रत्यक्षश्रुतिविरोधेऽनुपपन्ना, तेनाविरुद्धविषयवद्विरुद्धविषयेऽपि न्यायाभासेन विधिं कल्पयित्वा, किमियं स्मृतिः प्रवर्तिता, 'किं वा—

'अग्निहोत्रञ्च 'जुहुयादाद्यन्ते द्युनिशोः सदे' मनु. अ. ४ श्लो. २५ त्यादिवत् प्रत्यक्षमेव विधिं दृष्ट्वे ति विचिकित्सोदयात् यावत्तद्विषयः प्रत्यक्षविधिर्नोपलभ्यते, तावत्तदनादरेण प्रत्यक्षोपलब्ध एवानुष्ठेय इति। तेन स्मृतय एव तत्रोदाहरणम्, न कल्पसूत्राणि।

किंच नैषामिह प्रामाण्याप्रामाण्यचिन्ता, किंतु स्वतन्त्राणामेव वेदवत् प्रामाण्यम्, उत स्मृतिवत्परतन्त्राणाम्। यद्वा भवतु नामैषामपि तत्र विचार,ः तेषामपि तु मन्वादीनामिह स्वातन्त्र्यनिराकरणम्। अथवाऽङ्गान्यत्रोदाहरणम्। तेषां हि 'षडङ्गमेके.' पा. गृ.२–५–६इति वेदत्वस्मरणात्स्वातन्त्र्याशङ्का जायते। अथवा शाक्यादिग्रन्थानां श्रुतिमूलत्वेन प्रामाण्ये निरस्ते, संप्रति श्रुतिवदेव तत्प्रामाण्यमाशङ्क्य निराक्रियते।

तदेतानि चत्वार्यपि विचारस्थानानि समानन्यायानि सह विचार्यन्ते—किमेषाम् स्वातन्त्र्येण प्रामाण्यं संभवति,न वेति। तदर्थञ्च किमेषां पौरुषेय त्वम्, अपौरुषेयत्वं वेति चिन्तनीयम्, तत्रावगतिस्तावदेतेभ्यो धर्माधर्मविषया समुपजायते,। सा च स्वतःप्रमाणम्। तद्यदि पौरुषेयत्वं शाक्यादिग्रन्थानाम्, ततः पुरुषदोषादप्रामाण्यापत्तेर्दृष्टप्रामाण्यहानिः स्यात्। अतो दृष्टानुगुण्यादपौरुषेयत्वम्।

मन्वादीनां त्वविगीतमेव प्रामाण्यम्, तत् किमेषामेवापौरुषेयत्वं कल्प्यताम्, उत प्रमाणन्तरं कल्पयित्वा, तस्य च नित्यत्वकल्पनमिति। दृष्टानुसारित्वान्नित्यत्वकल्पनं ज्यायः। अङ्गानां तु 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' आप. परि, ३१,

षडङ्गमेके पार. गृ.' २–५–६ इति स्मरणाद्दृढमेवापौरुषेयत्वम्, कल्पसूत्राणां तु पठितपाठप्रत्यक्षवेदार्थोपनिबन्धनाच्छाखान्तरतुल्यत्वादपौरुषेयत्वम्। न हि सकलजनप्रत्यक्षवेदवाक्यविषयमर्थं वदतामेषां पुरुषैः प्रणयनं संभवति। मन्वादिभिस्तु समाख्यानं काठकादिवत्प्रवचननिमित्तत्वेनोपपन्नम्, तन्निमित्ता च एषु लौकिकानां कर्तृत्वस्मृतिः।

भवति चात्र प्रयोगः—

बौद्धाद्यध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
बौद्धाध्ययनसामान्यादधुनाऽध्ययनं यथा॥ २४॥

कल्पानां तु नित्यब्रह्मयज्ञविधिविषयत्वादपि नित्यता। श्रूयते हि 'यद्-ब्राह्मणानीतिहासान्पुराणानि कल्पानि' तै. आ. प्र. २ अनु. ८ ति। कथं ह्यनित्यानाम् नित्यविधिविषयत्वम्। तस्मादेषां नित्यविधिविषयत्वात्स्वातन्त्र्यमिति प्राप्ते।

ब्रूमः—

नैतेषां पौरुषेयाणां स्वातन्त्र्यमुपपद्यते।
स्पष्टं च पौरुषेयत्वं दृढकर्तृस्मृतेर्बलात्॥ २५॥

पुरुषपरम्परयैव ह्येषु कर्तारः स्मर्यन्ते, न काठकादिवत्प्रवचनेन परिहर्तुं शक्यन्ते। तत्र हि समाख्यानमात्रम्, अत्र तु पारम्पर्येणैव सर्वेषामविगीत-स्मरणादनित्यत्वसंभवः। 'षडङ्गमेके' इति परमतोपन्यासात्पूर्वपक्षोक्तिमात्रम्। नानाशाखागतलिङ्गादिकल्पितश्रुत्यर्थोपसंहारस्य कल्पसूत्रानपेक्षैः कर्तुमशक्य-त्वात्तादर्थ्येनार्थवन्निबन्धनम्, नानर्थकम्।

एवंविधाश्च ग्रन्थाः प्रतिमन्वन्तरं क्रियमाणाः केचित् येनकेनचित्सर्व-कालमविच्छिन्नपारम्पर्येण प्रवर्तन्ते। ते च वेदार्थकल्पनात्कल्पा इति नित्ययैव समाख्यया ब्रह्मयज्ञाङ्गतया विधीयन्त इति, अनित्यत्वेऽपि ग्रन्थव्यक्तीनां नित्य-विधिविषयत्वोपपत्तिः। तस्मान्नैषां स्वातन्त्र्येण प्रामाण्यमिति, शाक्यादिनि-बन्धनानां सिद्धं धर्मे प्रमाणाभासत्वम्।

कल्पादिषु तु यानि प्रत्यक्षश्रुति (न्याय) विरुद्धानि वचनानि, तेषामप्रामाण्यम्, यथा 'उभौ वा विशेषादि' का. श्रौ. ३–४–१२ति सर्वपुरोडाशानाम् चतुर्धाकरणवचनम्, संनिहितं च शास्त्र 'माग्नेयं चतुर्धा करोती' आप. श्रौ. ३–३–१ ति।

तथा 'स कृताकृत' इति सवनीये पुरोडाशे विकल्पवचनं पूर्वपक्षमूलम्, न वचनमूलम्। 'आक्रियामेके, अन्यत्र तदर्थवादवचनादि' आ. श्रौ. ५-१३-९ त्याश्वलायनवचनात्।

तथा-'यावद्यूपं वेदिमुद्धन्ती'ति वेदेर्यूपाङ्गत्ववचनं 'जाघनीभिश्च पत्नीः संयाजयन्ती'आप. श्रौ. १४-७-११ति जाघनीनां समुच्चयवचनं द्वादशाधिकरण-पूर्वपक्षमूलम्, न वचनमूलम्। तत्र हि संनिहितं शास्त्रं 'जाघन्या पत्नीः संयाजयन्ती' आ.१४-७-११ति विवक्षितं चैककत्वमुपादेयगतत्वादिति द्वादशे वक्ष्यते।

तथा 'पुरोडाशं पर्यग्निकरोती'श.प.११-६-१३ति संनिहिते शास्त्रे 'सर्वाणि हवींषी'आप. श्रौ.१-२५-८ ति वचनं च दशमाधिकरणपूर्वपक्षमूलम्, न वचनमूलम्, 'पशुः पुरोडाशविकारः देवतासामान्यात्, पर्यग्निकरणाच्चे'त्यष्टमे मी.द. ८-२-१०-१२अभिधानात्। तदिदमुक्तम् 'सर्वत्र च प्रयुक्तत्वात्संनिधानशास्त्राच्चेति।

इति सप्तमं कल्पसूत्राधिकरणम्।



## होलाकाधिकरणम् ॥ ८ ॥

**अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ १५ ॥ अपि वा सर्वधर्मः स्यात्तन्न्यायत्वाद्विधानस्य ॥ १६ ॥ दर्शनाद्विनियोगः स्यात् ॥१७॥ लिङ्गाभावाच्च नित्यस्य॥१८॥ आख्या हि देशसंयोगात्॥१९॥ न स्याद्देशान्तरेष्विति चेत् ॥२०॥ स्याद्योगाख्या हि माथुरवत्॥२१॥ कर्मधर्मो वा प्रवणवत् ॥२२॥ तुल्यं तु कर्तृधर्मेण ॥ २३ ॥**

स्मृतीनाम्, आचाराणाञ्च विरोधाविरोधयोः प्रामाण्याप्रामाण्ये प्रतिपादिते। स्वातन्त्र्यं च स्मृतीनां निरस्तम्, इदानीं केषाचिदाचाराणां स्मृतीनां, च व्यवस्था, अव्यवस्था वेति चिन्त्यते। होलाकादयो हि कैश्चिदेव प्राच्याद्यभिमानिभिरनुष्ठीयन्ते, न सर्वैः। गृह्याणि, मानवातिरिक्ताश्च स्मृतयः कैश्चिदेव काश्चित्पठ्यन्ते, न

सर्वैः, तदेतान् स्मृत्याचारानुदाहृत्य विचार्यन्ते–किमेते तेषामेव धर्माः–उत सर्वेषामिति, तदर्थञ्च किमेतेषां स्मृतिर्मूलभूता व्यवस्थितविषया शक्यते कल्पयितुम्, उत सर्वसाधारण्येनैवेति।

तत्र—

लिङ्गव्यवस्थया लिङ्गी व्यवस्थां प्रतिपद्यते।
धूमो हि यत्र तत्रैव वह्निर्नान्यत्र मीयते॥ २६॥

स्मृत्याचारलिङ्गगम्या श्रुतिर्न प्रत्यक्षा। तच्च लिङ्गं केषुचिदेवोपलभ्यते। अतस्तद्विषयतयैव श्रुतिरनुमातुं शक्यते। न हि तस्याः सर्वविषयत्वे प्रमाणमस्ति, व्यवस्थितविषयत्वेऽपि स्मृत्याचारयोरुपपत्तेः। यदि च साधारणी श्रुतिः स्यात्, ततस्तन्मूलौ स्मृत्याचारावपि सर्वपुरुषगामिनौ स्याताम्, यदि ह्यालस्यादिनिमित्तमितरेषामनाचरणम्, तदा स्यादपि साधारणानुमानम्। यत्तु नियमेन प्राच्याद्यभिमानिनामाचरणम्, इतरेषाञ्चानाचरणम्. न तत्साधारणानुमानेऽवकल्पते। तस्माद्यवस्थितमेषां धर्मत्वमिति प्राप्ते।

अभिधीयते—

विशेषाभावमात्रेण प्रसिद्ध्येत् सर्वधर्मता।
विशेषणाद्व्यवस्था स्यात्तच्च नेहोपपद्यते॥ २७॥

यदुक्तं सर्वधर्मत्वे प्रमाणं नास्तीति, तदयुक्तम्। न हि सर्वधर्मत्ववादिना प्रमाणमुपन्यसितव्यम्। उभयवादिसिद्धेनैव विधिनाऽसति विशेषोपादाने सर्वधर्मत्वसिद्धेः, व्यवस्थावादिना तु वक्तव्यं विशेषे प्रमाणम्। तच्च नास्ति। तथाहि—स्मृतयः तावत्साधारण्येनैव विदधतीति, न तेषु चरणविशेषोपादानमस्ति। स्मृत्यनुसार्येव च श्रुतिकल्पनमिति, तदपि न साधारणं न्याय्यम्।

पाठव्यवस्था तु कर्तुस्तच्चरणत्वात्। कर्ता हि छन्दोगः स्वशिष्यांश्छन्दोगान् स्वग्रन्थमध्यापयामास, तेऽप्यन्याँश्छन्दोगानित्येवं गौतमीयस्य छन्दोगैः पाठः, तथाऽऽपस्तम्बग्रन्थस्य तैत्तिरीयैः। एवं गृह्यग्रन्थानामपीति, व्यवस्थितधर्मविषयत्वमप्रमाणकम्। आचाराणां तु सर्वाचरित्रष्वनुगतमनाचरितृभ्यश्च व्यावृत्तमाकृति-व्यक्ति-गुण-संस्थानादिकं न किंचिद्विशेषणं संभवति, यदुपादाय होलाकाद्यधिकारम् विशिंष्यात्। प्राच्यादिसमाख्याऽपि व्यभिचारिणी, तद्देशगतानामपि केषांचिदना-

चरणात्। चिरविनिर्गतपुत्रपौत्रादीनाञ्चाऽसत्यामपि समाख्यायामाचरणात्। तस्मादसति विशेषणे सर्वधर्मत्वमाचाराणाम्, स्मृतीनाञ्चेति सिद्धम्।

इत्यष्टमं होलाकाधिकरणम्।

---

## व्याकरणाधिकरणम् ॥ ९ ॥

**प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २४ ॥ शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्॥२५॥ अन्यायश्चानेकशब्दत्वम्॥२६॥ तत्र तत्त्वमभियोगविशेषात्स्यात् ॥२७॥ तदशक्तिश्चानुरूपत्वात् ॥२८॥ एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ॥ २९ ॥**

स्मृत्याचारविरोधे स्मृतेर्बलीयस्त्वम्, आचारेष्वप्यभियुक्ताचारस्य बलीयस्त्वं स्थितम्। इदानीं शब्दापशब्दविभागेऽपि किं व्याकरणस्मृतेः, तदभियुक्तानामाचारस्य चेतरलोकव्यवहाराद्बलीयस्त्वं संभवति, नेति चिन्त्यते। तदिहैकस्मिन्नर्थे प्रयुज्यमानान् गो-गावी-गोण्यादिशब्दान् व्याकरणानुगताननुगतांश्चोदाहृत्य चिन्तनीयम्—किमेते सर्वे तस्मिन्नर्थे प्रयोक्तव्याः साधवः, किं वा व्याकरणानुगता एव साधवः अन्येत्वसाधवः, न प्रयोक्तव्याः—इति। तदर्थञ्च किम् सर्वेऽप्यविच्छिन्नपारम्पर्यप्रयोगजाः, उत केचिदशक्तिजा अपभ्रंशाः इति। तदर्थञ्च किं व्याकरणम्, प्रमाणम्, अप्रमाणं ? वेति चिन्तनीयम्। तत्सिद्धये किंमस्य मूलं संभवति नेति, मूलसंभवे प्रमाणभूतव्याकरणस्मृतिशास्त्रबलीयस्त्वेन तदभियुक्तपुरुषाचारबलेन च पृथग्जनाचारबाधात् गाव्यादीनामसाधुत्वम्, निर्मूलत्वे तु तदप्रामाण्याल्लौकिकप्रयोगाविशेषात् सर्वेषां साधुत्वेन प्रयोज्यता—इति। तेन व्याकरणे प्रामाण्याप्रामाण्यमेवात्र चिन्तनीयम्।

तत्र—

निर्मूलत्वाद्विगीतत्वान्नैष्फल्याद्वेदबाधनात्।
पूर्वापरविरोधाच्च नास्य प्रामाण्यसंभवः॥ २८॥

तस्मादनेन शब्दानां प्रयोगो न नियम्यते।
तेनार्थप्रत्ययात्सर्वे प्रयोज्या न व्यवस्थया॥ २९॥

नियमद्वयार्थं हि व्याकरणम्—साधूनेव प्रयुञ्जीत, नासाधूनित्येकः प्रयोगनियमः, गवादय एव साधवः, न गाव्यादय इति साधुत्वस्वरूपनियमोऽपरः। न चैतद् द्वयमप्यनेन नियन्तुं शक्यते। तथा हि—न तावत्साधूनेव प्रयुञ्जीतेति नियमसंभवः, अर्थावगमाय हि शब्दोच्चारणम्, न धर्माय। अर्थश्च यद्य-साधुभ्योऽपि गम्यते, ततः साधुनियमोऽनर्थकः। अथ न गम्यते, ततः सुतराम् नियमशास्त्रानर्थक्यम्, अर्थवशादेव नियमद्वयसिद्धेः। अथ गम्यमानेऽप्य-साधुभ्योऽर्थे, दृष्टार्थमपि शब्दप्रयोगमाश्रित्य धर्माय साधुनियमः शास्त्रेण क्रियत इत्युच्यते।

तन्न। मूलासंभवात्। न तावदत्र प्रत्यक्षादीनां मूलत्वम्, तेषां धर्माधर्म-योरप्रवृत्तेः। नच वेदवाक्यानि गवादिशब्देषु प्रतिपदं कल्पयितुं शक्यन्ते, अनन्तवाक्यपाठासंभवात्, अपठितानाञ्च मूलत्वानुपपत्तेः। नच 'सुशब्दमेव प्रयुञ्जीत नापशब्दमि'त्येकेनैवोपलक्षणेन सर्वेषामपि संग्रहः, गाव्यादीनामपि श्रोत्रग्रहणत्वेन सुशब्दत्वाद्व्यवस्थानुपपत्तेः। न चावान्तरसामान्यं गवा-दिष्वनुगतं गाव्यादिभ्यश्च व्यावृत्तं किंचिदस्ति, येन व्यवस्था स्यात्। साधुत्वमिति चेत्। किंपुनरिदं साधुत्वम्? यद्गवादिष्वेव व्यवस्थितमित्युच्यते। नहीदं प्रत्यक्षादिभिरवगम्यते। वाचकत्वमिति चेत्? तद्गाव्यादिष्वप्यविशिष्टम्, तेषा-मपि हि प्रयोगप्रत्ययानुपपत्त्या वाचकत्वं लोके गम्यते। न ह्यवाचकानां प्रयोगः, प्रत्यायकत्वं वा घटते। नच यवादीनामिव प्रियङ्ग्वादिषु गुणात्प्रयोगसंभवः, मुख्याभावात्। मुख्यपूर्वको हि गौणः, नासावत्यन्तावाचकस्य गाव्यादेरवकल्पते। एतेन लक्षणा प्रत्यूढा। तेन गाव्यादीनामवाचकत्वं लोकविरुद्धमिति, न साधुरूपं शास्त्रेण नियन्तुं शक्यते। अनादित्वं साधुत्वमिति चेत्? तदपि गाव्यादिष्वविशिष्टम्, तत्रापि संबन्धुरस्मरणात्। अदृष्टसाधनत्वमिति चेत्? तस्य प्रत्यक्षाद्यविषयत्वात्। वेदवाक्यानाञ्च प्रतिपदमसंभवादुपलक्षणानुपपत्तेश्च। तत्र साधुत्वमेवोपलक्षणम्, तदेव च प्रमेयमित्यात्माश्रयदोषापत्तिः। तस्मान्मूला-भावादप्रमाणं व्याकरणम्।

परस्परविगानाच्च। सूत्रकारो ह्यवश्यवक्तव्यं प्रयोजनमनभिदधानो निष्प्र-प्रयोजनतामेव शास्त्रस्य मन्यते। भाष्य—वार्तिककारौ तु धर्मप्रयोजनतामिति विगीतत्वम्। तयोरपि मिथोज्ञान-तत्पूर्वकप्रयोगधर्मत्ववचनाद्विगीतत्वम्।

निष्फलं चेदं शास्त्रम्। न ह्यनेन धर्मार्थकाममोक्षाणां कश्चिदप्यवाप्यते, धर्म इति चेत् ? तत्रापि पूर्वोक्तनिर्मूलत्वेनाप्रमाणत्वात्। नच रक्षोहादीनामपि प्रयोजनत्वम्, तेषामप्यन्येभ्य एव शिष्याचार्यसंबन्ध-लोक-मीमांसादिभ्यः सिद्धिरिति, वार्तिकं एव प्रपञ्चितम्।

वेदविरुद्धञ्चेदं व्याकरणम्। 'दृष्टं सामे' पा. सू. ४-२-७ त्यधिकृत्य 'कलेर्ढक्' ४-२-८ 'वामदेवाड्ड्यड्ड्यौ' पा. ४-२-९ इत्युक्तम्। वेदे च 'यदकालयत्, तत्कालेयस्य कालेयत्वम्, तां. ब्रा. ८-१३ 'ततो वामं वसु समभवदि'त्युपन्यस्य, 'वामं वा इदं देवेभ्योऽजनि, तस्माद्वामदेव्यमि' तां. ब्रा. ७-८-१ ति-वेदबाधादप्रामाण्यम्।

पूर्वापरविरोधाच्च। अर्थप्रयुक्तानां हि शब्दानां व्याकरणं प्रतिज्ञातम्, वाक्यमेव च तथेष्टम्, न पदानि, अनर्थकत्वात्। यथोक्तम्—

'ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले।
देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः' ॥ वा.प.कां. २ श्लो. १४ इति।

ततश्च यथाप्रतिज्ञं वाक्यमेव व्याकरणेन संस्कर्तव्यम्, तदव्याकरणात् पदव्याकरणाच्च पूर्वापरविरोधः। पदद्वारा व्याकरणेन वाक्यमेव संस्क्रियते इति चेत् ? न। अत्यन्तमविद्यमानत्वाद्वाक्ये पदानाम्, तद्वारेणं वाक्यस्य विषाणद्वारेणेव शशस्य संस्कारासंभवात्। तस्मादप्रमाणं व्याकरणम्, सर्वैर्भाषितव्यमिति प्राप्ते—

अभिधीयते—

प्रयोगप्रत्ययौ तावद्वाचकत्वादृतेऽपि हि।
युक्तावेकस्य चार्थस्य न्याय्या नानेकशब्दता ॥ ३० ॥
अभियुक्तस्मृतेश्चात्र स्याद्विशेषावधारणम्।
स्मृतेः स्मृत्यन्तरं मूलं साधुरूपनिरूपणे ॥ ३१ ॥
प्रत्यक्षव्यवधानाच्च नान्धवाक्यसमानता।
प्रयोगनियमे मूलं वेदस्तस्मात्प्रमाणता ॥ ३२ ॥

गवादय एव साधवः, न गाव्यादय इति साधुस्वरूपनियमः, साधव एव प्रयोज्याः, नासाधव इति धर्माय प्रयोगनियम इति द्वौ नियमौ व्याकरणेन प्रतिपाद्येते। द्वयोरपि च मूलसंभवादुपपन्नं प्रामाण्यम्। तथाहि—प्रयोगनियमे

३

मन्वादिवत्सप्रत्ययप्रणीतत्वाद्वेदमूलत्वम्। नहि पाणिनि-कात्यायन-पतञ्जलिभ्योऽन्ये प्रत्ययितारो विद्यन्ते, तेन च तत्प्रत्ययात्स्वनुमानं वेदवचनम्।

प्रत्यक्षमेव च वाजसनेयादिषु वचनं 'तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः' श. ब्रा. ३-२-१-२४ इत्यादि, 'आहिताग्निरपशब्दं प्रयुज्य सारस्वतीमिष्टिं निर्वपेदि'त्यादिषु च प्रायश्चित्तविधानम्। 'उत त्वः पश्यन्नि'ऋ–सं–१०–७१–४ त्यादयश्च बहवो मन्त्रवर्णाः शब्दापशब्दविभागाभिज्ञ-तदनभिज्ञस्तुति-निन्दारूपाः। दृष्टार्थेऽपि च शब्दप्रयोगे तदाश्रितः साधुनियमो भोजनाश्रितदिङ्नियम इव शास्त्रेण क्रियत इति, न प्रयोगोत्पत्त्यशास्त्रत्वादव्यवस्था।

सत्यानृतवदनवर्जनयोश्चाविगीतमेव शास्त्रार्थत्वम्। तच्च शब्दार्थभेदेन द्विविधम्। तत्र यथैवार्थसत्यं यथावस्थितार्थकथनं धर्माय, तथा शब्दसत्यमपि यथावस्थिताविप्लुतशब्दोच्चारणमित्यर्थः। यथाचार्थानृतमन्यथावस्थिततस्यान्यथावचनं प्रत्यवायाय, तथा शब्दानृतमप्यन्यरूपे वाचके सति, अन्यरूपोच्चारणमिति यावत्। तेन न प्रयोगोत्पत्त्यशास्त्रत्वम्। द्वाभ्यामेव च वाक्याभ्यां साधूनेव शब्दान्सत्यपर्यायान्प्रयुञ्जीत, नासाधूनपशब्दाननृतपर्यायानिति समस्तशब्दापशब्दविधि–प्रतिषेधसिद्धेः, नानन्तवाक्यकल्पनापत्तिः। साधुत्वासाधुत्वे एव च शब्दापशब्दसत्यानृतपर्याये उपलक्षणे। अनादिवाचकत्वमेव साधुत्वम्, तद्विपर्ययश्चासाधुत्वम्। यत्तु—प्रयोगप्रत्ययान्यथानुपपत्त्या गाव्यादीनामपि वाचकत्वाद्व्यवस्थानुपपत्तिरित्युक्तम्, तत्रोच्यते। यद्यप्यमीषामवाचकत्वम्, यद्यपि च मुख्याभावे गौण–लाक्षणिकयोरसंभवः, तथापि वाचकाशक्तिजतया मूलशब्दोपस्थापनेन प्रत्यायकत्वं भविष्यति। अशक्तिजत्वापरिज्ञानाच्चोपशृण्वन्तोऽपि बालास्तत्रैव संज्ञासंज्ञिसंबन्धं शिक्षित्वा, तथैव स्वयं व्यवहरन्ति, तेभ्यश्च शिक्षित्वाऽन्येऽपीत्येवमपि प्रयोगप्रत्यययोरुपपत्तौ, नैकान्ततः सर्वेषामप्यविच्छिन्नपारंपर्यवाचकत्वमध्यवसातुं शक्यते।

संभवति चैवम्, नानेकशब्दत्वमेकस्यार्थस्याभ्युपगन्तुं न्याय्यम्, अनेकशक्तिकल्पनाप्रसङ्गात्। प्रयोगवेलायां चाष्टविधदोषनिदानविकल्पापत्तेः, वाच्यवाचकयोश्चैकैकस्यावधारितस्य नियमस्यानेकत्वे बाधप्रसङ्गात्। सास्नादिमानेव हि यस्यामभिधानक्रियायां कर्म, तस्यां गोशब्दः करणमित्ययमनयोः शब्दार्थयोः संबन्धः। तद्यदि गाव्यादिभिरपि सास्नादिमानभिधीयते, ततस्तस्यां वेलायाम् सास्नादिमत्कर्मिकायामप्यभिधानक्रियायां गोशब्दस्य करणत्वाभावात् प्रतीतबाधः।

तस्मादेकस्यैव वाचकत्वम्, इतरे तदशक्तिजा इति न्याय्यम्। करहस्तादिषु तु विशेषानवधारणादन्याय्याप्यनेकशब्दता गत्यन्तराभावादङ्गीक्रियते। गवादिगाव्यादिषु त्वभियुक्तस्मरणास्मरणाद्विशेषोस्तीति, न तावत्सर्वेषां वाचकत्वम्।

वाचकरूपनियमेपि स्मृतेः स्मृत्यन्तरमेव मूलम्, तस्याप्यन्यदित्येवमनादिरेवैषा स्मृतिपरम्परा। नचान्धपरम्परान्यायः, शब्दस्वरूपस्य शब्दान्तराद्विविक्तस्य प्रत्यक्षत्वात्। सर्वे हि स्वे स्वे काले गवादिशब्दान्प्रत्यक्षत एवोपलभन्ते। अतीतकाले च सत्तां पूर्वेभ्यो वृद्धेभ्यः श्रुत्वावधारयन्ति। सर्वकालमपि च केचन वृद्धाः सन्तीति, तत्प्रत्यक्षसंभवान्न कदाचिदपि प्रत्यक्षविच्छेदः। सर्वकालवर्तित्वमेव चानादित्वम्। साधुत्वञ्च वाचकत्वम्, तच्चाविच्छिन्नपारम्पर्याभियुक्तस्मरणेन सुलभमिति, न निर्मूलत्वम्।

न च विगानादप्रामाण्यम्, श्रुतीनामपि ग्रहणाग्रहणादिविगानदर्शनात्। फलं चास्य शब्दापशब्दविभागज्ञानमुपादानपरित्यागोपयोगि धर्माधर्मप्राप्तिपरिहारार्थम्। रक्षोहादि च वेदविरुद्धं कामं भवत्वप्रमाणं सर्ववेष्टनादिस्मरणवत्, न तावता सर्वाप्रामाण्यम्। एवं पदानर्थक्य–पदस्फोट–वाक्यस्फोटाद्यभ्युपगमोऽपि न न्यायमूल इति, न्यायाभावादप्रमाणम्। धर्माधर्मसिद्ध्यर्थन्तु शब्दापशब्दविभागकथनमभियुक्तप्रणीतत्वात्प्रमाणमेव–इति।

इति नवमं व्याकरणाधिकरणम्।



### आकृत्यधिकरणम् ॥ १० ॥

**प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ ३० ॥ अद्रव्यशब्दत्वात् ॥ ३१ ॥ अन्यदर्शनाच्च ॥ ३२ ॥ आकृतिस्तु क्रियार्थत्वात् ॥ ३३ ॥ न क्रिया स्यादिति चेत्, अर्थान्तरे विधानम्, न द्रव्यमिति चेत् ॥ ३४ ॥ तदर्थत्वात्प्रयोगस्याविभागः ॥ ३५ ॥**

प्रमाणं व्याकरणम्, तदनुगता एव गवादयो वाचका इति स्थितम्। इदानीम् वाचकप्रसङ्गाद्वाच्यविशेषश्चिन्त्यते–किमाकृतिः, उत व्यक्तिः–इति। तत्र यदि

लोकवेदयोः शब्दार्थानामन्यत्वं भवेत्, इदमनारम्भणीम्। तथाहि—लौकिकशब्दविषयन्तावदिदमधिकरणमनर्थकम्, वैदिकविषयन्तु भवत्यर्थवत्। ननु तत्र व्यवहारानुपातिनां शब्दानामर्थनिर्णयः शक्यते कर्तुम्, ऊपायाभावात्। तेनोभयस्मिन्नपि विषयेऽनारम्भणमेवाधिकरणस्यान्यत्वपक्षे स्यात्। एकत्वपक्षे तु लोके बृद्धव्यवहारानुसारेण शब्दार्थनिर्णयः कृतः, तत्रानुपयुक्तोऽपि वेदे फलिष्यति।

### तदुपोद्घातत्वेन लोकवेदाधिकरणम्

तेनाकृत्यधिकरणोपोद्घाततया लोक-वेदयोः पद-पदार्थानामन्यानन्यत्वे विचार्येते।

तत्र सत्यपि वर्णाभेदे केषांचित्स्वर—च्छान्दसवर्णागम—लोप—विकार-विपर्ययाध्यायानध्यायादिधर्मभेदेन जराराजदिपदयोरिव क्रमभेदेन व्यपदेशभेदात् स्पष्टो भेदः, स्वरु-यूपादिशब्दसाहचर्याच्च लोकवेदयोः पदानामन्यत्वम्, अर्थोऽपि च पदान्यत्वादेव, 'उत्ताना वै देवगवा वहन्ती'ति दर्शनाच्च। अश्ववालादिशब्दानाञ्च स्पष्टार्थान्तरदर्शनादन्य इति प्राप्ते—

अभिधीयते—

प्रत्यक्षप्रत्यभिज्ञानाद्वर्णैकत्वं प्रतिष्ठितम्।
वर्णात्मकं पदं तच्च तदभेदान्न भिद्यते॥ २३॥

ननु वर्णाभेदेऽपि स्वरादिभेदात्पदभेदो वाक्याधिकरणे दर्शितः—

'पदावधारणोपायान्बहूनिच्छन्ति सूरयः।
क्रम-न्यूनातिरिक्तत्व-स्वर-वाक्य-स्मृति-श्रुतीरि'॥ १—१—७—१।८।३ ति।

सत्यम्। योऽर्थप्रतीत्यौपयिको धर्मः, तद्भेदे भिद्यत एव पदम्। यथा पूर्वपदप्रकृतिस्वरत्वे बहुव्रीह्यर्थत्वम्, अन्तोदात्तत्वे स्वार्थवृत्तिता स्मरणादवगम्यते। ब्रह्मब्राह्मणादिषु तु न्यूनातिरेकवशादर्थभेदो लोकत एवावगतः। जरा-राजादिषु क्रमभेदादर्थान्यत्वाध्यवसायः। नैवं लोकवेदयोरर्थौपयिकधर्मभेदोऽस्ति। यदि ह्यनियतस्वराणामन्योऽर्थः, नियतस्वराणामन्योऽर्थ इति स्मृतितो लोकतो वाऽवगतम् स्यात्, ततो नियतानियतस्वरतया लोकवेदयोः पदभेदो भवेत्, नचैवम्, अतो नास्ति पदभेदः।

पद्यते गम्यतेऽनेनेति पदम्। अतो गमकस्वरूपस्य कियतापि रूपेण सति भेदे भिन्नं पदम्, तदभावे तु धर्ममात्रभेदान्न तद्भिद्यते। एवं 'देवासः, त्मने'त्यादिषु

लौकिकेभ्यो न्यूनातिरेककृतस्वरूपभेदे सत्यपि तद्रूपस्यार्थान्तरानवगमात्किंचिद्रूपभेदेऽपि लौकिकपदप्रत्यभिज्ञानात्, सत्यपि च केषांचिद्भेदे सर्वेषां भेदस्य अप्रामाणिकत्वात्। पदैक्ये च तदर्थावगमादुत्तानादिवचनस्यान्यपरत्वादश्ववालाद्यर्थभेदेऽपि केषांचिद्भेदे सर्वेषां तदभावात्सिद्धमेकत्वं लोकवेदयोः पदपदार्थानाम्।

इति लोकवेदाधिकरणम्।



## दशममाकृत्यधिकरणम्

एवं सिद्धे विचार्यते—किमाकृतिः शब्दार्थः, उत व्यक्तिः, उताकृतिविशिष्टा-व्यक्तिरिति त्रयः पक्षाः प्राधान्यतश्चिन्त्यन्ते। अन्ये तु विकल्प-समुच्चय-सम्बन्ध—समुदायादयः सर्वे पक्षा आकृतिविशिष्टव्यक्तिपक्षनिराकरणेनैव निराकृता भवन्तीति, न पृथग्विचार्यन्ते। तत्र—

प्रयोगचोदनाभावाद्व्यक्तेरेवाभिधेयता।  
नह्याकृतिरमूर्तत्वाद्व्यवहारोपयोगिनी ॥ ३४ ॥  
लिङ्ग-कारक—संख्याभिः संबन्धोऽस्या न कल्प्यते।  
सामानाधिकरण्यं च न जाति—गुणशब्दयोः ॥ ३५ ॥  
व्यक्तिवाचित्वपक्षे तु सर्वमेतत्समञ्जसम्।  
तेन शुद्धा विशिष्टा वा व्यक्तिः शब्दस्य गोचरः ॥ ३६ ॥

'व्रीहीनवहन्ति, पशुमालभेत, गामानय, ब्राह्मणो न हन्तव्यः' इति यावन्त एवमादयो विनाशिमूर्तद्रव्यगोचराः प्रयोगविधयः, प्रतिषेधा वा। ते सर्वे व्यक्तावेव संभवन्ति, नाऽऽकृतौ। नह्याकृतिरवहन्तुमालब्धुमानेतुं हन्तुं वा शक्यते, नित्यत्वादमूर्तत्वाच्च। तेनानर्थकं तद्विधानम्। प्रतिषेधश्च प्राप्त्यभावात्। व्यक्तिपक्षे तूपपद्यते। तस्माद्व्यक्तिः शब्दार्थः।

एवं वृक्षौ वृक्षाभ्यामिति व्यक्तौ प्रातिपदिकार्थे प्रत्ययाभिहितानि लिङ्ग-संख्या—कारकाणि तया संबध्यन्ते। जातेरलिङ्गत्वादसंख्यत्वादमूर्तत्वेनाकारकत्वाच्चासंबन्धः स्यात्।

सामानाधिकरण्यञ्च 'गौः शुक्लः' इति शुक्लव्यक्तिवचनयोरेकार्थत्वादुपपद्यते। जाति–गुणविशिष्टद्रव्यवचनत्वेऽपि विशेषणभेदे सत्यपि विशेष्याभेदादुपपन्नम्। त्वत्पक्षे तु जाति–गुणमात्रवृत्तित्वादर्थभेदे दुर्लभं सामाधिकरण्यं स्यात्। एवं 'पुरुषो देवदत्तः' इति जातिद्रव्यवचनयोर्दर्शयितव्यम्। तस्माद्व्यक्तिरेवार्थः।

कथं तर्हि व्यक्त्यन्तरे प्रयोगः, यत्र न दृष्टः शब्दः ? तत्र सामान्यस्योपलक्षणत्वाददोषः। यैवमाकृतिका, सा गौरिति सामान्यमुपलक्षणीकृत्य शब्दार्थविवक्षा–योऽयं शुक्लवासाः, स देवदत्त इतिवत्। यथा च तत्रोपलक्षणभूतम् वासोऽनभिधाय, देवदत्त एवाभिधीयते, तथेहाप्युपलक्षणमात्रत्वात्सामान्यस्यानभिधाने व्यक्तय एव शुद्धा अभिधीयन्ते। एकोपलक्षणत्वादेव नानेकशक्तिकल्पनापत्तिः। आकृतिविशिष्टव्यक्त्यभिधाने तु न कश्चिद्दोषः। तस्माद्व्यक्तिरेव शुद्धा, विशिष्टा वा शब्दार्थः–इति।

नैतद्युक्तम्। कुतः ?

आनन्त्य-व्यभिचाराभ्यां शक्त्यनेकत्वदोषतः।
संदेहाच्चरमज्ञानाच्चित्रबुद्धेरभावतः ॥ ३७ ॥
अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः।
आकृतेः प्रथमज्ञानात्तस्या एवाभिधेयता ॥ ३८ ॥
व्यक्त्याकृत्योरभेदाच्च व्यवहारोपयोगिता।
लिङ्गसंख्यादिसंबन्धः सामानाधिकरण्यधीः ॥ ३९ ॥
सर्वं समंजसं ह्येतद्धस्त्वनेकान्तवादिनः।
लक्षणा वाभ्युपेतव्या जातेस्तेनाभिधेयता ॥ ४० ॥

नह्यनन्तासु व्यक्तिषु संज्ञित्वं शक्यतेऽवगन्तुम्। व्यभिचाराच्च व्यक्तीनामशब्दार्थत्वं। नियमलक्षणत्वात्संबन्धस्य, अनियमे तदयोगात्। अनन्ताश्च शब्दव्यक्तयोऽनन्तासु व्यक्तिषु कल्प्याः। जात्युपलक्षणत्वेऽप्यभिधेयानामानन्त्याच्छक्त्यानन्त्यमस्त्येव। व्युपत्तिकाले हि जातिरुपलक्षणम्, नाभिधानसमये। अभिधानं हि प्रातिस्विकेनैव रूपेण व्यक्तिगतम्। तद्यथाऽक्षत्रयमेकापवरकस्थमेकापवरकस्थित्यैवोपलक्ष्य, कश्चित्कंचिदाह–'य एतस्मिन्नपवरकेऽधुना स्थिताः, तेऽक्षशब्दाभिधेयाः' इति। तत्र यद्यपि व्युत्पत्तिसमयेऽपवरकस्थितिर्नामैकमुपलक्षणं लभ्यते, तथापि शब्दस्तदनादरेण व्यक्तित्रयमात्रमेव स्वरूपेणा अभिधत्त इति, भवति शक्तित्रयम्। एवमिहापि।

यद्यपि व्युत्पत्तिसमये जातिरेकोपलक्षणमासीत्, तथापि शब्दस्तामस्पृशन्नेव नानारूपा व्यक्तीः स्वेनैव रूपेणाभिधत्त इति, स्यादेव शक्त्यानन्त्यम्। अपि च यद्यव्यपदेश्यं धर्मिस्वरूपमभिधेयम्, ततो गोशब्दोच्चारणाद्गोव्यक्तिः प्रतीयमानापि नाश्वादिव्यक्तिभ्यो व्यवच्छिन्ना प्रतीता स्यात्। न ह्यसाधारणमाकारमन्तरेण द्रव्यं द्रव्यान्तरव्यवच्छिन्नं प्रतीयते। ततश्च गौरित्युक्ते सर्वत्र अविशिष्टा प्रतीतिः स्यात्। यथाह—'अव्यपदेश्यत्वेन सर्वत्राविशेषणप्रसंगादि' ति। अथाभिधानसमयेऽपि जातिरुपलक्षणमित्यभिदधदेव हि व्यक्तिं शब्दो जातिमुपलक्षणमुपादाय तज्जातीयरूपेणाभिधत्ते गोजातीयमिति। ततः प्रथमं जातिरभिधातव्या। नह्यनभिधाय जातिं तज्जातीयत्वेन रूपेण व्यक्तिरभिधातुं शक्यते।' ततश्च विशिष्टाभिधानमेव वाचोयुक्त्यन्तरेणापन्नम्, न शुद्धाभिधानम्। विशिष्टाभिधाने च पूर्वतरं विशेषणमभिघातव्यम्। तदभिधाने च तत एवात्यन्ताविनाभूतव्यक्तिप्रतिपत्तिसिद्धेर्न तत्राभिधानशक्तिकल्पनावसरः।

किंच गोशब्द उच्चरिते व्यक्तिषु संशयो भवति, न कस्यांचिन्निर्णयः। यत्र च संशयः, न तस्य शब्दाभिधेयता, शब्दस्य निश्चयजनकत्वात्। सामान्यं तु निर्णीयत इति भवत्यभिधेयम्। नन्वसत्यपि व्यक्तिविशेषनिर्णये व्यक्तिमात्रम् निर्णीयत एव। किमिदं व्यक्तिमात्रं,?सामान्यम्, विशेषो वा। द्व्याकारैव हि वस्तुषु बुद्धिर्व्यावृत्त्यनुगतरूपा। तत्र विलक्षणबुद्ध्यालम्बनं व्यक्तिः, सामान्यबुद्ध्यालम्बनं च सामान्यम्, न तदुभयातिरिक्तं व्यक्तिमात्रं नाम किंचिदस्ति वस्तुनो रूपम्। सामान्यमेव त्वनेन मात्रशब्देनाभिधीयत इति तदेवाभिधेयम्। प्रथमं च सामान्यमेव शब्दाद्गम्यते, पश्चाद्व्यक्तिष्वाकाङ्क्षामात्रं जायते। ततस्तदेवाभिधेयम्, न व्यक्तिविशेषः। विचित्राश्च खण्डमुण्डादिरूपा व्यक्तय इति, विचित्रा गोशब्दोच्चारणे बुद्धिः स्यात्। एकाकारा तूपपद्यते, अतोऽभिधेया जातिः। अन्वयव्यतिरेकाभ्यां चैवमेव युक्तम्।

व्यवहाराङ्गता च जातेर्व्यक्त्यनतिरेकादुपपद्यते। अतोऽभिधेया जातिः। नहि जातिर्नाम व्यक्तेरर्थान्तरभूतं किमपि तत्त्वम्, अपि तु वस्त्वेव ह्येकमुभयात्मकं व्यावृत्त्यनुगतरूपया बुद्ध्या गृह्यते। तत्र सामान्यं शब्दार्थः—इति। अयमर्थः—सामान्यात्मना वस्तुशब्दाद्गम्यते, न विशेषात्मनेति। यच्च सामान्यात्मना शब्देन बोधितम्, तस्य क्रियासंबन्धश्चोद्यते, शक्नोति च तत्क्रियां साधयितुम्। अतस्तदेव क्रियाश्रयं विशेषरूपमपि। लिङ्गसंख्या-कारकसंबन्धः, सामानाधिकरण्यञ्च सर्वमनेकान्ताश्रयेणैव सुपरिहरम्।

यदा तु भेद एव जाति-व्यक्त्योः, तदा सर्वमिदं लाक्षणिकव्यक्त्याश्रयणे-नोपपद्यते। यत्र तु 'पशुना यजेत' 'अरुणया क्रीणाती' त्यादौ करणत्वश्रवणम्, तत्र जाति-गुणयोश्चामूर्तयोरपि द्रव्यावच्छेदेन मुख्यमेव करणत्वमुपपन्नम्, अधिकरण-संप्रदानादिरूपत्वंमूर्तस्यासंभवादभेदम्, लक्षणां वाश्रित्य समर्थनीयम्।

आह च—

'तेन तल्लक्षितव्यक्तेः क्रियासंबन्धचोदना।
जातिव्यक्त्योरभेदो वा वाक्यार्थेषु विवक्षितः'॥ इति।

तत्सामान्यमेवाभिधेयम्, न व्यक्तिरिति सिद्धम्।

इति दशममाकृत्यधिकरणम्

इति शास्त्रदीपिकायां प्रथमाध्यायस्य तृतीयः पादः॥ ३॥



# प्रथमाध्याये चतुर्थः पादः।

## प्रथमं नामधेयप्रामाण्याधिकरणम्॥ १॥

### उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात्॥ १॥

उद्भिदादिशब्दानुदाहृत्य, गुणविधिः, नामधेयमिति भाष्ये विचार्य, 'उक्तं सामाम्नायैदमर्थ्यमि' त्यनेन सूत्रेण पूर्वपक्षमभिधाय, 'अपि वा नामधेयं स्यादि'-त्यनेन सिद्धान्तितम्, तत्तु प्रमाणलक्षणासंगतमिति वार्तिककारेणाधिकरणभेद-माश्रित्य, प्रथममुद्भिदादिशब्दानां धर्मे प्रामाण्यमस्ति, नवेति विचार्य, पश्चाद्गुण-विधि-नामधेयविचारो दर्शितः। तदनेन शास्त्रारम्भप्रयोजनसमर्थनावसरे—

'पूर्वं प्रमाणरूपाभ्यां पादेनाद्यस्य निर्णयः' १-१-१ श्लो. वा. १२६।

इति वार्तिकं दृष्ट्वा, प्रथम एव पादे प्रामाण्याप्रामाण्यचिन्ता समाप्ता। त्रिपाद्यां तु कथंलक्षण इति थमुना प्रतिज्ञातः प्रामाण्यप्रकारो निरूप्यते, विध्यर्थ-

वाद-मन्त्र-नामधेयस्वरूपैर्धर्मे प्रामाण्यं वेदस्येति प्रकार-तद्वतोरनतिभेदात्समस्तः अध्यायः प्रमाणलक्षणमाख्यायत इति ये मन्यन्ते, ते निराकृताः। तथासति हि नामधेयस्वरूपप्रकारचिन्तनाद्यथाभाष्यमेवाधिकरणं संगतं स्यात्। तस्मान्न तावदयं पक्षो वार्तिककारस्य संमतः।

न च युक्तः, स्मृतिपादस्य त्रिपाद्यामसंगतिप्रसङ्गात्। न हि तत्र वेदप्रामाण्यप्रकारनिरूपणम्। तस्मात्सर्वस्मिन्नेवाध्याये धर्मप्रमाण-तदाभासनिरूपणमेव क्रियत इति वक्तव्यम्। तत्र चोदनैव साक्षात्प्रमाणम्। अर्थवाद-मन्त्र-स्मृति-नामधेयानि तच्छेषत्वेन, तन्मूलत्वेन च प्रमाणं भवन्तीति धर्मप्रमितेरितिकर्तव्यतास्थाने नियतं निपतन्ति। चोदना तु प्रधानं प्रमाणम्। तस्याश्च प्रथमपाद एव समाप्तं प्रामाण्यमित्यनेनाभिप्रायेणोक्तम्–'पादेनाद्यस्य निर्णयः' इति। चोदनैव हि साक्षात्प्रमाणम्। तत्तु प्रथमपादेनैव निर्णीतमित्यभिप्रायः। त्रिपाद्यां त्वप्रधानप्रमाणनिरूपणमित्येतावान्भेदः। प्रमाणचिन्तात्मकत्वन्तु सकलस्याध्यायस्य अविशिष्टमिति, स एवैकोऽध्यायार्थः।

तदिह संभवदाख्यातसामानाधिकरण्यानुद्भिदभिजिच्चित्राज्यपृष्ठबहिष्पवमानाग्निहोत्राघारश्येनादिशब्दानुदाहृत्य चिन्त्यते-किमेते धर्मं प्रति प्रमाणम्, नवेति। तत्र—

विध्यर्थवादमन्त्रांशैर्वेदाद्धर्मः प्रतीयते।
नचोद्भिदादिशब्दानां तेष्वन्तर्भावसंभवः॥ ४१॥
न तावदर्थवादत्वं स्तुतिबुद्धेरभावतः।
उत्तमामन्त्रणास्यन्त–त्वान्तरूपाद्यभावतः ॥ ४२॥
मन्त्रप्रसिद्ध्यभावाच्च मन्त्रतैषां न युज्यते।
नच विध्यन्तपातित्वं साध्याद्यनभिधानतः॥ ४३॥

न तावदेते साध्यमभिदधति, अफलवचनत्वात्। न साधनम्, समानपदोपात्तधात्वर्थसाधनावरोधाद्भावनायाः। नच गुणविधानेनेतिकर्तव्यतान्तर्भावः, उद्भिदादिरूपस्य लोके गुणस्याप्रसिद्धत्वात्, मत्वर्थलक्षणादोषात् च, चित्रादिषु वाक्यभेदप्रसङ्गात्, अग्निहोत्रादिषु तत्प्रख्यशास्त्रान्तरसद्भावात्, श्येनादिषु उपमानानुपपत्तेः। नच नाम्न इतिकर्तव्यतान्तर्भावः, नाम्नोऽनितिकर्तव्यतारूपत्वात्, अप्रवृत्तिविशेषकरत्वेन च नाम्नोऽनर्थकत्वादप्रसिद्धत्वाच्च। तस्मादप्रमाणमेवं-जातीयकमिति पूर्वः पक्षः—

सिद्धान्तस्तु—

सकलस्यैव वेदस्य स्वाध्यायाध्यायवाक्यतः।
विज्ञातं पुरुषार्थत्वमुद्भिदादेरपि ध्रुवम् ॥ ४४ ॥

तत्र त्वदुक्तेनैव मार्गेण मन्त्रार्थवादत्वासंभवात् विध्युद्देशान्तर्भावस्य च प्रत्यक्षत्वात्, तत्रैव गुणत्वेन नामधेयत्वेन वा प्रामाण्यम्, स्वाध्यायविध्यध्यापितस्य आनर्थक्यासंभवात्सर्वानुपपत्तिपरिहारेणाध्यवसितव्यम्। एतावदिहाधिकरणे स्थिते भाव्यं तावत्प्रामाण्येनेति। तदेतदर्थवादप्रस्तावेऽभिहितमपि, अनेकविचारान्तर्हितमिति कृत्वा, विशेषविचारायानेन सूत्रेणोपस्थाप्यते।

इति प्रथमं नामधेयप्रामाण्याधिकरणम्।

द्वितीयमुद्भिदधिकरणम् ॥ २ ॥

## अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात् ॥ २ ॥

विधित्वेन प्रामाण्यमित्येतावदवस्थितम्। तच्च द्वेधा संभवति—गुणविधानेन, नामधेयत्वेन वा। यावदनयोरन्यतरन्नोपपाद्यते, तावत्पूर्वावगतमपि प्रामाण्यम्, न प्रतितिष्ठतीति, तत्प्रतिष्ठापयिषया गुणविधि-नामधेयचिन्ता प्रस्तूयते। तत्र प्रथमं तावदुद्भिदादिषु यौगिकेषु चिन्त्यते—किं गुणविधिः, कर्मनामधेयम्, इति। तदर्थं किमेषां वैयधिकरण्येनाख्यातसंबन्धः, सामानाधिकरण्येन वेति।

तत्रावयवयोगेन खनित्रादौ प्रसिद्धितः।
प्रवृत्त्यौपयिकत्वाच्च गुणो यागे विधीयते ॥ ४५ ॥

यद्यपि व्रीह्यादिवदेते न क्वचित्समुदायरूपेण रूढाः, तथाप्यवयवद्वारेणोद्भेदनसाधनेषु खनित्रादिषु प्रसिद्धिसंभवात्, कर्मणि च कथञ्चिदप्यप्रसिद्धेः, नामधेयत्वेऽपि च यजेः प्रवृत्त्यन्तरानुपदेशादानर्थक्यापत्तेः गुणविधिपक्षे तु गुणे प्रवृत्त्यौपयिकत्वेन प्रयोजनवत्त्वाद्गुणविधानमेव युक्तम्। न च मत्वर्थलक्षणा, यागानुवादात्। यदि ह्यत्र यागो विधीयेत, ततस्तस्य करणत्वादुद्भिदाद्यपि

करणमिति, करणस्य करणान्तरेण संबन्धायोगात् भिन्नार्थयोश्च श्रुत्या सामानाधिकरण्याभावादुद्भिच्छब्देन तद्वन्तं यागं लक्षयित्वोद्भिद्वता यागेनेति सामानाधिकरण्येन गुणो विधातव्य इति, भवेन्मत्वर्थलक्षणा।

यदा तु प्रकृतज्योतिष्टोमयागानुवादेन गुणमात्रमनेन विधीयते, तदा विधिवाक्ये करणत्वेनोपदिष्टस्यापि यागस्यासाधितस्य करणत्वानुपपत्तेः, यत्-अर्थाक्षिप्तं साध्यत्वम्, तदनुवादेन तदर्थतया, तदाश्रित्य वा वाक्यान्तरेण फलाय गुणे विधीयमाने नास्ति मत्वर्थलक्षणा—'उद्भिदा यागः कर्तव्यः' इति, यागसाधनेनोद्भिदा पशून्भावयेदिति वा।

नन्वेवं ज्योतिष्टोमवाक्येऽपि ज्योतिष्टोमगुणविधानान्न यागविधिरस्ति, तथान्यत्रापि सर्वत्रोपपदश्रवणात्तद्विधिरेवेति, क्वचिदपि कर्मविध्यभावाल्लौकिककर्माश्रयणेन गुणविधीनां सापेक्षत्वेनाप्रामाण्यप्रसङ्गः।

नैष दोषः। प्रकृतकर्माभावेन गत्यभावाज्ज्योतिष्टोमवाक्ये कर्मविधानम्, तस्मिंश्च विधीयमानेऽनेकविधिदोषात्, मत्वर्थलक्षणादोषाच्च ज्योतिष्टोमपदमेकम् कर्मनामधेयं भविष्यति। यद्वा तदेकं मत्वर्थलक्षणामाश्रित्य गुणविशिष्टकर्मविधानम्, उद्भिदादयस्तु तत्रैव प्रकृते कर्मणि गुणविधयः, वरं हि लक्षणाश्रयणम्, अप्रामाण्यात्। न च लक्षणायाः प्रमाणान्तरापेक्षत्वेनाप्रामाण्यम्, पदसमभिव्याहारादेव लक्षणासिद्धेः, इतिकर्तव्यतासंनिधिविशेषाच्च 'भूयस्त्वेनोभयश्रुती' मी. द. ३–३–३ त्यनेन न्यायेन ज्योतिष्टोमवाक्य एव कर्मविधानम्, नेतरेषु।

भवतु वा ज्योतिष्टोमवाक्येऽपि गुणमात्रविधानम्, एवमपि नाप्रामाण्यम्, 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती' ति, विश्वजित्सर्वपृष्ठोऽतिरात्रो भवती' त्यादिष्वनेकगुणोपादानेन कर्मणोऽवश्यं विधातव्यत्वात्। तत्रैव ज्योतिष्टोमोद्भिदादिगुणविधिसंभवान्न लौकिककर्माश्रयणादप्रामाण्यम्। कथमप्रकृतेषु गुणविधानमिति चेत्? लौकिकं वा किं प्रकृतम्, येन तत्र गुणः विधीयेत, तेन यदि तावदप्रकृतेऽपि विधिः स्यात्, ततो विश्वजिदादिष्वेव विधानान्नाप्रामाण्यम्।अथ न तत्र लौकिकेष्वप्यविधानाद्विशिष्टकर्मविधिरिति,उभयथापि नाप्रामाण्यम्। न चौत्पत्तिकज्योतिष्टोमादिगुणविरोधादुद्भिदादिगुणानामविधानम्, काम्यत्वेन तेषां नित्यगुणबाधकत्वात्। 'उद्भिदा यजेत पशुकामः' इति हि प्रकृतं ज्योतिष्टोममाश्रित्योद्भिद्गुणः पश्वर्थत्वेन विधीयते। तस्माद्गुणविधिरिति प्राप्ते

अभिधीयते—

धातोरत्यन्तपारार्थ्याद्विप्रकृष्टविधेस्तथा ।
फले कर्मणि वा नेह गुणो वाक्ये विधीयते ॥ ४६ ॥

फले तावद्विधीयमाने गुणे परपदसंबन्धविधानाद्धातोरत्यन्तपारार्थ्यम् स्यात्, विप्रकृष्टार्थविधिश्चापद्यते। अथ तु कर्मण्येव गुणो विधीयते, तथापि विप्रकृष्टार्थविधानम्, धातोश्च किंचित्पारार्थ्यमस्त्येव, फलपदञ्चानर्थकं स्यात्।

दध्यादौ गत्यभावेन सर्वमेतत्समञ्जसम्।
उद्भिदादिषु तन्नैवं नामधेयत्वसंभवात् ॥ ४७ ॥

'दध्नेन्द्रियकामस्य जुहुयात्, व्रीहिभिर्यजेते'त्येवमादिषु दधिव्रीह्यादिपदानामर्थान्तरे नित्यं रूढत्वात् न सामानाधिकरण्येन यजिनामत्वं शक्यम्। कल्पयितुम्। अप्रसिद्धार्थं हि प्रसिद्धपदसामानाधिकरण्येन निर्णीयते। दध्यादयस्तु निरूढत्वान्न कथंचिदपि धातुसामानाधिकरण्यं प्रतिपद्यन्त इति, गत्यभावात्तत्र धातुपारार्थ्यम्, विप्रकृष्टार्थविधानं चाश्रितम्। उद्भिदादयस्तु यथैवावयवद्वारेण खनित्रादौ वर्तन्ते, तथैव स्वफलोद्भेदनकारित्वाद्यागेऽपीति, नात्र धात्वर्थविधानं बाधितव्यम्।

विशिष्टविधिपक्षे तु भवेन्मत्वर्थलक्षणा।
सोमादौ गत्यभावात्सा नत्वत्र गतिसंभवात् ॥ ४८ ॥

उद्भिदादयो हि करणत्वेन श्रूयन्ते। करणञ्च कारकत्वात्क्रिययैव संबध्यते, नान्येन। क्रिया चात्र प्रत्ययवाच्या फलभावनैव। नच तस्यामुद्भिदादीनां करणत्वम्, संभवति, समानपदोपात्तधात्वर्थावरोधादिति भावार्थाधिकरणे मी. द. २–१–१ वक्ष्यामः। नच धात्वर्थेनोद्भिदादीनां संभवति संबन्धः। तस्य धातुना प्रत्ययार्थं प्रति करणत्वेनोपादानात्, क्रियारूपतयाऽनवगमात्, क्रियारूपत्वे वा धात्वर्थस्य प्रत्ययार्थं प्रति करणत्वानुपपत्तेः। न च सत्यपि प्रत्ययवाच्यायाः फलभावनायाः धात्वर्थावरोधेऽर्थाक्षिप्तया धात्वर्थभावनयोद्भिदादीनां संबन्ध इति वक्तव्यम्, तस्या इहाऽश्रुतत्वात्। अश्रुतया च तया शब्दान्तरस्यान्वयायोगात्। फलभावना ह्यत्र श्रुता, नच धात्वर्थभावना। नचाध्याहृत्य धात्वर्थभावनां तया संबन्धः—उद्भिदा भाव्यमानेन यागेन पशून्भावयेत्—इति। विनाप्यध्याहारेण वाक्यसमन्वयोपपत्तेः। तदवश्यं यदत्र प्रत्ययार्थे करणं यागः, तत्रैव तृतीयान्तैरुद्भिदादिपदैः

वर्तितव्यम्, नान्या गतिरस्ति। तत्र गुणविधिपरत्वेऽर्थान्तरवाचिनामुद्भिदादिपदानामर्थान्तरे यागे वृत्तिर्मत्वर्थलक्षणया स्यात्, 'उद्भिद्वता यागेनेति। नामधेयत्वे तु श्रुत्या।

'सोमेन यजेते' त्यादिषु तु सोमादिशब्दानामर्थान्तरेऽत्यन्तनिरूढत्वाद्यागे च कथंचिदप्यप्रसिद्धेरप्रसिद्धकल्पनातो वरं प्रसिद्धार्थद्वारेण लक्षणाश्रयणमिति, मत्वर्थलक्षणया गुणविशिष्टयागविधानमङ्गीकृतम्, सोमवता यागेन समीहितम् कुर्यादिति। उद्भिदादीनां त्ववयवद्वारेण कर्मण्यपि प्रसिद्धिरस्तीति, श्रुत्या नामधेयत्वं युक्तम्।

## विचारस्य प्रयोजनवर्णनम्

प्रयोजनं नाम्नां सर्वत्र व्यवहार एव। नह्यन्तरेण नामवेयमृत्विग्वरणादिष्वनेनाहं यक्ष्य इति लघुराख्यानोपायः स्यात्। क्वचिच्च गुणफलोपबन्धेनार्थवत्ता। 'दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयामिष्टिं निर्वपेदि'ति गुणोपबन्धः, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति फलोपबन्धः। क्वचिच्च भेदकतया अर्थवत्त्वम्। यथा 'अथैष ज्योतिरि' तां० ब्रा० १६-२-१ त्यादिषु वक्ष्यते। यथाचात्रैव 'उद्भिदा यजेत पशुकामः' इति। नामधेयत्वाभावे हि प्रकृतस्यैव ज्योतिष्टोमस्य फलविधिरयं स्यात्। नामधेयत्वे तु यागान्तरविधानात्सिद्धमर्थवत्त्वम्।

इति द्वितीयमुद्भिदधिकरणम्।

---

## तृतीयं चित्राधिकरणम् ॥ ३ ॥

## यस्मिन्गुणोपदेशः प्रधानतोऽभिसंबन्धः ॥ ३ ॥

इह ये लोके जाति–गुणवचनतया निरूढाः, गुणफलोपबन्धेषु वाक्येषु श्रुताः, कर्मण्यपि योगवशेन संभवद्वृत्तयः, उत्पत्तिवाक्ये, फलवाक्ये, गुणवाक्ये वा तृतीयानिर्देशेन कर्मसमभिव्याहृताः शब्दाः, ते सर्वे उदाहरणम्। यथा 'चित्रया यजेत पशुकामः' तै० सं० २-४-६-१ 'पञ्चदशान्याज्यानि, सप्तदशानि

पृष्ठानि, त्रिवृद्बहिष्पवमानमि' ता० ब्रा० २०-१-१ ति चित्राज्यपृष्ठबहिष्पवमान-शब्दाः, ते गुणविधयः, कर्मनामधेयानि वेति संशयः। तदर्थं च किं गुणविधौ वाक्यभेदो भवति, नवेति चिन्तयितव्यम्।

कस्मात्पुनरुत्पत्तिवाक्यमे'वाज्यैः स्तुवेत' इत्यादिकं नोदाह्रियते। पक्ष-द्वयेऽपि निर्णयकारणाभावात्, गुणवाक्याधीन एव निर्णय इति, तदेवोदाहृतम्। तथाहि—न ताव'दाज्यैः स्तुवत' इति गुणविधिरध्यवसातुं शक्यते। घृतस्य स्तुतौ करणत्वासंभवात्, तत्र लक्षणया घृतसंबन्धिभिर्मन्त्रैरिति वक्तव्यम्। नच घृतसंबन्धिनः केचिन्मन्त्राः प्रसिद्धाः, ये लक्ष्येरन्। तत्रानेनैव वाक्येन लक्षणया घृतसंबन्धं मन्त्राणां विधाय, तैश्च स्तोत्रे विधीयमानेऽत्यन्तगौरवम्। विधौ च लक्षणाऽत्यन्तक्लिष्टा समाश्रिता स्यात्। तद्वरं 'यदाजिमीयुः, तदाज्यानामाज्यत्वमि' तां० ब्रा० ७-२-१ त्यादिवाक्यशेषावगतयोगाश्रयणेन नामधेयत्वमङ्गीकृतमिति. न गुणविधित्वाध्यवसानम्, रूढत्वाच्च नामधेयत्वमपि न स्वध्यवसानम्।

यदा तु 'पंचदशान्याज्यानी'ति संख्याविशिष्टान्याज्यान्यवान्तरप्रकरणेन स्तोत्रगुणतया विधीयन्ते, तदा तेनैव प्राप्तमाज्यसम्बन्धं लक्षणया मन्त्राणा-मनूद्य, स्तुतिमात्रमुत्पत्तिवाक्ये विधीयते। अनुवादे च लक्षणा न दोषः। स्तुतिमात्रविधानाच्च लाघवं विधेर्विनैव नामधेयत्वेन लभ्यत इति, प्रसिद्ध्यादि-भिर्गुणवचनतैवाध्यवसीयते।

यदा तु नात्र संख्याविशिष्टाज्यविधानं संभवति, किंतु आज्यानुवादेन संख्यामात्रविधानम्, तदा स्तोत्रे घृतस्याप्राप्तत्वात्तदनुवादासंभवात्स्तोत्रानुवादेनैव संख्या विधातव्या। तच्चाज्यशब्दस्य स्तोत्रवाचित्वेऽवकल्प्यते, नान्यथेति गुण-वाक्यालोचनेनैवाज्यादिपदमुत्पत्तिवाक्यगतं नामधेयत्वेनाध्यवसीयत इति, पक्ष-द्वयेऽपि गुणवाक्याधीनत्वान्निर्णयस्य, तत्रैव कथा प्रवर्तते। 'पञ्चदशान्याज्यानी' ति—किं संख्यायुक्तं घृतं स्तोत्राङ्गतया विधीयते, किंवाज्यशब्देन स्तोत्रमुद्दिश्य संख्यामात्रं विधीयत इति। एवं 'सप्तदशानि पृष्ठानी' त्यादिषु द्रष्टव्यम्।

एवं चित्रयेत्यत्रानीषोमीययागानुवादेन चित्राशब्देन चित्रत्व-स्त्रीत्वे विधीयते, उत 'दधि मधु घृतं पयो धाना उदकं तण्डुलाः तत्संसृष्टं प्राजापत्यमि'ति प्रकृतो यागः फले विधीयते. चित्राशब्दस्य चित्रद्रव्यवाचकत्वात्तत्रैव नामधेयत्व-मिति। तत्र प्रसिद्ध्यादिभिर्गुणविधिः, रूढत्वाच्च नोद्भिदादिन्यायः। उत्पत्ति-वाक्यावगतकरणत्वेनार्थाक्षिप्तं यत् यागस्य साध्यत्वम्, तदनुवादेन वैयधिकरण्ये-नैव गुणविधानान्न मत्वर्थलक्षणेत्युक्तम्।

न च वाक्यभेदः, एकपदोपात्तत्वाच्चित्रत्व-स्त्रीत्वयोरुभयविशिष्टैककारकविधानात्। पशुकामपदमपि पशुसाधनकत्वादग्नीषोमीयस्य यागस्यार्जनाङ्गतया प्राप्तसाधनकामनानुवादः। अस्ति हि पशुयागं कुर्वतः पशुकामना। 'पञ्चदशान्याज्यानी'त्यत्रापि संख्याविशिष्टाज्यविधानान्न वाक्यभेदः। तस्माद्गुणविधिः। एवं 'चाज्यैः स्तुवते' इत्याद्युत्पत्तिवाक्येऽप्याज्यादिपदं गुणवाक्यप्राप्तगुणानुवादकम्, न नामधेयमिति प्राप्ते—

अभिधीयते—

वाक्यभेदप्रसङ्गेन सामानाधिकरण्यतः।
अन्वाख्यानार्थवादाच्च नामतैवोपपद्यते ॥ ४९ ॥

चित्रत्वं स्त्रीत्वं च नैकेन विधातुं शक्यम्, वाक्यभेदप्रसङ्गात्। उभयविशिष्टकारकविधानेऽपि गौरवमस्त्येव। कामपदं च फले मुख्यम्, साधने गौणम्। प्रकृतफलाकाङ्क्षदध्यादियागातिक्रमश्च न न्याय्यः। तस्मात्तत्रैव फलमात्रविधानम्। चित्रापदञ्च सामानाधिकरण्येन नामधेयम्।

'पञ्चदशान्याज्यानी' त्यत्रापि समासाभावान्न संख्याविशिष्टद्रव्यप्रतिपत्तिरस्ति। तत्रोभयोर्द्रव्यसंख्ययोर्विधानाद्वाक्यभेदः। तस्मादाज्यानुवादेन संख्यामात्रं विधेयम्। तच्च यद्युत्पत्तावाज्यपदं नामधेयम्, ततो घटते, नान्यथेति गुणवाक्यवशादेवोत्पत्तौ नामत्वं ज्ञायते। सामानाधिकरण्याच्चाज्यैः स्तुवते' इति, वाक्यशेषाच्च यदाजिमीयुरित्यादेर्नामत्वमेव युक्तम्।

यत्तु वार्तिके 'पृष्ठैः स्तुवते' इत्युत्पत्तिवाक्यमुदाहृतम्, तत्र चोदयन्ति, यद्येतदुत्पत्तिवाक्यम्, तथा सत्युत्पत्तौ बहुत्वयोगाद्बहूनि मुख्यानि पृष्ठानि भवेयुः। तत्र यत्सप्तमे वक्ष्यते—ज्योतिष्टोमे पृष्ठबहुत्वाभावाद्वैकल्पिके द्वे एव पृष्ठे, नतु बहूनी' ति, मैत्रावरुणसामादिषु पृष्ठशब्दो गौणः। तेन 'विश्वजित्सर्वपृष्ठः' इति सर्वशब्दो बहुत्वापेक्षत्वान्न चोदकप्राप्तानुवादः—इति।

तद्विरुध्यते। 'रथन्तरं पृष्ठं भवति, बृहत्पृष्ठं भवती'त्युत्पत्तिवाक्यमिति वक्तव्यम्। तथा च स्वयमेव वार्तिककारो नवमे वक्ष्यतीति। सत्यमेवम्। अनादरात्त्विदमुक्तम्। एतदुक्तं भवति—सर्वथा सप्तदशानि पृष्ठानीत्येतदत्रोदाहरणम्, यदेव तूत्पत्तिवाक्यं पृष्ठैः स्तुवत इति वा, रथन्तरं पृष्ठं भवतीति वा। न तदेवोदाहर्तव्यमित्यभिप्रायः।

इति तृतीयं चित्राधिकरणम्।

## चतुर्थं तत्प्रख्याधिकरणम् ॥ ४ ॥

## तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥

'आघारमाघारयति, अग्निहोत्रं जुहोती'त्याघारशब्दोऽग्निहोत्रशब्दश्च गुणविधिः, कर्मनामधेयं वेति विचारः। प्रसिद्ध्यादिभिर्गुणविधिः। न च मत्वर्थलक्षणा, अग्निहोत्रशब्दे बहुव्रीहिणैवाग्नये होत्रमस्मिन्निति मत्वर्थस्योक्तं त्वादुपसर्जनार्थोऽग्निर्देवता विधीयते, नामधेयत्वे चारूपत्वं स्यात्। यद्यपि च दध्यादिवाक्यैर्द्रव्यं लभ्यते, तथापि देवताभावादरूपत्वम्। 'यदग्नये च प्रजापतये च सायं जुहोति' 'यत्सूर्याय च प्रजापतये च प्रातः' इत्यनयोरनेकगुणोपादानेन विशिष्टकर्मधानात्वाद्देवताविधौ वाक्यभेदादसामर्थ्यम्। नचैककारकविधानाद-वाक्यभेदः, विभक्तिपृथक्त्वेन कारकनानात्वात्। यदि ह्यग्नीषोमीयवदग्नि-प्रजापतिभ्यां समस्ताभ्यामेकविभक्तिरश्रोष्यत, तत उभयविशिष्टैकदेवताकारक-विधानान्न वाक्यमभेत्स्यत। अथापि क्रीणातिवत्पृथक्पदं विभक्तिः स्यात्, तथापि तया वाक्येनारुणैकहायनीवदग्नि-प्रजापत्योः युगपत्संबन्धात्स्यादुभयविशिष्टमेकं कारकम्। यदा तु यजति-ददाति-जुहोतिभ्य इव भावनाविभक्तिः प्रत्येकमग्नि-प्रजापतिभ्यामुच्चरन्ती देवताविभक्तिः प्रकृत्यर्थभेदभिन्नामेव देवतां भावनामिव प्रतिपादयति, तदा कुतो देवतैक्यम्। देवतासामान्येन त्वेकत्वं भावनासामान्येन तुल्यमिति, समस्तो वेद एकं वाक्यं स्यात्। अतो नामत्वे देवताविधानासंभ-वादरूपत्वमिति गुणविधित्वमेव युक्तम्। अविहितदेवताकेषु वा दर्विहोमेषु गुणविधानान्न तत्प्रख्यत्वम्।

आघारशब्देनापि क्षरणसमर्थं द्रव्यमाज्यपयःप्रभृत्यभिधीयते। तच्च द्वितीयानिर्देशादाघारणसंस्कार्यत्वेनावगम्यते। निष्प्रयोजनस्य संस्कारा-संभवात्प्रयोजनापेक्षायां प्रकृतद्रव्यापेक्षोपांशुयाजार्थता विज्ञायते। प्रकरणेन च गुणे विधीयमाने नास्ति मत्वर्थलक्षणा, मतुप्प्रत्यययुक्तस्यैव वाक्यस्य प्रकरणेन कल्पनात्। नचात्र यागो विधीयते, संस्कारमात्रस्य श्रवणात्। न च संस्कार-कर्माणि कचिन्नामवन्ति दृश्यन्ते। तस्माद्गुणविधिः। एवं च द्वितीयानिर्देशो युक्तो भवति, आघारस्य संस्कार्यत्वात्।

अग्निहोत्रे चार्थाक्षिप्तसाध्यत्वानुवादेनोपसर्जनार्थविधानात्। नामधेयत्वे तु तस्याविधेयत्वात्कर्मैव विधेयम्, तच्च करणमिति नामधेयं तृतीयान्तं स्यात्, अनुपपन्ना द्वितीया स्यात्। नच फलवाक्य एव कर्मणः करणत्वम्। उत्पत्तिवाक्ये तु फलवाक्यापेक्षितकर्मस्वरूपकर्तव्यतैव प्रतिपाद्यत इति वाच्यम्। विधेः करण-

त्वावगमात्कर्मत्वासंभवात्, साध्यत्वे च तस्य साध्यान्तरानपेक्षत्वान्न फल-वाक्येनापि फले विधातुं शक्यत इति, कर्मान्तरमेव फलवाक्ये स्यात्। तथा च आघाराग्निहोत्राधिकरणे २-२-५ वक्ष्यते—नह्यकरणभूतोऽसौ साध्यान्तरान-पेक्षत्वाद्वाक्यान्तरेणापि फले विधातुं शक्यते—इति। तस्मादुत्पत्तावपि कर्मणः करणत्वाद्द्वितीयाऽनुपपत्तिः। अतो गुणविधिः—

अत्रोच्यते—

वाक्यार्थो न विधातव्यो धात्वर्थविधिसंभवे।
पदान्तरं न चानन्यगति नामत्वसंभवात्॥ ५०॥

श्रुत्या हि धात्वर्थविधानम्, वाक्येनोपपदार्थस्य। तत्र यद्युपपदमनन्यगति स्यात्, स्याद्वाक्यार्थविधानम्। तत्तु शास्त्रान्तरप्रख्यापितं गुणं निमित्तीकृत्य नामधेयत्वेन संभवतीति, न धात्वर्थविधानं बाधितव्यम्।

किंपुनः शास्त्रान्तरम्-यदस्य गुणस्य प्रख्यापकम्। अग्नेस्ताव'दग्निर्ज्योतिः-ज्योतिरग्निः स्वाहेति सायं जुहोति' सूर्योज्योतिर्ज्योतिःसूर्यःस्वाहेति प्रातरित्ति वार्चनिकमन्त्रवर्णात्प्राप्तिः। 'यदग्नये च प्रजापतये च सायं जुहोती' त्येतत्तु मन्त्रवर्णप्राप्ताग्निसूर्यानुवादेन प्रजापतिसमुच्चयविधानमिति, अतो न वाक्यभेदः।

आघारवाक्येऽप्याघारसंज्ञके कर्ममात्रे विहिते 'चतुर्गृहीतं वा एतद-भूत्तस्याघारमाघार्यै' त्यनेनैवाज्यप्राप्तेः क्षरणात्मकत्वं प्राप्तमिति, तन्निमित्त-नामधेयत्वसंभवात्कर्मविधानमेव युक्तम्। दृष्टञ्च संस्काराणामपि नामधेयत्वम्—'उपांशुं गृह्णाति, अन्तर्यामं गृह्णाती'ति। नचास्य संस्कारत्वं, 'इन्द्र ऊर्ध्वोऽध्वरः' इत्या-घारमाघारयती' ति मान्त्रवर्णिकेन्द्रदेवतावत्त्वाद्यागत्वसिद्धेः। अतो नामत्वम्। अर्थाक्षिप्तसाध्यांशाभिप्रायकश्च द्वितीयानिर्देशः।

कथं पुनरशाब्देनानध्याहृतेन च शाब्दस्यान्वयः? नहि श्रुत्या, लक्षणया वा, विधिवाक्ये साध्यत्वं शाब्दम्, नाप्यध्याहृतम्, वाक्यभेदप्रसङ्गात्, अग्निहोत्र-होमं कुर्यात्,होमेन च फलमिति। अर्थाक्षिप्तेनापि यद्यन्वयः स्यात्, तथासति गुणोऽप्युद्भिदादिरर्थाक्षिप्तसाध्यांशाभिप्रायेण करणभूतेऽपि कर्मणि विधीयमानः श्रुत्यैव शक्यो विधातुमिति, मत्वर्थलक्षणा दत्तजलाञ्जलिः स्यात्।

### प्राभाकरमतस्यानुवाद—निरासौ

एतेन—ये धात्वर्थस्य विषयतया, करणत्वेन चान्वयं मन्यन्ते, ते निराकृताः। विषयभूतेन हि कथं करणवाचिनां नामधेयानां सामानाधिकरण्यम्? आर्थिकेन

करणत्वेन सामानाधिकरण्यमिति चेत् ? साध्यत्वमपि तर्ह्यार्थिकमस्तीति, गुणविधिरपि विनैव मत्वर्थलक्षणया, विना च वैरूप्येण स्यादिति, समस्तमेव नामधेयप्रतिपादनमनुपपन्नं स्यात्। अथ विषयत्वद्वारेण करणत्वपर एव शब्दः, ततोऽन्यपरेण शास्त्रेणोपायमात्रत्वेनोपात्तं विषयत्वं न शास्त्रार्थः स्यात्, अतत्परत्वात्। अथ शब्द एव प्रथमं विषयतयाऽभिधाय, पुनःकरणतयाप्यभिधत्ते। कथम् सकृदुच्चरितो द्विरभिदध्यात्, अभिधाने वा साध्यत्वमपि पुनरभिदधीत। नहि नियामकमस्ति द्विरेवाभिधत्ते, न त्रिरिति। 'सकृत्प्रवृत्तायाः किमवकुण्ठनेने'ति न्यायात्। ततश्च गुणविधिरपि स्यादित्युक्तम्। अतः करणत्वेनैवान्वयो वाच्यः, न विषयत्वेनेत्यास्तां तावत्।

अतः कथं द्वितीयाश्रुतिनिर्देश इति वक्तव्यम्। तदुच्यते—अस्ति तावदार्थिकं धात्वर्थस्य साध्यत्वम्, असाधितस्य करणत्वानुपपत्तेः। अतः साध्यत्व-साधनत्वयोर्द्वयोरेकार्थसमवायात्, साध्याभिधायिनी द्वितीया साधनत्वमेव लक्षयन्ती धातुसामानाधिकरण्यं प्रतिपद्यत इत्यविरोधः।

इति चतुर्थं तत्प्रख्याधिकरणम्।



### तद्व्यपदेशाधिकरणम् ॥ ५ ॥

## तद्व्यपदेशञ्च ॥ ५ ॥

इह रूढशब्दा एव वाक्यभेदरहितास्तद्व्यपदेशवन्त उदाहरणम्। यथा-'श्येनेनाभिचरन्यजेते' षड्विं. ब्रा. प्र. ३. खं. ८ त्यादिषु श्येनादिशब्दाः। तेषु गुणविधिः, कर्मनामधेयं वेति संशयः। अत्यन्तनिरूढत्वाद्गुणविधिः, ज्योतिष्टोमादिषु काम्यत्वाच्च नित्यमुत्पत्तिशिष्टमपि सोमं बाधते।

यद्वा गुणविशिष्टकर्मविधानम्, अप्रसिद्धार्थकल्पनातो वरं मत्वर्थलक्षणा सोमादिवत्। नच 'यथा वै श्येनो निपतये' त्यादिवाक्यशेषदर्शितक्रियासामान्येन कर्मणि गौणत्वेन कर्मवचनत्वं युक्तम्, अत्यन्तविप्रकृष्टार्थत्वात् गौणत्वस्य।

'लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणते' तं. वा. पृ. ३५४ ति वक्ष्यति। तद्वरम् लक्षणैवाश्रिता। गौणत्वे चात्यन्तार्थान्तरपरत्वाच्छ्रुतिबाधः। लक्षणायां तु तद्वत्यपि

वर्तमानः श्येनशब्दो लोहितोष्णीषादिवदुपसर्जनार्थश्येनविधिपर एव। करणीभूतेन तु यागेन करणीभूतस्यैकवाक्यता नान्तरेण मत्वर्थलक्षणां लभ्यत इति, एकवाक्यत्वार्थं लक्षणाश्रयणम्। तात्पर्यं तु श्रुत्यर्थ एवेति, न श्रुतिबाधः।

उच्यते—गुणविधौ तावत्स एव स्तोतव्यः। तस्य चात्मनैवोपमानमनुपपन्नमिति, तद्व्यपदेशात्मकवाक्यशेषानुपपत्तिः। विशिष्टविधिस्तु गौरवादेवायुक्तः। नच सोमादिवत्पदान्तरस्यानन्यगतित्वम्, 'यथा वै श्येनः, इति वाक्यशेषानुसारात् गौणत्वेन नामत्वसंभवात्। अवश्यं हि वाक्यशेषस्येदमेव प्रयोजनम्—कथं नाम श्येनशब्दस्य यागनामधेयता विज्ञायेतेति। तस्मान्नामधेयम्! एवं यौगिक-वाक्यभेद-तत्प्रख्य-तद्व्यपदेशैश्चतुर्भिर्नामत्वं साधितम्। एतैरेव च सर्वत्र नामधेयत्वमिति द्रष्टव्यम्।

इति पञ्चमं तद्व्यपदेशाधिकरणम्।

वाजपेयाधिकरणम् ॥ ६ ॥

**नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् ॥ ६ ॥ तुल्यत्वात्क्रिययोर्न ॥ ७ ॥ ऐकशब्द्ये परार्थवत् ॥ ८ ॥**

'वाजपेयेन स्वाराज्यकामो यजेते'ति वाजपेयशब्दः—किं गुणविधिः, उत कर्मनामधेयमिति चिन्त्यते। तदर्थमिदं विचार्यते-किं यजेतेत्याख्यातं गुणफलाभ्यां तन्त्रेण संबद्धुं क्षमते, नवेति। सर्वाणि चोद्भिदादीन्यत्रोदाहर्तव्यानि।

तत्र— सर्वेष्वाख्यातशब्देषु तन्त्रसंबन्धसंभवात्।
मत्वर्थलक्षणादोषो नास्तीत्याक्षिप्यतेऽधुना ॥ ५१ ॥

कर्मत्वं करणत्वं वा नाख्यातेनाभिधीयते।
यागादेः किंतु संबन्धमात्रं साधारणञ्च तत् ॥ ५२ ॥

यदि हि यजेतेति यागस्य कर्मत्वमुच्येत, ततः साध्यद्वयासमवायान्न फलम् संबध्येत, गुण एव तु साधनतया संबध्येत। अथ तु करणत्वमेव यागस्य, ततोपि

करणद्वयासमवायान्न गुणः संबध्येत, फलमेव संबध्येतेति, न स्यात्तन्त्रत्वम्, न त्वेतदन्यतरदाख्यातेनोच्यते, तद्वाचकशब्दाभावात्। प्रकृत्या हि यागमात्रमुक्तम्, प्रत्ययेन तु भावना। तयोस्तु समभिव्याहारात्संबन्धमात्रं गम्यते। तच्च कर्म-करणत्वयोः साधारणम्। अतश्चोभयरूपसाधारणत्वाद्यागस्य, तद्विषयापि भावना यागकर्मिका, यागकरणिका चेति द्विरूपा भवति। तत्र यागकर्मिकांशेन गुण-संबन्धम्, तत्करणिकांशेन तत्फलसंबन्धं भावना लभते तन्त्रेणेति, विनैव मत्वर्थ-लक्षणया यागे गुणविधानमुपपन्नम्—वाजपेयेन यागं कुर्यात्, यागेन च स्वाराज्यमि'ति—

अत्रोच्यते—

संबन्धमात्रतात्पर्ये नैकस्याप्यन्वयो भवेत्।<br>
तद्विशेषपरत्वे तु स्यादन्यतरसंगतिः ॥ ५३ ॥<br>
रूपद्वयपरत्वं तु विनाऽऽवृत्त्या न लभ्यते।<br>
तस्मान्नाख्यातशब्दस्य तन्त्रसंबन्धसंभवः ॥ ५४ ॥

श्रुत्या, लक्षणया वा यत्परः शब्दः, स एव शब्दान्तरार्थेन संबध्यते। तद्यद्याख्यातात्संबन्धमात्रं धात्वर्थभावनयोरवगतम्, ततो नैकस्यापि फल-गुणयोस्तदन्वयः स्यात्। फलस्य साधनापेक्षित्वाद्यागकरणिकैव भावना फल-संबन्धमर्हति। तथा गुणस्य साध्यापेक्षत्वाद्यागकर्मिकयैव भावनया संबन्धः। अनिर्धारितोभयरूपा तु नैकेनाप्यन्वीयते, अयोग्यत्वात्। तत्रावश्यं विशेषपरता अभ्युपगन्तव्या। कथमसत्योः कर्मकरणविभक्त्योस्तत्परता शब्दस्येति चेत्? संबन्धसामान्यवाचिनी वा षष्ठी किमत्रास्ति, येनात्र संबन्धमात्रमभ्युपगम्येत। समभिव्याहारादेव लक्षणया संबन्धावगतिरिति चेत्। न। तत एव सम-भिव्याहारात्पदान्तरान्वयपर्यालोचनया संबन्धविशेषस्यैव लक्षणया सिद्धेः। नह्यसति विशेषपरत्वे पदान्तरान्वयो घटत इत्युक्तम्, तस्माद्विशेषपरतेति। तत्र कर्मपरत्वे गुणस्यैव संबन्धः, न फलस्य। करणपरत्वे तु फलस्यैव, न गुणस्ये-त्यन्यतरविशेषपरत्वेऽन्यतरस्यैव संबन्धान्न तन्त्रेणोभयसंबन्धः। उभयपरत्वं तु नावृत्तिमन्तरेण लभ्यते। न खलु यस्मिन्नेव क्षणे यागं करणात्मना अवबुद्ध्यामहे, तस्मिन्नेव कर्मात्मनाववोद्धुमीश्महे इति, स्वानुभवसिद्धमेतत्।

एवम्—गुण—प्रधानत्वोद्देश्योपादेयत्वविध्यनुवादत्वकृतमपि वैरूप्यम्, अतो न तन्त्रत्वम्। भावनावदिति चेत्। यथा खलु भावना कर्मकरणत्व—गुणप्रधानत्वो-द्देश्योपादेयत्वादिरूपभेदमन्तरेणैवाख्याताभिधेयेनैवात्मना साध्यादिभिः संबध्यते-

इदमनेनेत्थं कुर्यादिति। तथा यागोऽपि कर्मकरणत्वादिरूपमनादृत्य, धात्वभिहितेनैव च यागरूपेण गुणफलाभ्यां संबध्यत इति, न वैरूप्यम्—इति।

न। अक्रियात्वात्। भावना हि क्रियारूपा सर्वकारकसाधारणरूपैवेति युक्तं यद्वैरूप्येणानेकसंबन्धं लभते। यागस्त्वक्रियारूपः कथमिव कारकरूपैर्गुणादिभिः संबध्यते। तदसौ भावनाद्वारेणैवारुणैकहायनीवद्गुणफलाभ्यां संबध्यत इति युक्तम्। भावनासंबन्धोऽपि चास्य स्वरूपेण न संभवति। कारकं हि क्रियया संबध्यते, न वस्तुरूपम्। अतोऽवश्यं कर्मात्मना करणात्मना वा धातुना यागः प्रतिपादनीयः। तत्रान्यतररूपप्रतिपादनेऽन्यतरेणैव गुणेन फलेन वा संबन्धान्नोभयसंबन्धसिद्धिः। उभयरूपप्रतिपादने वा द्विरुच्चारणाद्वाक्यभेदः, तस्मान्न तन्त्रसंबन्धसिद्धिः। तेन गुणविधिपक्षे सैव मत्वर्थलक्षणा 'सोमेन यजेत, अरुणया क्रीणाती'त्यादिवदाश्रयितव्येति। वरं वाजं पेयं सुराद्रव्यमस्मिन्निति सुराग्रहविधानात् तत्प्रख्यतया नामधेयत्वम्।

## प्राभाकरमतेऽनुपपत्तिवर्णनमुखेन भाट्टमतस्य समर्थनम्

ये तु कार्याभिधायिनामेव भावनाभिधायित्वम्, न सर्वाख्यातानामित्याहुः, तेषां काष्ठैः पचतीत्यादिषु भावनाभावाद्धात्वर्थेनैव कारकाणाम् संबन्धात्क्रियारूपत्वं धात्वर्थस्याभ्युपगन्तव्यम्। अतश्च स्वरूपेणैव धात्वर्थः कारकसंबन्धमर्हतीति, विनैवावृत्त्या यज्यभिहितेनैव रूपेण साध्यसाधनाभ्याम् संबध्यत इत्यधिकरणमिदमनुपपन्नं स्यात्। नचोद्देश्योपादानादिकृतमपि वैरूप्यम्, गुणविशिष्टयागविधानात्। न च मत्वर्थलक्षणा, कारकविभक्त्यैव श्रुत्या क्रियारूपधात्वर्थसंबन्धसिद्धेः। अतोऽक्रियारूप एव धात्वर्थ इत्याश्रयणीयम्। युक्तश्चैतत्। अन्यथा हि काष्ठैः पचतीतिवत् काष्ठैः पाक इत्यपि संबन्धः स्यात्। तेन यद्यपि धात्वर्थानामेवान्योत्पादानुकूलतया क्रियारूपत्वमस्ति, तथापि न धातुभिस्तद्रूपमभिधीयते, प्रतीत्यभावादिति, न तत्संबन्धः कारकाणाम्। यथाहि वस्त्वादिशब्दाभिहितापि क्रिया न कारकैः संबध्यते, तथा न धात्वभिहितापि। भावनादिशब्दा अपि न तद्रूपस्याभिधायकाः। अदूरविप्रकर्षमात्रेण तेषामाख्यातपर्यायत्वम्। आख्यातमेव तद्रूपाभिधायीति, तेनैव कारकाणामन्वयः। तेन लडादिष्वपि कारकसंबन्धसिद्ध्यर्थमाख्यातस्य भावनावाचित्वमङ्गीकर्तव्यम्। अन्यथा धात्वर्थस्य क्रियात्वापत्तेरधिकरणमिदमनुपपन्नं स्यात्। भवन्मते चासत्यपि प्रत्ययार्थस्य क्रियात्वे धात्वर्थक्रियासंबन्धित्वाभ्युपगमात्कारकाणां सुतरां गुणविधित्वमेव स्यात्।

अपि च लडादिभिरपि कर्मनामधेयानां करणार्थतया समभिव्याहारः अनुवादवाक्ये दृश्यते 'वाजं वा एषोऽवरुरुत्सते, यो वाजपेयेन यजते, यद्दर्भमयं परिधापयति, वाजस्यावरुध्यै' इति। तद्यदि लडादिषु धात्वर्थ एव क्रिया स्यात्, कथं तृतीयान्तनामधेयसंबन्धः। नह्यात्मैवात्मनः करणं भवति। तथा 'यो राजसूयेन यजते, योऽश्वमेधेन यजते' इति। तथा 'तमालभत, तेनायजत' इति लङन्तप्रयोगेऽपि दर्शयितव्यम्। अतो यथा वैदिकवाक्यालोचनेनापूर्वं शब्दार्थं भवन्तोऽनुमन्यन्ते, तथा सर्वाख्यातानां करोत्यर्थवचनत्वं विमुक्तलज्जैरनुमन्तव्यम्। तथा सति तत्रैव तृतीयान्तानां नामधेयानां करणसमर्पकतया अन्वयो घटते। अन्यथा दुर्घटत्वं स्यादित्यास्तां तावत्। तस्मात्सिद्धं नामधेयत्वम्।

इति षष्ठं वाजपेयाधिकरणम्।

---

अग्नेयाधिकरणम् ॥ ७ ॥

## तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः ॥ ९ ॥

'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती' तै. सं. २-६-३ त्यत्राग्नेयशब्दो गुणविधिः, उत कर्मनामधेयमिति विचारः। तदर्थं च किमत्र तत्प्रख्यन्यायोऽस्ति, नवेति। तत्रानेकगुणविधाने वाक्यभेदादाष्टाकपालद्रव्यकं कर्ममात्रं विधीयते। तस्य तु स्थानक्रमादग्निदैवत्यं याज्यानुवाक्यायुगलमङ्गम् संभवति। ततश्च मान्त्रवर्णिकोऽग्निरग्निहोत्रवत्प्राप्त इति तद्वदेव नामधेयत्वम्—

उच्यते—

मन्त्राकाङ्क्षा नचात्रास्ति सत्यामपि न योग्यता।
मन्त्रस्य नास्ति वचनमग्निहोत्रेऽस्ति तत्त्रयम्॥ ५५ ॥

नह्यष्टाकपालो भवतीत्येतावता पुरुषव्यापारः कश्चिदुक्तः, योऽनुष्ठानाय स्मारकं मन्त्रमपेक्षेत। सत्यामपि तु मन्त्राकाङ्क्षायां पुरोडाशमात्रविषयस्य व्यापारस्य देवतावाचिमन्त्रसंबन्धायोग्यत्वात्, न संबन्धः। यदि यागत्वं मन्त्रसंबन्धात्प्रागेवावगतं स्यात्, ततो भवेद्देवतावाचिमन्त्राभिधायिना मन्त्रेण संबन्धः, न तु तदस्ति, देवतासंबन्धात्प्राक् प्रत्यक्षयागाश्रवणात्।

न चात्र वाचनिको मन्त्रः, येनाधारवद्बलान्मान्त्रवर्णिकी देवता स्यात्। अग्निहोत्रे तु होमस्य पुरुषव्यापारस्य श्रवणादस्ति मन्त्राकाङ्क्षा। योग्यश्च होमो देवताभिधायिना मन्त्रेण संबन्धुम्। वाचनिकश्च तत्र मन्त्रः। तेन युक्तं मान्त्रवर्णिकदेवताकल्पनम्। इह तु मन्त्रसंबन्धस्याकाङ्क्षायोग्यत्ववशेन कल्प्यत्वान्न प्राग्यागात्सिद्धिरस्तीति, देवतासंबन्धेनैव यागो लब्धव्य इत्याग्नेयशब्देनैव देवता विधातव्या। विशिष्टकर्मविधानाच्चार्थादनेकेषामपि गुणानां विधिः सिद्ध्यतीति, न वाक्यभेदः।

इति सप्तममाग्नेयाधिकरणम्।

---

बर्हिराज्याधिकरणम् ॥ ८ ॥

## बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ १० ॥

कर्मनामप्रसङ्गाद्द्रव्यनाम्नां बर्हिराज्यपुरोडाशशब्दानां संस्कृतेषु शास्त्रस्थैः सर्वैः प्रयुज्यमानानाम्, असंस्कृतेऽपि जातिमात्रे कैश्चिदशास्त्रस्थैः प्रयुक्तानां किं संस्कारनिमित्तता यूपादिवत्, उत जातिवाचितेति चिन्त्यते। तत्र पील्वादिवदश्ववालादिवच्च शास्त्रस्थयाज्ञिकप्रसिद्धिः सार्वलौकिकी चाशास्त्रस्थम्लेच्छकतिपयप्रसिद्धेर्बलीयसीति, संस्कारनिमित्ततेति प्राप्ते—

ब्रूमः—

अन्वय-व्यतिरेकाभ्यामेतेषां जातिवाचिता।
व्यभिचारान्न संस्कारनिमित्तत्वं प्रकल्प्यते ॥ ५५ ॥

नहि शास्त्रस्थाः सर्वलोकस्थाश्च जातिमपहाय प्रयुञ्जते, संस्कारत्वमपहाय जातिमात्रे केचित्प्रयुञ्जते, तेन जातिमेते न व्यभिचरन्ति, व्यभिचरन्ति तु संस्कारम्। अतो जातिवाचिता। नच शास्त्रस्थसर्वलोकविरोधः, तत्रापि जातेरनपगमादित्युक्तम्। नच जातिमात्रे शास्त्रस्थानामप्रयोगादतद्वचनत्वम्। नहि यो यत्र शक्तः, स तत्र सर्वैः प्रयोक्तव्यः। तस्माज्जातिवचनाः।

इति अष्टमं बर्हिराज्याधिकरणम्।

---

## प्रोक्षण्यधिकरणम् ॥ ९ ॥

### प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥

प्रोक्षणीशब्दस्यापि पूर्ववत्सर्वलोकशास्त्रस्थप्रयोगात्संस्कारनिमित्तत्वं प्राप्तमपोह्य, असंस्कृतेऽपि क्वचित्प्रयोगादव्यभिचाराज्जातिनिमित्तता प्राप्ता। न चावयवार्थता युक्ता, समुदायप्रसिद्धेर्बलीयस्त्वात्। अवयवद्वारेण हि विशिष्टार्थप्रतीतिः, वाक्यादिव वाक्यार्थप्रतीतिः पदार्थनिमित्ता लाक्षणिकी। समुदायप्रसिद्धौ तु श्रुत्या प्रतीतिरिति, सैव बलीयसी—

उच्यते—

रूढिर्लब्धात्मिका योगं बाधते नत्वलब्धिका।
तत्रैव चात्मलाभोऽस्या यत्र नावयवार्थता ॥ ५६ ॥
यथा वृत्तेऽश्वकर्णस्य सत्सु त्ववयवार्थेषु।
तत एवोपपन्नत्वादर्थापत्तिः परिक्षीणा ॥ ५७ ॥
नादृष्टा समुदायस्य शक्तिं कल्पयितुं क्षमा।
सन्ति त्ववयवार्थाः प्रकृष्टोक्षणहेतुत्वात् ॥ ५८ ॥
स्त्रीलिङ्गत्वाच्च तेनात्र नात्मानं लभते रूढिः।
वाक्यार्थे वाक्यवत् तस्माद्यौगिकः प्रोक्षणीशब्दः ॥ ५९ ॥

इति नवमं प्रोक्षण्यधिकरणम्।



## निर्मन्थ्याधिकरणम् ॥ १० ॥

### तथा निर्मन्थ्ये ॥ १२ ॥

'निर्मन्थ्येनेष्टकाः पचन्ती'ति विषयवाक्यान्निर्मन्थ्यशब्दस्यापि शास्त्रस्थसार्वलौकिकप्रयोगात्संस्कारनिमित्तत्वम्, अव्यभिचाराद्वा जातिनिमित्तत्वमुद्भाव्य, प्रसिद्धावयवार्थत्वात्पूर्ववद्यौगिकत्वं साधनीयम्।

विशेषस्त्वेतावान्—प्रोक्षणीशब्दो हि सेचनसाधनत्वनिमित्तः। अस्ति चापां सेचनसाधनत्वं सर्वदेति, युक्तं यौगिकत्वम्। निर्मन्थ्यशब्दस्तु मन्थन-

कर्मत्वनिमित्तः । नच निष्पन्नस्याग्नेर्मन्थनकर्मत्वयोग्यतास्ति । निष्पन्ने चाग्नावयं शब्दो लोके प्रयुज्यते निर्मन्थ्यमानयोदनं पक्ष्यामहे—इति । नच भूतपूर्वेण योगेन प्रवृत्तिः, प्रतिक्षणमग्निभेदात् । यो ह्यग्निर्मन्थननिष्पन्नः, स तदैव नष्टः, अन्यश्चायं पाकायानीयते । सोयमसत्यवयवार्थे प्रयुज्यमानं संस्कारमिव, योगमपि व्यभिचरतीति न तन्निमित्तः । जातिं तु न व्यभिचरतीति, तद्वाचित्वमेव युक्तमितीमां विशेषाशङ्कां निवर्तयितुमतिदेशः क्रियते । भूतपूर्वमपि योगं निमित्तीकृत्य, सन्तानाभिप्रायेण प्रयोगोपपत्तेः, नाहे रूढिरत्यन्तापरिदृष्टा कल्पयितुं शक्यते । तस्माद्यौगिकः ।

इति दशमं निर्मन्थ्याधिकरणम् ।



वैश्वदेवाधिकरणम् ॥ ११ ॥

**वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥ न वा प्रकरणात्प्रत्यक्षविधानाच्च नहि प्रकरणं द्रव्यस्य ॥१४॥ मिथश्चानर्थसंबन्धः ॥१५॥ परार्थत्वाद्गुणानाम् ॥ १६ ॥**

चातुर्मास्येषु प्रथमे पर्वण्यष्टौ यागाः श्रूयन्ते—'आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतञ्चरुम्, पौष्णं 'चरुम्, मारुतम् सप्तकपालम्, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालमि' तै. सं. १-८-१- ति । तत्संनिधावि‍दमाम्नायते—'वैश्वदेवेन यजेते'ति । तत्र संशयः—किं यजेतेत्यनूदितानाम् यागानां वैश्वदेवशब्देन गुणविधिः—विश्वे देवा देवता विधीयन्ते, किंवा तेषामेव नामधेयमिति ।

तत्र नामत्वपक्षे स्याद्वाक्यमेतदनर्थकम् ।
देवताऽतो विधेया स्याद्गत्यभावाद्विकल्प्यते ॥ ६० ॥

नामत्वपक्षे हि तस्याविधेयत्वात्, यागस्य चारूपत्वेनाविधेयत्वात्समस्तवाक्यानर्थक्यप्रसङ्गः, तस्माद्गुणविधिः ।

ननु अग्न्याद्यवरुद्धेषु यागेषु देवतान्तरमनवकाशमिति चेत् ? न। विकल्पसंभवात्। न चाद्यापि सूत्र-भाष्यकाराभ्यामुत्पत्तिशिष्टप्राबल्यं कथितमिति तुल्यबलतां मन्यते। ननु च गुणाधिकरणे बलाबलं वक्ष्यते। तेन गतार्थमिति चेत् ? न। आनर्थक्याधिक्यात्। वक्ष्यति हि 'श्रुतिलिङ्गाधिकरणे दुर्बलस्यापि प्रमाणस्य बाधे यदि किंचिदनर्थकं भवति, ततो विपरीतो बाधो भवती'ति। तदिहाप्यविधीयमाने गुणे समस्तस्यैव वाक्यस्यानर्थक्यप्रसङ्गाद्देवतैव विधातव्या। सा च गत्यभावादुत्पन्नशिष्टाऽप्युत्पत्तिशिष्टैरग्न्यादिभिर्विकल्पयिष्यते—इति।

स्यादेतदेवम्, यदि वाक्यानर्थक्यं स्यात्। तत्त्वनुवादत्वेऽपि समुदायीकरणेन अर्थवत्। नहि नानावाक्यचोदितानामाग्नेयादीनामेकशब्दोपादानादृते समुदायभावापत्तिः, एकसंज्ञासंबन्धो वा लभ्यते। सति त्वनुवादे तेनैवैकेन निमित्तेनैकप्रतीत्यारूढानामेकसमुदायत्वम्, एकनामधेयत्वं च लभ्यते। ततश्च 'प्राचीनप्रवणे वैश्वदेवेन यजेते' मै० सं० १-१०-७.त्येवमादिषु वैश्वदेवनामकस्याग्नेयादियागसमुदायस्य ग्रहणं सिद्धं भवति। इतरथा ह्यामिक्षायागस्यैव वैश्वदेवत्वप्रत्यक्षप्रत्यभिज्ञानात् प्राचीनप्रवणादिसंबन्धः स्यात्।

नन्वनुवादोऽपि श्रुत्यर्थलाभादामिक्षायागस्यैव स्यात्। इतरथा हि वैश्वदेवावैश्वदेवसमुदाये वैश्वदेवशब्दः छत्रिन्यायेन कल्प्यः स्यात्। न। आनर्थक्यात्। आमिक्षायागस्य हि देशादिसंबन्धोऽसत्यप्यनुवादे लभ्यते। ततश्च तदवस्थमानर्थक्यं स्यात्। वरं चानर्थक्याल्लक्षणाश्रयणम्।

नचावश्यं लक्षणा, वाक्यशेषदर्शितयोगवशेन श्रुत्यैवाष्टानामपि यागानां नामत्वसंभवात्। एवं हि श्रूयते 'यद्विश्वेदेवाः समयजन्त, तद्वैश्वदेवस्य वैश्वदेवत्वमि' तै.ब्रा.१-४-१०-१ ति। तदनेन योगेनाष्टानामपि यागानां नामत्वव्युत्पादनार्थः अयमनुवादः। सति चानुवादत्वेनाऽप्यर्थवत्त्वे, नदेव ताविशिष्टयागान्तरविधानमपि शङ्कनीयम्, गौरवात्, प्रकृतप्रत्ययबाधाच्च। 'अष्टौ हवींषी'ति चात्यन्तानन्यगतिलिङ्गविरोधाच्च। तस्मात्समुदायानुवादः। तत्र च यष्टृत्वयोगेन, एकदेशदेवतात्वेन वा विश्वेषां देवानां समवायात्, तत्प्रख्यन्यायेन नामधेयं वैश्वदेवशब्दः।

इति एकादशं वैश्वदेवाधिकरणम्।



वैश्वनराधिकरणम् ॥ १२ ॥

**पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १७ ॥ गुणस्य तु विधानार्थे तद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्तास्ति ॥ १८ ॥ तच्छेषो नोपपद्यते ॥ १९ ॥ अविभागाद्विधानार्थे स्तुत्यर्थे नोपपद्येरन् ॥ २० ॥ कारणं स्यादिति चेत् ॥ २१ ॥ आनर्थक्यादकारणम् , कर्तुर्हि कारणानि, गुणार्थो विधीयते ॥ २२ ॥**

'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इत्युक्त्वा 'यदष्टाकपालो भवति, गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालः, त्रिवृतैवास्मिन्नि' तै० सं–२–२–५–३. त्यादि श्रूयते । तत्र विचारः—किमष्टाकपालादिशब्दाः प्रकृतस्य वैश्वानरयागस्य नामधेयम् , उत तत्रैव गुणविधिः, अथवा फले गुणविधिः, किं वाऽर्थवादः—इति । तदर्थं च किं गुणविधिपक्षे सर्वेषामष्टाकपालादीनामुत्पत्तिशिष्टता संभवति, किंवा सर्वेषामुत्पन्नशिष्टता, अथवा द्वादशकपाल उत्पत्तिशिष्टः, अन्ये तूत्पन्नशिष्टाः—इति । तत्र वैश्वानरसामानाधिकरण्यादष्टत्वादीनां द्वादशसु प्राप्तेः, तत्प्रख्यन्यायेन नामधेयत्वमाशङ्क्य, द्रव्यवचनत्वाद् यागसामानाधिकरण्याभावात् तत्प्रख्यत्वाभावाच्च गुणविधिः ।

तथाहि–यद्यपि द्वादशस्वष्टौ विद्यन्ते, तथापि न द्वादशकपालेऽष्टाकपालः समस्ति । यो ह्यष्टसु कपालेषु संस्कृतः पुरोडाशः, सोऽष्टाकपालः । नच पुरोडाशे पुरोडाशान्तरमस्ति । नच द्वादशकपाल एवाष्टसु संस्कृत इति शक्यते वक्तुम् , अष्टानां तत्र सापेक्षत्वात् । अष्टभिश्चतुर्भिश्चासौ संस्कृतः,न केवलैरष्टभिः । ततश्चासामर्थ्यात्तद्धितानुपपत्तिः । तस्मात्प्राप्त्यभावान्न तत्प्रख्यत्वम् । अत एव नार्थवादत्वम् । नह्यविहितस्याष्टाकपालस्य स्तुतिः संभवति । तस्माद्गुणविधिः । अष्टाकपालद्रव्यम् , अष्टत्वसंख्या वा वैश्वानरयागे विधीयते । नचोत्पत्तिशिष्टद्वादशकपालावरोधादविधानम् , सर्वेषामुत्पत्तिशिष्टत्वात् । एकं हीदं वाक्यम्-'वैश्वानरं द्वादशकपालं निर्वपेदि'त्यादि, 'यस्मिञ्जात एतामिष्टिं निर्वपतीत्येवमन्तम्' एकोपक्रमावसानत्वात् । तन्मध्ये चाष्टत्वादयः श्रुताः, सर्व एवोत्पत्तिशिष्टाः संभवन्ति ।

यद्वा सर्व एवोत्पन्नशिष्टाः 'वैश्वानरं द्वादशकपालमि'ति देवताविशिष्टयागविधानात् । तत्र 'यदष्टाकपालः' इत्यादिभिर्वाक्यान्तरैर्वैकल्पिकद्रव्यविधानम् ।

उपक्रमे तु द्वादशकपालशब्दो गुणवाक्यप्राप्तद्रव्योपलक्षणार्थः, न विवक्षितः। विवक्षितत्वे त्वष्टाकपालादीनामानर्थक्यं स्यात्। तस्माद्गुणविधिः—

उच्यते—

उत्पत्तिवाक्यशिष्टत्वं न तावदुपपद्यते।
सर्वेषामर्थभेदेन वाक्यं तत्र हि भिद्यते॥ ६१॥

अर्थवादत्वे ह्येकवाक्यत्वं सिद्ध्यति, । त्वत्पक्षे तु नानागुणविधानेनार्थभेदाद्वाक्यभेदः स्यात्। किंच निर्वपतिनाऽत्र कर्मविधानम्, सच द्वितीयान्तेनैव द्वादशकपालेन संबध्यते, न प्रथमान्तैरष्टाकपालादिभिः। ततश्च द्वादशत्वमुत्पत्तिवाक्यशिष्टत्वादितरेभ्यो वाक्यान्तरविहितेभ्यो बलवत्स्यात्।

न चाप्युत्पन्नशिष्टत्वं सर्वेषामुपपत्तिमत्।
न द्वादशकपालस्य ह्यविवक्षोपपद्यते॥ ६२॥

वैश्वानरसामानाधिकरण्यात् द्वितीयान्तं द्वादशकपालपदं निर्वपतिसंयुक्तम् नाविवक्षितं विना कारणेन कल्पयितव्यम्, अष्टत्वादीनामन्यथाप्युपपत्तेः। तस्मादुत्पत्तिशिष्टं द्वादशकपालत्वमिति, इतरेषां कर्मणि विधानासंभवात्। अथ ब्रह्मवर्चसादिफलार्थत्वेन वैश्वानरयागमाश्रित्याष्टत्वादिविधानम्। काम्यो हि गुण उत्पत्तिशिष्टबाधेनापि शक्यते विधातुमिति प्राप्ते—

अभिधीयते—

फलार्थेषु गुणेषु स्याद्वाक्यभेदोऽर्थभेदतः।
उपक्रमोपसंहारसाम्याच्चात्रैकवाक्यता॥ ६३॥

'वैश्वानरं द्वादशकपालमि'ति यैवेष्टिरुपक्रान्ता, तामेव 'यस्मिञ्जात एतामिष्टिम् निर्वपती'त्युपसंह्रियमाणामन्ते पश्यन्तो न तन्मध्ये वाक्यान्तरमवगन्तुमीश्महे। फलेभ्यश्च गुणेषु विधीयमानेषु स्फुट एवार्थभेदः, वाक्यभेदात्। तस्मादर्थवादत्वम्। अवयवद्वारेणावयविस्तुतिः। द्वादशकपालावयवो हि योऽष्टसु कपालेषु संस्कृतः, सोऽष्टाकपालपुरोडाशसादृश्यात् गौण्या वृत्त्याऽष्टाकपाल इत्युच्यते स्तोतुम्; तस्मादर्थवादः।

इति द्वादशं वैश्वानराधिकरम्।



## तत्सिद्ध्यधिकरणम् ॥ १३ ॥

### [ तत्सिद्धिपेटिका ]

### तत्सिद्धिः ॥ २३ ॥

'यजमानः प्रस्तरः, तै. सं. २-६-५-३ यजमान एककपालः' इत्यत्र नामधेयगुणविध्यर्थवादसंदेहे सामानाधिकरण्यादेकमितरस्य नामधेयम्—प्रस्तरशब्दो वा यजमानस्य, यजमानशब्दो वा प्रस्तरस्येति शङ्का। भिन्नार्थत्वेन तु प्रसिद्धत्वान्नैकमपीतरस्य नामधेयम्। नवार्थान्तरवचनेनार्थान्तरस्य स्तुतिर्भवति। अष्टाकपालादिभिस्त्ववयवद्वारेण द्वादशकपालस्य स्तुतिर्युक्ता। नच प्रस्तरावयववचनः यजमानशब्दः, येन स्तुतिः स्यात्। तस्मादन्यतरस्य कार्येऽन्यतरस्य विधानाद्गुणविधिः। तत्रापि यजमानस्य मुख्यत्वाच्छ्रुतिवृत्तो यजमानशब्दः प्रस्तरशब्दलक्षिते स्रुग्धारणादौ कार्ये विधीयते। तस्माद्गुणविधिः—

नैतदेवम्, यजमानस्य हि स्रुग्धारणादौ विनियुक्तस्य स्वपदार्थकरणविरोधात्। प्रस्तरवच्च सूक्तवाकेन प्रहरणात्, एककपालवच्च सर्वहुतकरणात्सर्वतन्त्रविलोपः स्यात्। तस्मादर्थवादः।

#### गौण्या वृत्तेर्निरूपणम्

कथं परशब्देन परस्य स्तवनम्, सामानाधिकरण्यं च ? गुणादिति ब्रूमः। कथमगुणवचनो गुणमभिदध्यात् ? नाभिदधाति, किन्तु स्वार्थसंबन्धेन बोधयति। यजमानशब्दो हि स्वार्थमभिधत्ते, स चाभिहितः स्वसमवेतं स्वकार्यकरत्वं संबन्धाद्बोधयति, तच्च प्रस्तरेऽप्यस्तीति प्रस्तरबोधः। एवं स्वार्थसदृशे तद्गुणशालिनि तात्पर्यं भजमानो यजमानशब्दो गौणः संपद्यते। यथा लोके 'सिंहो देवदत्तः' इति। नचाध्यारोपितार्थकत्वं लोके गौणत्वम्, तत्संबन्धिन्यर्थान्तरे तदभावात्। नहि सिंहो देवदत्त इति प्रयुञ्जानस्य सिंहत्वाध्यारोपोऽस्ति, शौर्यादिगुणविवक्षयैव प्रयुङ्क्ते। प्रतिपत्तारोऽपि सादृश्यमेव प्रतिपद्यन्ते, नाध्यारोपम्। तस्मादभिधेयसदृशे वृत्तिगौणत्वम्, नाध्यारोपितवचनत्वम्।

कथन्तर्हि खपुष्प–शशविषाणादीनां शब्दानां गौणता खपुष्पं भवत्सिद्धान्तः इत्यादिषु। नहि तेषां मुख्यमभिधेयमस्ति, येन सादृश्यात् गौणत्वं स्यात् ? उच्यते—यद्येषामभिधेयं नास्ति, कथं तर्ह्यन्यत्र तद्रूपारोपः। नहि स्वरूपेण अविद्यमानमन्यत्रारोपयितुं शक्यते। तेन तद्रूपमेवारोपितमङ्गीकर्तव्यम्। ततश्च-

अरोपितस्यापि तस्य मुख्यत्वाद्युक्तमन्यत्र गौणत्वम्। त्वत्पक्षे तु खपुष्प एव खपुष्पशब्दो गौणः स्यात्, आरोपितवचनत्वात्। भवत्विति चेत्? न। सर्वलौकिकविरोधात्। तस्मान्नाध्यारोपो गौणलक्षणम्। स्वार्थसादृश्यं तु भवति। खपुष्पादीनामपि मुख्यसादृश्यविवक्षयैव लौकिका गौणं प्रयोगं प्रयुञ्जते। यथाकाशस्य पुष्पात्मना, शशमूर्धवर्तिनां चावयवानां विषाणात्मना विकारोऽत्यन्ताप्रसिद्धो निष्प्रमाणाकः, तथा भवत्सिद्धान्त इति। तस्माद्यजमानवत्कार्यसिद्धावभ्यर्हितत्वात्प्रस्तरस्य प्रशंसेयमित्यर्थवादत्वम्।

इति त्रयोदशं तत्सिद्ध्यधिकरणम्।

---

## जात्यधिकरणम् ॥ १४ ॥

### जातिः ॥ २४ ॥

'अग्निर्वै ब्राह्मणः' तै. सं. २-३-३-२ इत्यादिष्वपि पूर्ववन्नामधेयत्वम्, गुणविधित्वं चोद्भाव्य, अर्थवादत्वं साधनीयम्। निमित्तान्तरकथनार्थं तु सूत्रान्तरम्। एवमुत्तरसूत्राण्यपि द्रष्टव्यानि। पूर्वत्र हि परशब्दस्य परत्र वृत्तौ तत्सिद्धिकरत्वम् निमित्तम्, इह तु जातिः-जननमित्यर्थः। द्वावपि ह्यग्निब्राह्मणौ सृष्टिकाले ब्रह्मणो मुखाज्जातावित्यर्थवादे संकीर्तितौ। अनेन निमित्तेनाग्निशब्दो ब्राह्मणे प्रवर्तते स्तोतुम्।

इति चतुर्दशं जात्यधिकरणम्।

---

## सारूप्याधिकरणम् ॥ १५ ॥

### सारूप्यात् ॥ २५ ॥

'आदित्यो यूपः, यजमानो यूपः 'का. सं. २६-६' इत्यत्राप्येत एव पक्षाः। सारूप्यं त्वत्र शब्दप्रवृत्तिनिमित्तम्। ननु सर्वत्रैव सारूप्यं गौणत्वनिमित्तम्, कोऽत्र विशेषः? सत्यम्। इह तु चक्षुर्ग्राह्यं सारूप्यं विवक्षितम्। चाक्षुषम् हि यूपस्य यजमानस्य सारूप्यमूर्ध्वत्वम्, आदित्यसारूप्यञ्चाञ्जननिमित्तम् तेजस्वित्वम्। अतस्तद्द्वारेण यजमानादित्यशब्दाभ्यां यूपः स्तूयते।

इति पञ्चदशं सारूप्याधिकरणम्।

---

## प्रशंसाधिकरणम् ॥ १६ ॥

### प्रशंसा ॥ २६ ॥

'अपशवो वा अन्ये गो अश्वेभ्यः, पशवो गोअश्वाः' तै० सं० ५.२.९.४. इत्यत्र नामधेयत्वमनाशङ्क्यमिति गुणविधित्वेनैव पूर्वः पक्षः। पशुकार्ये गवाश्वव्यतिरिक्तानां प्रतिषेधः क्रियतेऽजादीनाम्–इति–

सिद्धान्तस्तु तत्र तत्राजादीनां विहितत्वादशक्यः पशुकार्ये प्रतिषेधः। तस्मादर्थवादः। प्रशंसानिमित्तस्तु परशब्दस्य पशुव्यतिरिक्तघटादिवचनस्यापशुशब्दस्य परत्र-अजादिषु पशुषु प्रयोगः। ननु सर्व एव प्रशंसानिमित्तोऽर्थवादः, किमत्र विशेषेणोपन्यस्यते ? सत्यम्। फलमन्यत्र गुणवादस्य प्रशंसा। तत्सिद्ध्यादिना गुणेन परशब्दः प्रवृत्तः प्रशंसाफलो भवति। इह तु शब्दप्रवृत्तिनिमित्तमपि गुणः प्रशंसैव। तस्मादयमत्रावयवार्थः–'अपशवो वाऽन्ये गो अश्वेभ्यः' इत्यत्र अपशव इति नञ्समासगतेन पशुशब्देन प्रथमं गवाश्वगतं प्राशस्त्यमुपादाय, पश्चात्तदभावो नञा पश्वन्तरेषु कथ्यते। नहि पशुत्वं शक्यं प्रतिषेद्धुम्। अवश्यंच पशुशब्दोपात्तोऽर्थो नञा पश्वन्तरेषु पर्युदसितव्यः। शक्नोति च पशुशब्दोऽयं गवाश्वशब्दाभ्यामेकवाक्यतया संबद्धस्तद्गतं प्राशस्त्यं लक्षयितुम्। तच्च नञा पर्युदसिष्यते। एतदुक्तं भवति–गवाश्वयोर्हि यत्प्राशस्त्यम्, न तदन्येष्वस्ति। तस्मादप्रशस्तास्ते, गवाश्वमेव तु प्रशस्तमिति। सोयं गवाश्वगतप्राशस्त्याभावः पश्वन्तराणाम्, अपशूनां च तुल्य इत्यनेनाभिप्रायेण पश्वन्तराण्यपशव इत्युच्यन्ते।

इति षोडशं प्रशंसाधिकरणम्।

---

## भूमाधिकरणम् ॥ १७ ॥

### भूमा ॥ २७ ॥

'सृष्टीरुपदधाती' तै०सं. ५.३. ४. ८. ति सृष्टिशब्दो गुणविधिः, उतार्थवाद इति संशयः। तत्राख्यातसंबन्धाद्विध्यन्तरैकवाक्यत्वाभावादर्थवत्त्वाच्च विधिः। सृष्टिलिङ्गा मन्त्रा उपधानार्थेन विधीयन्ते। नैवम्। लिङ्गप्रकरणाभ्यामेव प्राप्तत्वान्न विधिर्मन्त्राणाम्।

संभवति । तथा सति परिसंख्या स्यात् । तत्र बहुषु मन्त्रेषु प्रकरणप्राप्तेषु सृष्टिविधानादन्ये परिसंख्यायेरन् । साच त्रिदोषा । परिसंख्यातानञ्च मन्त्रान्तराणामानर्थक्यं स्यात् । तस्मादुपधानमेवात्र विधेयम् । 'सृष्टीरि'ति तु लिङ्गप्राप्तमन्त्रानुवादमात्रम् । 'यथासृष्टमेवावरुन्धे' इत्यस्यार्थवादस्योपपत्त्यर्थमिति भाष्याभिप्रायः । केचित्तु मन्त्रविधिमेव समर्थयन्ते । न'ह्येकयाऽस्तुवत' इत्येवमादीनामुपधानैकान्तिकम् लिङ्गमस्ति, येन प्राप्तिः स्यात् । साधारणलिङ्गत्वाद्धि ग्रहणासादनादिष्वपीष्टकानाम् प्राप्नुयुः । तत्रास्ति विधेरवकाशः । सत्यामप्युपधानप्राप्तौ मध्यमचितिसंबन्धार्थमपि प्रत्यक्षविधानमर्थवद्भविष्यति । वक्ष्यति हि 'मध्यमायां तु वचनाद्ब्राह्मणवत्यः' मी. द. ५-३-१९ इति । नचास्मिन्सूत्रे सृष्टीनां विधानमवश्यमादर्तव्यम् । गुणवृत्तिनिमित्तकथनमात्रपरत्वात् । कः पुनरत्र गुणः ? भूमा (सृष्टिसमुदाये हि भूमास्ति) सृष्ट्यसृष्टिसमुदायेऽपि 'एकयाऽस्तुवत' इत्यनुवाके सृष्टिभूमास्तीत्यनेन सादृश्येन सृष्टिशब्दः ।

इति सप्तदशं भूमाधिकरणम् ।

लिंगसमवायाधिकरणम् ॥ १८ ॥

## लिङ्गसमवायात् ॥ २८ ॥

'प्राणभृत उपदधाती'तै० सं० ४.३.१०.१ त्यत्रापि पूर्ववदेव मन्त्रोपादानमर्थवादार्थम्, विध्यर्थं वेति विवेक्तव्यम् । निमित्तान्तरकथनार्थं तु सूत्रान्तरम् । तत्र हि भूम्ना शब्दप्रवृत्तिः । इह तु लिङ्गवतामल्पत्वात्तत्समवायमात्रेण शब्दप्रवृत्तिः । प्राणभृद्गणे हि प्राणभृत्समवायोस्ति । प्राणभृदप्राणभृद्गणेऽपि प्राणभृत्समवायोऽस्तीत्यनेन सादृश्येन प्राणभृच्छब्दः ।

तदेवम्—

तत्सिद्धि–जाति–सारूप्य–प्रशंसा–लिङ्ग–भूमभिः ।
षड्भिः सर्वत्र शब्दानां गौणीवृत्तिः प्रकल्पिता ॥ ६४ ॥

इति अष्टादशं लिंगसमवायाधिकरणम् ।

[ इति तत्सिद्धिपेटिका ] ।

वाक्यशेषाधिकरणम् ॥ १९ ॥

## संदिग्धेषु वाक्यशेषात् ॥ २९ ॥

'अक्ताश्शर्करा उपदधाति' 'तेजो वै घृतमि'त्यत्र संशयः—किं घृत-तैल-वसानामन्यतमेन केनचिदञ्जनं कर्तव्यम्, उत घृतेनैवेति। तदर्थं किं विध्युद्देशार्थ-वादयोर्विरोधोऽस्ति, नवेति। स्तावकत्वेन प्रामाण्यमर्थवादस्योक्तम्। इदानीम् संदिग्धार्थनिर्णयेऽपि क्वचित्प्रामाण्यं प्रतिपाद्यत इति सङ्गतिः।

तत्राक्ता इति शब्देन येन केन चिदञ्जनम्।
प्रतीयते विधिश्चायं बलीयानर्थवादतः ॥ ६४ ॥
प्राधान्यात्प्रक्रमस्थत्वादप्राप्तविषयत्वतः।
तद्बाधाद् घृतशब्दोऽयं लक्षणार्थो भविष्यति ॥ ६५ ॥

प्रधानं विधिः, अङ्गं स्तुतिः। नचाङ्गेन प्रधानं बाधितुं युक्तम्। उपक्रमस्थत्वाच्चासंजातविरोधो विधिर्निर्विघ्नमेव स्वार्थं बोधयन्नुपसंहारस्थम् स्वविरुद्धमर्थवादं लक्षणां नयति। विधिश्चाप्राप्तविषयत्वाद्यथाश्रुत एव नेतव्यः। अर्थवादस्त्वनुवादत्वाल्लक्षणयापि नीयमानो नातीव दुष्यति। विधेश्च यत्कि-ञ्चिदञ्जनसाधनं गम्यत इति, तेन बाधितो घृतशब्दोऽर्थवादस्थोऽञ्जनसमर्थद्रव्य-मात्रलक्षणार्थो भविष्यति। तस्माद्येन केन चिदञ्जनमिति प्राप्ते—

ब्रूमः—

विधेर्यदि विरोधः स्याद्भवेदेवं न चास्त्यसौ।
नहि सामान्यशब्दोऽयं विशेषेण विरुध्यते ॥ ६६ ॥

सामान्यं हि विधिना बोधितम्। तच्च सर्वविशेषेषु कृत्स्नमस्तीति, न विशेषोपादाने तस्य बाधः। अवश्यं च यः कश्चिद्विशेष उपादातव्यः। निर्विशेषेण सामान्येन व्यवहाराभावात्। तत्रासति विशेषप्रमाणे यः कश्चित्स्यात्। अस्ति तत्र घृतस्य प्रमाणमर्थवादः। स हि घृतं स्तुवन्नविधेयस्य स्तुत्ययोगाद्विधेयत्वम् गमयति, तस्माद्घृतेनैवाञ्जनम्।

इति एकोनविंशं वाक्यशेषाधिकरणम्।



## सामर्थ्याधिकरणम् ॥ २० ॥

### अर्थाद्वा कल्पनैकदेशत्वात् ॥ ३० ॥

विधेरिदानीं प्रतिपादितप्रामाण्यस्य संदिग्धार्थनिर्णयेऽपि सामर्थ्यसनाथस्य प्रामाण्यं प्रतिपाद्यते। 'स्रुवेणाऽवद्यति, स्वधितिनाऽवद्यति, हस्तेन-अवद्यती'त्यवदानाङ्गतया स्रुवादीनि विहितानि। अवदानञ्च द्रवाणामाज्यादीनाम्, मांसादीनां चास्ति। तत्र किमविशेषेण स्रुवादीनि भवेयुः, यथासामर्थ्यं वेति। तथा 'अञ्जलिना सक्तून् प्रदाव्ये जुहुयादि' तै० सं० ३.३.८.४. ति किं देवताप्रसादादिप्रार्थनायामिव हस्तसंयोगमात्रमञ्जलिहोमे, उत यथासामर्थ्यं व्याकोशः एवेति। तत्राविशेषश्रवणादनियम इति प्रतिभायाम्—

उत्तरमुच्यते। अशक्यार्थविध्यसंभवादवश्यं विधायकस्य शक्तिः सहकारिणीत्यङ्गीकर्तव्यम्। तस्माच्छक्तिसहायो विधिरेव यथासामर्थ्यं विधेयम् व्यवस्थापयति—

द्रवादिषु स्रुवादीनां व्याकोशस्य च सक्तुषु।
अर्थापत्तिवशात्तस्माद्व्यवस्थैवेत्यवस्थितम् ॥ ६७ ॥

प्रथमाध्यायार्थस्योपसंहारः

नामार्थवादविधिमन्त्रयुतश्च वेदः।
तद्वत्स्मृतेश्च चरितञ्च निरस्तदोषम् ॥
धर्मप्रमाणमिह सिद्धमतः परं तद्—।
भेदप्रकार-विनियोग-फलादिचिन्ता ॥ ६८ ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायाम्
प्रथमाध्यायस्य चतुर्थः पादः।
प्रथमाध्यायश्च समाप्तः



# अथ द्वितीयाध्यायस्य प्रथमः पादः

## प्रथमं भावार्थाधिकरणम् ॥ १ ॥

भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थोऽभिधीयते ॥ १ ॥ सर्वेषां भावोऽर्थ इति चेत् ॥ २ ॥ येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिः तानि नामानि; तस्मात्तेभ्यःपराकांक्षा भूतत्वात् स्वे प्रयोगे ॥ ३ ॥ येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते, तान्याख्यातानि; तस्मात्तेभ्यः प्रतीयेताऽऽश्रितत्वात् प्रयोगस्य ॥ ४ ॥

प्रथमेऽध्याये धर्मस्य प्रमाणं निरूपितम्। प्रथमे पादे चोदनायाः, त्रिपाद्याम् त्वर्थवाद-मन्त्र-नामधेय-स्मृत्याचाराणाम्, वाक्यशेष—सामर्थ्ययोश्च संदिग्धार्थ-निर्णये प्रामाण्यमुक्तम्। एवं समस्तेनाध्यायेन धर्मप्रमाणनिरूपणात् 'कथंलक्षणकः धर्मः' इत्ययमंशो निरूपितः, तद्विचारादेव तत्प्रमेयस्य ज्योतिष्टोमाष्टकादेर्धर्म-त्वावधारणात्कोऽयं धर्मः 'इत्ययमंशो' विचारितो भवति। वेदादिप्रमेयो धर्मः इत्येतावत्यवबोधितेऽपि, न कार्त्स्न्येन धर्मस्वरूपमवगतं भवति। भेदलक्षणेन त्वियन्ति धर्मस्वरूपाणीत्यवधारणान्निरवशेषस्वरूपावगतिसिद्धिः। अतो भेद-लक्षणमपि 'को धर्म' इत्यस्मिन्नंशेऽन्तर्गतं भवति। 'कान्यस्य साधनानी' त्येव-मादीनि तु शेषलक्षणे विचारयिष्यन्ते।' सर्वं च भेदाभेद-शेषशेष्यादि प्रमाण-बलेन निरूपणीयमिति, प्रमाणलक्षणात्पश्चात्प्रारम्भः।

### गुरुसम्मतार्थनिरासेन भाट्टसम्मतस्यार्थस्य निर्देशः

ननु वेदार्थस्यैवेह भेदाभेदादि शास्त्रे चिन्त्यते, तत्र तु वेदप्रामाण्य-मेवोपयुज्यते, स्मृत्यादिप्रामाण्यस्य तु न तत्रोपयोगं पश्यामः। नैवम्। धर्मस्यैवेह भेदाभेदादिविचारः शास्त्रे चिन्त्यते—श्रौतस्य, स्मार्तस्य वा, न श्रौतस्यैव। अष्टका-दिष्वपि शब्दान्तरादिलक्षणस्य भेदस्य, श्रुत्यादिलक्षणस्य च शेषशेषिभावस्य, प्रयुक्त्यादेश्च तुल्यत्वात्। अपि चाहत्यैव शास्त्रे स्मृत्याचारगम्यधर्मविचारः प्रदेशेषु करिष्यते—द्रव्यार्जननियमः क्रत्वर्थः पुरुषार्थ इति, तथा प्रजापतिव्रतानि,

तथा 'तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन्, अपि वा वेदतुल्यत्वादुपायेन प्रवर्तेरन्, ६-२-२१-२२ आचाराद्गृह्यमाणेषु तथा स्यादि ६-२-३० 'त्यादिभिः। तस्माद्धर्म इत्येव शास्त्रविषयः, न वेदार्थ इति। तथा च "दर्शितम्—'धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनमि'। (श्लो. वा १-१२) ति। तथा 'चाथातो धर्मजिज्ञासा, चोदनालक्षणो धर्मः, इति सूत्रम्, को धर्मः, कथंलक्षण इत्यादि भाष्यञ्च न कुकविकृतिरिव वेदार्थपरम् व्याख्येयम्। अतो धर्मप्रमाणत्वेन स्मृत्यादिनिरूपणं नानुपयोगीति सिद्धम्।

### तत्राध्यायप्रतिपाद्यनिर्देशः

तत्र भेदपूर्वकत्वाच्छेषलक्षणादेः प्रथमं तावद्भेदलक्षणमारभ्यते-शब्दान्तरादिभिः। तत्र शब्दान्तराभ्यासनामधेयगुणप्रकरणान्तराण्युत्पत्तिपरताम् विधेर्बोधयन्ति [ सन्ति ] उत्पन्नस्य चोत्पत्त्यन्तराभावाद्वाक्यान्तरविहितात्कर्मणः स्ववाक्यविषयस्य भेदं बोधयन्ति। संख्या त्वेषामेवान्यतमेनोत्पत्तिपरत्वे विधेरवगते सति, अनेकोत्पत्तिपरतां विधेर्बोधयन्ती स्ववाक्यविधेयानामेव कर्मणां मिथोभेदमावहतीति वेदितव्यम्।

तदिह धात्वर्थभावनापूर्वाणां त्रयाणामपि भेदः प्रतिपादयिष्यते। तत्र अपूर्वस्याशब्दार्थत्वात् स्वरूपेण भेदनिरूपणाशक्तेर्भावनाभेदानुनिष्पादी भेदः तद्भेदश्च करणीभूतधात्वर्थभेदद्वारेण वक्ष्यते। तच्च धात्वर्थस्य करणत्वे सति वक्तुं शक्यते, नान्यथेति प्रस्तुतधात्वर्थभेदानुनिष्पाद्यपूर्वभेदानुसारसिद्ध्यर्थमाद्यमधिकरणमुपोद्घातत्वेनाध्यायस्यारभ्यते।

### स्वमतेनोदाहरणोपन्यासः

किमिहोदाहरणम्? 'श्येनेनाभिचरन्यजेत' चित्रया यजेत पशुकामः, सोमेन यजेत, 'हिरण्यमात्रेयाय ददाति', सुवर्णं हिरण्यं भार्यम्, समिधो यजति, दशापवित्रेण ग्रहं संमार्ष्टि, यद्येनमार्त्विज्याद्वृतं सन्तं निर्हरेरन्, आग्नीध्रे जुहुयात् दशहोतारम् चतुर्गृहीतेनाज्येनं तै. ब्रा. २-३-२ 'यः कामयेत वीरो मे आजायेतेति स चतुर्होतारं प्रयुञ्जीत' २-२-११ त्यादि यावत्किंचिददृष्टार्थं विधानम् क्रत्वर्थम्, पुरुषार्थम्, काम्यम्, नैमित्तिकं वा, द्रव्योपपदं वा नामोपपदं वा गुणोपपदं वा, तत्सर्वमुदाहरणम्।

### प्रभाकरमतेनोदाहरणोपन्यास-निरासौ

केचित्त्वधिकारचोदना एवोदाहरन्ति। तासु च सर्वासु विरुद्धत्रिकद्वयापत्त्या नामैवोपपदम्। अतो नामोपपदान्येवोदाहरणमित्याहुः, तदयुक्तम्।

तथाहि—यद्यपि तावदधिकारचोदना एवोदाहरणम्, तथाऽपि न तासु सर्वासु नामैवोपपदम्। यदेव हि यौगिकम्,वाक्यभेदम्, तत्प्रख्यम्, तद्व्यपदेशयुक्तम्, तदेव नामधेयम्, इतरत्त्वधिकारगतमपि गुणार्थमेव। यथा 'यः कामयेत वीरो मे आजायेतेति, स चतुर्होतारं प्रयुञ्जीतेति चतुर्होतृशब्दो मन्त्रवचनः, न नामधेयम्, तथा यद्येनमार्त्विज्यादवृतं सन्तं निर्हरेरन्, आग्नीध्रे जुहुयाच्चतुर्गृहीतेनाज्येने'ति नैमित्तिकाधिकारगतमाज्यपदं न नामधेयम्।

न च विरुद्धत्रिकद्वयापत्तिः, मत्त्वर्थलक्षणया विशिष्टविधानसंभवात्। वरं च लक्षणा, अप्रसिद्धार्थकल्पनातः। इतरथा हि 'सोमेन यजेते' त्यपि सोमपदम् नामधेयं स्यात्, उत्पत्तिवाक्येऽपि गुणपक्षे लक्षणाऽस्तीत्यभ्यासाधिकरणे स्वयमेव निबन्धनकारेणोक्तं 'यागविधानेने' त्यादिना। युक्तञ्चैतत्। तत्र यद्यपि प्रथममपूर्वान्तरमप्रतिपन्नम्, तथाऽपि प्रत्ययेन तावत्तदेवाभिधीयते। तत्करणञ्च याग इति दोषसाम्यान्नामत्वं स्यात्। न चैवं युक्तम्। किञ्च "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः, 'वायव्यं श्वेतमालभेते' ति अधिकारचोदनेयम्। अत्र चरुं श्वेतमिति द्रव्य-गुणशब्दौ, सौर्यादिपदं भावार्थं नियोगविषय इति निबन्धनकारःशब्दानुबन्धवादी मन्यते। तेन तदप्यत्रोदाहरणम्, भावार्थयुक्ताधिकारार्थचोदनात्वाच्च। तथा 'हिरण्यं भार्यमि' त्यकत्वर्थत्वाद्विश्वजिदादिवदुदाहरणम्। अत्र चरु-श्वेत-हिरण्य-सौर्यशब्दा द्रव्यगुणवचनाः, न नामधेयम्। अतो नामोपपदान्येवोदाहरणमित्ययुक्तमेतत्।

भाष्यविरुद्धञ्च। भाष्यकारो हि भावार्थाधिकरणस्य प्रयोजनमभिदधानः सिद्धान्ते श्रुतद्रव्यापचारे प्रतिनिध्युपादानं प्रयोजनमाह, नामधेयत्वे हि कस्य प्रतिनिधिः स्यात्। न चावश्यमधिकारचोदना एवोदाहरणम्। 'सोमेन यजेत' 'हिरण्यं ददाती' त्यादिष्वपि कुतोऽपूर्वमिति विचारसंभवात्। यद्यपि तेषु प्रधानापूर्वानुवादशङ्कायां न प्रथममपूर्वान्तरं प्रतीयते, तथाऽपि पश्चादपि तावत्प्रतीयमानं किंविषयं प्रत्येतुं न्याय्यमिति संभवति चिन्ता।

ननु तत्पश्चात्कारकविशिष्टस्य कर्मणो ग्राहकगृहीतस्यावान्तरव्यापारत्वेन कल्प्यमानं भावार्थविषयत्वेनैव निर्णीतमिति, न विचारावसरः। स्यादेवम्—यदि कर्मैव ग्राहकेन गृह्यत इति प्रागस्मादधिकरणात्सिद्धं स्यात्, न तु तत्सिद्धम्, अत्रैव ह्येतद्विचार्यते। किं सर्वाणि पदानि क्रियाकारकसंबन्धानादरेण अपूर्वस्य विषयीभवन्ति? उत क्रियाकारकसंबन्धापरित्यागेनेतरपदविशेषितमेकमेव पदम्? यदाप्येकम्, तदाऽपि द्रव्यादिपदं भावार्थविशेषितम्, विपरीतं वेति।

तत्र क्रियाकारकसंबन्धावगमात्प्रागपि द्रव्य–गुणयोर्भावार्थकारकत्वेन श्रवणादन्योत्पादकस्वभावाच्च भावार्थादेवापूर्वमिति–स्थिते चास्मिन् क्रियाकारकसंबन्धापरित्यागन्याये, ग्राहकग्रहणमपि भावार्थस्यैव भवति। तस्यान्योत्पादकस्वभावत्वात्कारकत्वाच्च द्रव्यगुणयोः। अतश्चापूर्वमपि तत एव स्यात्। असति तु तस्मिन् न्याये हिरण्यं, ददातिश्च मिथः संबन्धानादरेण ग्राहकेण गृह्येयाताम्, दानोपसर्जनं वा हिरण्यम्। ततश्चापूर्वमपि पश्चात्कल्प्यमानमुभयविषयम्, हिरण्यविषयं वा स्यात्। तस्मात्तत्रापि भावार्थविषयत्वमपूर्वस्यैतदधिकरणाधीनमिति, युक्तमुदाहरणत्वम्। तस्माददृष्टार्थं सर्वमत्रोदाहरणम्।

## प्रतिपदाधिकरणम्

तत्र संशयः—किं सर्वाणि पदानि प्रत्येकमपूर्वं प्रतिपादयन्ति ? उतैकमिति। तदर्थमिदं विचार्यते—किं सर्वेषामर्थाः फलभावनायां करणम् ? उतैकस्यैव करणत्वम्। इतरे च तदर्थाः ? इति। यच्च फलसाधनम्, ततोऽपूर्वम् कल्प्यते। अतो यस्तस्य वाचकः, तेनापूर्वं प्रतिपादितं भवतीति। ततश्च सर्वेषाम् फलसाधनत्वे सर्वेभ्योऽपूर्वम्। एकस्य तु साधनत्वे, तत एवापूर्वमिति। तत्र प्रधानसंबन्धलाभात् वैरूप्याच्च सर्वेषां फलेन संबन्धः। अन्यथा हि यत्फलसाधनम् तस्य फलं प्रत्युपादान-विधान-गुणभावात्। इतरत्तु प्रत्युद्देशानुवादप्रधानत्वाद्वैरूप्यम्, मत्वर्थलक्षणा वा स्यात्। तस्मात्सर्वेषां फलसंबन्ध इति प्राप्ते—

अभिधीयते। अपूर्वस्य तावददृष्टत्वादेककल्पनयैवोपपन्ने वाक्ये, नानेककल्पनमुपपत्तिमत्। तस्मादेकमेव फलसाधनम्, इतरत्तु तदर्थमिति।

न च वैरूप्यम्, श्येनादीनां नामत्वसंभवात्। सोमादिषु मत्वर्थलक्षणाश्रयणात्। वरं चादृष्टकल्पनातो लक्षणा। तस्मादेकमपूर्वम्।

इति भावार्थाधिकरणोपोद्घातरूपं प्रतिपदाधिकरणम्।

---

## भावार्थाधिकरणम्

यदैकम्। तदा संदेहः–किं भावशब्देभ्यः ? उत द्रव्य-गुणशब्देभ्यः ? इति। तदर्थञ्च–किं भावार्थाः फलेन संबध्यन्ते ? किं वा द्रव्य-गुणशब्दार्थाः ? इति।

नन्वनियमेन यत्किंचिद्भवतु, नत्वश्यं नियन्तव्यम्। उच्यते—नानियमो वाक्येन बोधयितुं शक्यते, तस्यैकरूप एवार्थः। न हि तत्कदाचिद्यागस्य फलवत्त्वम्, इतरस्य च तादर्थ्यं प्रतिपादयति, कदाचिच्च विपर्ययम्, वचनव्यक्तिभेदात्। तस्मादेकरूपः एव वाक्यार्थः। स किंरूप इति चिन्तयितव्यम्।

## प्राभाकरोक्तपूर्वपक्षस्यायुक्तत्वर्णनम्

तत्रानध्यवसायमेव केचित्पूर्वपक्षमाहुः। तदयुक्तम्। तदा ह्यप्रामाण्यमेव स्यात्। तच्चायुक्तम्। तथा सति हि प्रमाणलक्षण एवायं विचारः स्यात्, न त्विह, सिद्धत्वात्प्रामाण्यस्य।

ननु पक्षद्वयेऽप्यनुष्ठानस्यैकरूपत्वेनाध्यवसितत्वान्नाप्रामाण्यम्, मूर्खप्रलपितमेतत्। यदि पक्षद्वयेऽपि न कश्चिदनुष्ठाने विशेषः, किमर्थमधिकरणम्? अपि च पूर्वपक्षे श्येनादीनां गुणविधित्वात् श्येनद्रव्येण यष्टव्यम्। सिद्धान्ते तु नामधेयत्वात्सोमेन यष्टव्यमित्यस्ति विशेषः। यथाऽऽह भाष्यकारः 'स्थिते एतस्मिन्नधिकरणे गुणविधिर्नामधेयमिति विचारः' भा० पृ० ३५४ इति। यत्तु न सिद्धान्तेऽपि नामधेयं 'सोमेन यजेते'ति। तत्र प्रतिनिधिसदसद्भावः प्रयोजनम्। तदप्याह भाष्यकारः 'यदि द्रव्यगुणशब्दा अप्यपूर्वं चोदयन्ति', द्रव्यगुणापचारे न प्रतिनिधिरुपादातव्यो यथा पूर्वपक्षः, यथा तर्हि सिद्धान्तः द्रव्यं—गुणं वा प्रतिनिधाय प्रयोगोऽनुष्ठातव्यः' शा० भा० पृ ३७९ इति। 'तस्मात्प्रसज्यत एवाप्रामाण्यमिति, नैवं पूर्वः पक्षः। किंतु द्रव्यादिभ्योऽपूर्वम्। त एव फलसाधनमिति।

कुतः— फलं हि साध्यमानत्वात्सिद्धं साधनमिच्छति।
द्रव्यादि च, तथा यागः स्वयं साध्यो न साधनम्॥ १॥

'श्येनेनाभिचरन् यजेते' त्यादौ फलम्, समिधो यजती'त्यादौ च फलवदुपकारः साध्यरूपत्वात्सिद्धरूपं साधनमपेक्षते, न साध्यान्तरम्। द्रव्यगुणौ च सिद्धरूपत्वात्तदाकाङ्क्षां पूरयितुं समर्थौ। यागादयस्तु स्वयमेव साध्यत्वान्न साधनत्वयोग्याः। तस्मात् द्रव्यादिभ्यः फलम्। यत्तु भाष्यकारेणाऽविशेषेणे पृ० ३४० त्युक्तम्। तच्छशब्दतो विशेषानवगमाद्वस्तुस्वभावेन द्रव्यादिभ्य एव फलं युक्तमित्येतदभिप्रायम्। तस्माद्द्रव्याद्यव फलभावनायाः करणमिति प्राप्ते—

अभिधीयते— भावनैव हि भाव्येन फलेनान्वेतुमर्हति।
धात्वर्थः करणं तस्यां लाघवात्सन्निकर्षतः॥ २॥

फलमपि कारकम् करणमपि, न हि कारकाणि मिथः संबध्यन्ते। किंतु क्रियया, सा चेह प्रत्ययवाच्या फलभावना, तेन तयैव फलं संबध्यते, तद्द्वारेणैव करणस्य फलसंबन्धः। तस्यां च धात्वर्थस्यैव करणत्वं युक्तम्, कल्पनालाघवात्। तस्मिन् हि फलवति अपूर्वसाधने कल्पिते द्रव्यादेस्तन्निर्वृत्तिर्दृष्टमेव प्रयोजनम्। द्रव्यादिभ्यस्त्वपूर्वे कल्प्यमाने धात्वर्थोऽसिद्धरूपःसिद्धरूपस्य द्रव्यादेर्न दृष्टमुपकारं शक्नोति कर्तुमिति, ततोऽप्यपरमदृष्टं कल्पनीयम्। सन्निकृष्टश्च प्रकृत्युपात्तो धात्वर्थः प्रत्ययवाच्यया भावनया पदश्रुत्या संबध्यते, द्रव्यादि तु पदान्तरेणोपात्तं वाक्येन। श्रुतिश्च वाक्याद्बलीयसी। साध्यरूपोऽपि धात्वर्थः स्वसाधननिष्पादितः सन् शक्नोति फलं साधयितुम्, तस्मात्स एव भावनायाः करणम्।

## भावनायामाक्षेपसमाधाने

का पुनरियं धात्वर्थातिरेकिणी भावना नाम यस्यां धात्वर्थः करणम्? कर्तृव्यापार इति चेत्। नन्वसौ पचावधिश्रयणादिः, यजौ च मानसस्त्यागः, तद्धेतुर्वा प्रयत्नः, सङ्कल्पो वा। गतौ चलनम्, ते चाधिश्रयण-त्याग-प्रयत्न-संकल्प-चलनादयो धात्वर्था एवेति, न धात्वर्थातिरेकिणीं भावनामुपलभामहे। प्रयत्नः भावनेति चेत्? 'रथो गच्छती'त्यादौ व्यभिचारः। स्पन्द इति चेत्? यजेतेत्येवमादिषु आत्मकर्तृकेषु व्यभिचारः। उभयसाधारणमुदासीनत्वविच्छेदसामान्यम् भावनेति चेत्, शब्दादिष्वभावप्रसङ्गः। न हि शब्दस्य विभोरचेतनस्य प्रयत्नः, परिस्पन्दो वाऽस्ति।

तत्र— 'अभिधाभावनामाहुरन्यामेव लिङादयः।
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते'॥ तं० वा० पृ० ३४४

इत्यादिविरोधः। तस्माद्वक्तव्यं भावनारूपं किमिति?

अत्रोच्यते। उक्तं ह्येतदाचार्यैः—

'धात्वर्थव्यतिरेकेण यद्यप्येषा न लक्ष्यते।
तथाऽपि सर्वसामान्यरूपेणाऽन्याऽवगम्यते'॥ तं० वा० पृ० ३४९ इति।

विवृतश्चैतन्मण्डनेन—

'कथ्यमानाद्रूपभेदाद्द्विधा धात्वर्थसङ्गतिः।
अन्योत्पादानुकूलात्मा भावना किं प्रदुष्यती'भा०वि० पृ० ३९ ति। एतदुक्तम् भवति। सत्यम्-'न धात्वर्थातिरेकिणी भावना। धात्वर्थानामेव तु द्वे रूपे पाकः

यागः प्रयत्नः संकल्पश्चलनं क्लेदनमभिधानं छेदनमिति प्रातिस्विकं धात्वभिधेयमेकमक्रियात्मकं सिद्धस्वभावम्। अपरं तु सर्वधात्वर्थानुयायि करोतिप्रत्ययवेद्यं क्रियात्मकं साध्यस्वभावमन्योत्पादानुकूलात्मकमाख्याताभिधेयम्। तथाहि—यः स्पन्दते, यो यजते, प्रयतते, चलति, अभिदधाति, ते सर्वे करोतिप्रत्ययमनुभवन्ति-भिन्नष्वपि धात्वर्थेषु। तच्च रूपमुत्पाद्यवस्त्वन्तरकर्मकमेव सर्वदा प्रतीयते। तदेव च भवितुः प्रयोजकव्यापारो भावनेत्युच्यते। तच्चाख्यातेष्ववगम्यमानत्वात्, तदभावे पाकादावनवगमादाख्याताभिधेयमाश्रीयते।

येऽपि प्रयत्नं भावनामाहुः, 'ये च स्पन्दम्, ये चोभयम्, तेऽपि न स्वरूपेण तेषां भावनात्वमाहुः, किन्त्वन्योत्पादानुकूलं रूपम्। तच्च सर्वधात्वर्थानामस्तीति, सर्वव्याप्येव भावनारूपमङ्गीकर्तव्यम्। तस्मिंश्च क्रियारूपे प्रकृत्युपात्तो यागादिः कदाचित्कर्मत्वेन संबध्यते—पाकं करोति यागं करोतीति, कदाचित्करणत्वेन—यागेन स्वर्गं करोति पाकेनौदनमिति यथाविवक्षितम्। तद्यदा यागादेः कर्मत्वेन सङ्गतिः, तदा तद्धेतुभूतः प्रयत्नः संकल्पादिर्वा धात्वन्तरार्थोऽपि यजेतेत्यत्र पदे यागकृतिरित्येवंरूपेणाख्याताभिधेयतां भजते। संकल्पादिकन्तु विशेषरूपम् धात्वन्तराभिधेयं प्रमाणान्तरवेद्यं नाख्यातेन स्पृश्यते। यदा तु विधिवशात् करणत्वेन यागस्य सङ्गतिः, कर्मत्वंन्तु स्वर्गादेः—दर्शपूर्णमासयागेन स्वर्गं कुर्यादिति, तदा न यागस्य हेतुभूतैव कृतिराख्यातेनोच्यते, यागस्य कर्मत्वाभावात्। फलस्यैव कर्मत्वात्तत्कर्मिका कृतिराख्यातेनोच्यते, यागस्तु करणम्।

अतो यदवस्थो यागः स्वर्गं संपादयति, तदवस्थो यागो येन व्यापारेण संपद्यते, स व्यापारः स्वर्गकृतिरित्येवंरूपेणाख्याताभिधेयो भवति, तस्यापि व्यापारस्य विशेषरूपं प्रमाणान्तरवेद्यं नाख्यातेन स्पृश्यते। यागेन स्वर्गं कुर्यादित्यनेन ह्येतावदवगम्यते। यथा यागात्स्वर्गो भवति, तथा व्याप्रियेतेति। तत्र कथं व्यापरितव्यम्, कोऽसौ व्यापार इति व्यापारविशेषात्मककथंभावापेक्षायामग्न्यन्वाधानप्रयाजावघातादिभिरुपकारसंपादनं शास्त्रान्तरैरवगम्यते, यागस्वरूपस्य च द्रव्यादिना संपादनमर्थापत्त्या। नह्यनिष्पादितस्य करणत्वमुपपद्यते, तच्च स्वरूपसंपादनम्, प्रयाजादिभिश्चोपकारसंपादनमिति सकलोऽयं व्यापारः स्वर्गकृतिरित्यनेनाकारेणाख्यातेनाभिधीयते, विशेषरूपञ्च च प्रयाजादिशास्त्रान्तरैरवगम्यते। तेन सकलोऽयं प्रयाजादिव्यापारः फलभावनाया एव प्रपञ्चः। तेन च व्यापारेण फलसाधनात्मना संपद्यमानो यागः करणम्। एतदेव हि करणानाम् करणत्वम्—यदुत फलोद्देशप्रवृत्तकर्तृव्यापारेण फलसाधनात्मना संपत्तिः परशोरिवोद्यमननिपातनाभ्यां द्वैधीभावसाधनतया। तत्सिद्धा धात्वर्थातिरिक्ता भावना।

नन्वेवं धात्वर्थसामान्यमेव भावना स्यात्? नेति ब्रूमः। विलक्षणत्वात्प्रतिधात्वर्थम्। अन्यद्धि पाकस्यौदनं प्रत्यानुकूल्यम्, अन्यच्च चलनादेः संयोगादि प्रति, फलभेदात्। एकात्मकत्वे हि तद्रूपस्य फलभेदो न स्यात्, भिन्नेषु रूपेषु भावनात्वसामान्यमनुवर्तते यागादिष्विव करणत्वसामान्यम्। अयञ्चापरो विशेषः—यतो धातोर्यञ्यादिकात्प्रत्यय उत्पन्नः, ततो धात्वर्थान्तरं संकल्पादिकं तत्कृतिरूपेण प्रत्ययेनोच्यते, न यजिरेव। तत्तु कामं धात्वन्तरेणोच्यताम्। इह तावदेकान्ततः प्रत्ययार्थः, यजिस्तु तत्र कर्म, करणं वा। तथा संकल्पयतीत्यत्रापि संकल्पादर्थान्तरमेव भावना, सङ्कल्पस्तु कर्म, करणं वा। तेन यतो धातोः प्रत्यय उत्पन्नः, तदर्थव्यतिरिक्तैव भावना तत्कर्मिका तत्करणिका वा तद्गतेन प्रत्ययेनोच्यते, न तु तस्यैव रूपान्तरमिति, न धात्वर्थसामान्यं भावनेत्युच्यते, धात्वन्तरेण तस्याभिधानं नानिष्टम्। यथा स्पन्दनस्य प्रयत्नस्य वा द्वयोर्वा भावनात्वे स्पन्दादिधातुवाच्यत्वम्, तस्मात्सिद्धं धात्वर्थारिक्तं भावनारूपम्, तत्र च धात्वर्थः करणम्। ततोऽपूर्वं कल्प्यत इति, भावशब्देभ्योऽपूर्वम्।

इति प्रथमं भावार्थाधिकरणम्।



अपूर्वाधिकरणम् ॥ २ ॥

## चोदना पुनरारम्भः ॥ ५ ॥

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'श्येनेनाभिचरन् यजेते' त्येवमादिषु अपूर्वं सिद्धं कृत्वा तत्प्रतिपादकशब्दविशेषो विचारितः, तस्य त्वस्तित्वमेवासिद्धमिति, तत्प्रतिपादनार्थमारभ्यते। किमेतेष्वपूर्वं नाम यागस्वर्गातिरिक्तमस्ति? ने? ति विचारः। तदर्थञ्च किं वाक्यावगतः स्वर्गयागादिसाध्यसाधनभावोऽपूर्वमन्तरेणापि घटते? ने? ति।

तत्र—साध्यसाधनभावो हि श्रूयते स्वर्गयागयोः।
वस्त्वन्तरस्य सद्भावे श्रुतिरेव विरुध्यते ॥ ३ ॥

वस्त्वन्तरं हि कल्प्यमानं यागसाध्यं स्वर्गसाधनं च कल्प्येत, तच्चोभयमपि श्रुतिविरुद्धम्, स्वर्गयागयोरेव साध्यसाधनभावश्रवणात्।

कथं पुनः क्षणिकयागस्य विनाऽपूर्वेण कालान्तरभावि फलसाधनत्वमिति यदि ब्रूयात्, प्रतिब्रूयादेनमपूर्वेऽपि कल्पिते कथं यागस्य फलसाधनत्वम्, तदाह्य-पूर्वमेव साधनं स्यात्, न यागः। यागस्यैव शक्तिः, अवान्तरव्यापारो वाऽपूर्वमिति चेत्? शक्तिमति व्यापारवति चातीते शक्तिव्यापारयोरवस्था-नायोगत्, तस्माद्याग एव विनष्टोऽपि फलं साधयति, स एव वा फलं यावदव-तिष्ठत इति शास्त्रप्रामाण्यादवगन्तव्यम्, नापूर्वमिति प्राप्ते—

ब्रूमः—विनष्टस्यासतस्तावन्न कार्यारम्भसंभवः।
क्षणिकत्वेन सिद्धस्य नावस्थानञ्च युक्तिमत् ॥ ४ ॥

तदेव हि श्रुतार्थानुपपत्त्या कल्पयितव्यम्, न यत्प्रमाणान्तरेण विरुध्यते, विरुद्धं च सर्वप्रमाणैर्विनष्टस्यासतोऽनारब्धवस्त्वन्तरस्य कार्यारम्भकत्वम्, अवस्थानं च क्षणमात्रवर्तिनः प्रमाणविरुद्धमेव, अतोऽपूर्वमेव कल्पनीयम्।

न च श्रुतिविरोधः, तस्य यागस्य शक्तित्वात्, अवान्तरव्यापारत्वाद्वा। न हि शक्त्या, अवान्तरव्यापारेण वा व्यवधिरकरणतामापादयति काष्ठादीनामिव ज्वालया। न वावश्यं शक्तिमत्येवावतिष्ठते कार्यानुमेया हि शक्तिः, यत्रैव कार्यायालम्, तत्रैव कल्प्यते। अतो यागशक्तिरात्मनि तिष्ठति इत्यविरोधः। एतदेवावान्तरव्यापाराणां तत्त्वं यत्समीहितोद्देशप्रवृत्तेन साधनेन तत्सिद्ध्यर्थ-मन्तरा साध्यमानत्वं काष्ठैरिव ज्वालायाः।, तस्मादस्त्यपूर्वं फलसाधनस्य कर्मणोऽवान्तरव्यापाररूपम्, अङ्गानां च फलवदुपकारसाधनानाम्।

## अपूर्वप्रक्रिया

एषाऽत्र प्रक्रिया—प्रथमं तावत्फलवाक्येन कर्मणः फलसाधनत्वम् बोध्यते, यागेन स्वर्गं कुर्यादिति, कथं विनश्वरेण फलं कर्तव्यमित्यपेक्षायाम-पूर्वं कृत्वेत्युच्यते, कथमपूर्वं क्रियत इत्यपेक्षायामङ्गानुष्ठानप्रकारेणेति. ततः पूर्वापरकालवर्तिभिरङ्गव्यापारैर्विषयीकृतस्य यागस्यापूर्वसाधनत्वं न स्वरूपेण संभवतीति. अपूर्वान्तरमपि कल्प्यते। दर्शपूर्णमासयोस्तु पक्षद्वयवर्तिभ्यां समु-दायाभ्यां युगपत्फलापूर्वारम्भायोगादेकैकं प्रति समुदायमपूर्वं कल्प्यते, तत्कथं-भावापेक्षायामग्न्यन्वाधानाद्यङ्गोपदेशः। ततः पूर्ववदेव पूर्वोत्तराङ्गसहितेभ्यः तदुत्पत्तिर्न स्वरूपेण संभवतीति प्रतित्रिकं त्रीणि त्रीण्यपूर्वाणि कल्प्यन्ते। यदि पुनः षड्यागेभ्यः प्रथममेव षडपूर्वाणि कल्प्येरन्, ततोऽपूर्वार्थत्वादङ्गानामङ्गो-पकृतेभ्योऽपूर्वसिद्धौ, पुनरपि षडपूर्वाणि कल्प्यानि स्युरिति गौरवं स्यात्।

तस्मादेकमेव फलापूर्वम्। उत्पत्त्यपूर्वाणि तु प्रतिप्रधानं भिद्यन्ते, तथाऽङ्गान्यपि क्रतूपकारकत्वेन स्वीकृतानि क्षणिकत्वान्न स्वरूपेण संहत्योपकर्तुं शक्नुवन्तीत्य-वान्तरव्यापाररूपाण्यपूर्वाणि तावदारभन्ते, ततः सर्वाणि संहत्य प्रधानस्य सामर्थ्योद्बोधनं फलारम्भोन्मुखत्वरूपमनुग्रहं परमोपकारं जनयन्ति।

### सान्निपत्यारादुपकारकयोर्विशेषकथनम्

तत्र त्वयं विभागः—सन्निपत्योपकारकाणि द्रव्यदेवतासंस्कारद्वारेण याग-स्वरूपस्यैव शक्त्यतिशयमादधानानि तदुत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते, तद्द्वारेण फलापूर्वे, आरादुपकारकाणि तु साक्षादेवोत्पत्त्यपूर्वेभ्यः फलापूर्वनिष्पत्तौ। एवम् प्रकारभेदे सत्यपि सर्वाण्यङ्गानि यागापूर्वनिष्पत्तावनुग्राहकाणि भवन्तीति, एव-मेकरूपेणेत्थंभावेन स्वीक्रियन्ते। तस्मादस्त्यपूर्वम्।

इति द्वितीयमपूर्वाधिकरणम्।



### तृतीयं तानिद्वैधाधिकरणम् ॥ ३ ॥

**तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥ यैर्द्रव्यं न चिकीर्ष्यते, तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात् ॥ ७ ॥ यैस्तु द्रव्यं चिकीर्ष्यते, गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात् ॥ ८ ॥**

एवं तावदस्त्यपूर्वम्, तच्चाख्यातेभ्यः, तदर्थं च द्रव्यादिपदम्। आख्यातं तु द्रव्याद्यपेक्षया प्रधानस्य कर्मणो वाचकमित्याख्यातभेदानुसार्यपूर्वभेदानुसरणम् कर्तव्यमिति स्थितम्। तस्यापवादः क्रियते। सत्यपि धात्वर्थ-भावनयोर्भेदे केषु-चिदाख्यातेषु नापूर्वं भिद्यते—इति। दर्शपूर्णमासयोः 'व्रीहीनवहन्ति' तण्डुलान् पिनष्टी' ति श्रूयते। तत्र संशयः—किमवघातादिभ्योऽपूर्वमस्ति ? न वे ति। तदर्थं च किमवघातार्था व्रीहयः ? उत व्रीह्यर्थोऽवघातः ? इति, तत्र वाक्यसाफल्या-यावश्यं कल्प्यमदृष्टम्, तच्च धात्वर्थादेव साध्यभूतान्नाय्यम्। तथा हि—भूतस्य द्रव्यस्य तन्निर्वृत्त्या दृष्टार्थता स्यात्। अन्यथा त्वदृष्टद्वयं कल्प्यमित्युक्तम् पूर्वाधिकरणे, तस्माद्व्रीह्यपेक्षयाऽवघातः प्रधानमेव, ततश्चापूर्वमिति।

स्यादेवं यद्यदृष्टं कल्प्येत अत्र पुनः क्लृप्तमेव यागनिर्वृत्तिः दृष्टं प्रयोजनम्, तादर्थ्ये चावघातस्य कर्मौपयिकं तुषविमोकादि दृष्टमेव प्रयोजनं लभ्यत इति, न कस्यचिद् अदृष्टं कल्प्यम्, नियमादृष्टन्तु कल्पनीयम्। तत्रावघातस्यादृष्टार्थत्वेऽपि द्रव्यनियमादवश्यं कल्प्यमित्यदृष्टद्वयम्, तद्वरमेकमेव दृष्टार्थावघातनियमाददृष्टं कल्पितम्।

इति तृतीयं तानिद्वैधाधिकरणम्

---

चतुर्थं संमार्गाधिकरणम् ॥ ४ ॥

**धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥९॥ तुल्यश्रुतित्वाद्वेतरैः सधर्म स्यात् ॥ १० ॥ द्रव्योपदेश इति चेत् ॥ ११ ॥ न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ॥ १२**

यत्र न किंचिद् दृष्टमस्ति, कर्मौपयिकं तु द्रव्यं द्वितीयया संयुज्य निर्दिश्यते। 'स्रुचः संमार्ष्टीत्यादिषु, तत्र विचार्यते' 'किं प्रधानकर्म, उत गुणकर्मे ति। तदर्थञ्च' साध्यवाचिनी द्वितीया ? अथवा साधनवाचिनी ? ति। यद्यपि चात्र सिद्धान्तेऽपि द्रव्यगतादृष्टरूपा [ संस्काररूपा ] पूर्वसद्भावान्नापूर्वभेदाभेदयोरुपयोगः, तथाऽपि पूर्वोक्तगुणकर्मलक्षणस्याव्यापकत्वम्, प्रधानकर्मलक्षणस्यातिव्याप्तिश्चाशंक्य समाधीयत इति सङ्गतिः। तथा हिं 'यैस्तु द्रव्यं चिकीर्ष्यते' इति दृष्टोपकारित्वं गुणकर्मलक्षणमुक्तम्' तच्चाव्यापकम्, संमार्गादिष्वभावात्। तथा 'यैर्द्रव्यं न चिकीर्ष्यते' इति दृष्टोपकाराभावः प्रधानकर्मलक्षणमुक्तम्, तच्च संमार्जनादिष्वतिव्यापकम्। तेषामपि प्राधान्यप्रसङ्गात्। तदिदमाशङ्काद्वयं निराकर्तुमिदमुच्यते। द्वितीयाश्रुत्या संमार्गादीनामपि द्रव्यगुणत्वम्, पूर्वोक्तन्तु लक्षणद्वयं न गुणप्रधानविषयम्, अपि त्वपूर्वसदसद्भावविषयम्। तावन्मात्रस्यैव भावार्थाधिकरणापवादत्वेन प्रतिपित्सितत्वात्। तेनापूर्वसदसद्भावाय तानि द्वैधमि'ति गुणप्रधानकर्मणी उपक्षिप्ते। कीदृशं तद् गुणकर्म ? यत्रापूर्वं नास्ति। कीदृशं वा प्रधानकर्म यत्रापूर्वं विद्यते ? इत्यपेक्षायामुक्तं दृष्टोपकारिष्वपूर्वम् नास्ति, तदभावे त्वस्तीति। संमार्गादिषु चास्त्येवापूर्वं द्रव्यगतमित्यनवद्यं लक्षण।म्

अत्र पूर्वपक्षाभिप्रायः—दृष्टप्रयोजनत्वमेव गुणकर्मलक्षणम्, न द्वितीयेति।

कुतः— व्यभिचारान्न साध्यत्वमुच्यते लोकवेदयोः।
साधनत्वं द्वितीयार्थः सर्वत्राव्यभिचारतः ॥ ५ ॥

वल्बजान् शिखण्डकान् कुर्विति लोके, वेदे च 'सक्तून् जुहोती'ति व्यभिचारान्न साध्यत्वं द्वितीययोच्यते, साधनत्वन्तु घटं करोतीत्यादावपि घटादीनां बुद्धिस्थत्वेन क्रियाहेतुत्वादस्त्येवेत्यव्यभिचारात्स एव हि द्वितीयार्थः, अतः स्रुगादिसाधनकसंमार्गविधानात् दृष्टोपकाराभावाच्च प्रधानकर्मैव संमार्गादीनीति प्राप्ते—

ब्रूमः— स्मृत्या साध्याभिधायित्वं द्वितीयायाः प्रतीयते।
कर्तुर्यदीप्सितं यच्च तथा युक्तमनीप्सितम् ॥ ६ ॥
तत्कर्म तद् द्वितीयार्थ इत्येवं पाणिनेः स्मृतिः।
बलीयसी च साऽऽचारात्प्रयोगोऽप्यस्ति तादृशः ॥ ७ ॥

स्मृतिस्तावदाचाराद्बलीयसीति स्थितम्। स्मरति च पाणिनिः 'कर्मणि द्वितीया' 'कर्तुरीप्सिततमं कर्म' १–४–४९ 'तथा युक्तञ्चानीप्सितमि' १–४–५०ति च यथेप्सितं क्रियया युज्यते साध्यात्मनैव, क्रियया युक्तमनीप्सितमपि कर्मसंज्ञमितीप्सितानीप्सितानुवर्ति साध्यरूपं कर्मेत्यर्थः। कर्म च द्वितीयाऽर्थ इति, साध्यत्वमेव द्वितीयार्थः।

न च निर्मूलं स्मरणम्, 'घटं करोति, व्रीहीनवहन्ती'ति लोकवेदयोः प्रयोगसद्भावात्। यदि च साधनत्वमर्थः स्यात्, परशुना छिनत्तीति परशौ द्वितीया स्यात्। साधनविशेषवचनत्वादयमदोष इति चेत्? कः पुनरसौ? यस्य साध्यत्वमिति चेत्, एवं तर्हि तदेव वाच्यमस्तु, किं साधनत्वोपलक्षणत्वेन। नन्वेवमपि कथं स्रुगादीनां शेषित्वम्? ईप्सितं हि शेषि भवति। न चेप्सितं द्वितीयाऽर्थः। किं त्वीप्सितानीप्सितानुवर्तिसाध्यत्वमात्रम्। सत्यम्। न शेषित्वं द्वितीयार्थः, तत्तु विधेर्लभ्यते। विधिवशेन हि समीहितमेव। भावनाया भाव्यमवगतम्, तद्विशेषश्च पदान्तरात्प्रार्थ्यते। तत्र स्रुगादीनां द्वितीयया भाव्यत्वमुच्यते। समीहितभाव्यापेक्षिण्यां भावनायां नासमीहितस्य भाव्यत्वं संभवतीति, स्रुगादीनां समीहितत्वंसिद्धिः।

ननु यत्समीहितम्, तस्य साधनं विधिना बोध्यते, न तु तद्वशेन समीहितत्वम्, को नामाह समीहितत्वं विधिगम्यमिति? किं तु विधिविषयीभूतया

क्रियया ईप्सितत्वं स्रुगादीनां द्वितीयया प्रतिपादितसाध्यभावानां विधिवशाद्गम्यते- इत्युच्यते। स्वरूपेण तु तेषां समीहितत्वं क्रतुसाधनत्वादेव सिद्धम्।

सक्तूनां तु भूतभाव्युपयुक्तत्वाभावान्न समीहितत्वमस्तीति, समीहित- साध्यापेक्षिण्यां भावनायां भाव्यत्वेनान्वयस्यायोग्यत्वात् साधनत्वमेव लक्षणया द्वितीयाऽभिधत्ते। स्रुगादीनि तु क्रतुसाधनरूपेणेप्सितत्वाद्योग्यान्येव समीहितभाव्यापेक्षिण्या संमार्गभावनयाऽन्वेतुमिति, साध्यत्वमेव श्रुतिबलेन गृह्यते, तत्र दृष्टोपकाराभावेऽप्यदृष्टकल्पनात्सिद्धं गुणकर्मत्वम्।

इति चतुर्थं सम्मार्गाधिकरणम्।

पञ्चमं स्तुतशस्त्राधिकरणम्॥ ५॥

स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात्॥ १३॥ अर्थेन त्वपकृष्येत, देवतानामचोदनार्थस्य गुणभूतत्वात्॥ १४॥ वशावद्वाऽगुणार्थं स्यात्॥ १५॥ न श्रुतिसमवायित्वात्॥ १६॥ व्यपदेशभेदाच्च॥ १७॥ गुणश्चानर्थकः स्यात्॥ १८॥ तथा याज्यापुरोरुचोः॥ १९॥ वशायामर्थसमवायात्॥ २०॥ यत्रेति वाऽर्थवत्त्वात् स्यात्॥ २१॥ न त्वाम्नातेषु॥ २२॥ दृश्यते॥२३॥ अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम्॥२४॥ शब्दपृथक्त्वाच्च॥२५॥ अनर्थकञ्च तद्वचनम्॥ २६॥ अन्यश्चार्थः प्रतीयते॥२७॥ अभिधानञ्च कर्मवत्॥२८॥ फलनिर्वृत्तिश्च॥२९॥

इह स्तोत्र-शस्त्राण्युदाहरणम्—'आज्यैः स्तुवते' इत्यादि। प्रगीतम- न्त्रसाध्यं गुणेन गुणिनः संबन्धनं स्तवनम्-स्तोत्रम्। शस्त्रमपि स्तवनमेवाप्रगीत- मन्त्रसाध्यम्—'प्रउगं शंसती' त्यादि। गुणकर्माणि, प्रधानकर्माणि वेति विचारः।

तदर्थंच किं देवतां प्रति गुणभूतानि-तत्प्रकाशनार्थानि ? किं वा देवतां प्रति प्रधानभूतान्यदृष्टार्थानी ? ति।

तत्र— देवतास्मरणं दृष्टमुज्झित्वाऽदृष्टकल्पनम्।
न युक्तम्, तेन तादर्थ्यात्स्तोत्रादेर्गुणकर्मता ॥ ८ ॥

गुणगुणिसंबन्धे हि कीर्त्यमाने गुणिनी देवता कीर्त्यते, तत्कीर्तनाच्च तत्स्मरणं क्रतूपयोगि दृष्टमेव प्रयोजनं लब्धमिति, नादृष्टकल्पनावसरः। तस्माद्देवताप्रकाशनार्थत्वाद्गुणकर्मैवेति—

उच्यते— सत्यं दृष्टार्थता युक्ता श्रुतिश्चेन्न विरुध्यते।
देवतास्मरणार्थत्वे श्रुतिरूपं विहन्यते ॥ ९ ॥

यथाश्रुतस्यार्थस्य प्रयोजनकल्पनं न श्रुतरूपहानेन। स्तुतिश्चात्र कर्तव्यतया श्रूयते-स्तौति, शंसति-इति। यदा च मन्त्रवाक्यं गुणसंबन्धाभिधानपरमेव भवति, तदा स्तुतिर्भवति। यदा तु गुणद्वारेण गुणिप्रकाशनार्थम्, तदा स्तुतिर्न भवति। यथा लोके वक्रकेशान्तो देवदत्त इति गुणसंबन्धपरत्वे स्तुतिम् मन्यन्ते। यदा तु एवमुच्यते-योऽयं वक्रकेशान्तः, तमानयेति, न तदा स्तुतिबुद्धिर्भवति। तेन प्रकाशनार्थत्वे स्तौतिशंसत्योः स्वार्थहानेन प्रकाशनलक्षणा स्यात्।

न च तत्र लक्षणार्थत्वे प्रमाणमस्ति, श्रुत्यैव वाक्यार्थोपपत्तेः। तेन श्रुतिबलाददृष्टार्थत्वमेव। एवञ्च माहेन्द्रग्रहसन्निधावैन्द्री स्तुतिरुपपन्ना भवति। इतरथा हि श्रुतिसमवायिनी देवता विधिशब्देनैव निगमेषु वक्तव्येति, माहेन्द्रग्रहदेवता नेन्द्रशब्देन शक्यते प्रकाशयितुमिति, यत्रेन्द्रः, तत्रैन्द्री स्तुतिरुत्कृष्येत, मनोतास्थाग्निशब्दवद्वाऽग्नीषोमाविन्द्रशब्द एव महेन्द्रं लक्षणया प्रकाशयेत्। तच्च द्वयमप्यन्याय्यम्, तस्मात्प्रधानकर्मणी स्तोत्रशस्त्रे।

इति पञ्चमं स्तुतशस्त्राधिकरणम्

षष्ठं विधिमन्त्राधिकरणम् ॥ ६ ॥

विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥३०॥ अपि वा प्रयोगसामर्थ्यात् मन्त्रोऽभिधानवाची स्यात् ॥ ३१ ॥

प्रासङ्गिकमिदमधिकरणम्। द्विविधमाख्यातमुक्तम्-प्रधानकर्मणां विधायकम्, गुणकर्मणां विधायकञ्चे ति। किमेतदेव प्रकारद्वयम्? नेत्युच्यते। अस्ति तृतीयोऽपि प्रकारोऽभिधायकत्वमिति प्रतिपाद्यते। तत्र 'देवांश्च याभिर्यजते ददाति च, अग्नीदग्नीन्विहर, बर्हिर्देवसदनंदामी' तित्येवमादीनि यच्छब्दामन्त्रणोत्तम-पुरुषादिसंयुक्तान्याख्यातानि। यानि च 'यस्योभयं हविरार्तिमार्छेदि'त्यादीनि यावन्ति निमित्तादिप्रतिपादनेनाख्यातान्तरै रेकवाक्यतां गतानि, तान्युदाहरणम्। तानि च प्रायेण मन्त्रेष्वेवेति, मन्त्रोपन्यासः। न तु मन्त्रत्वस्य कश्चिन्न्यायो-पयोगः। तानि विधायकानि, न वेति संशयः।

तत्र—

विधायकत्वमेतेषामाख्यातत्वाविशेषतः ।
सत्यपि प्रकृते कर्मण्यभ्यासात्कर्मभेदधीः ॥ १० ॥

अत्रोच्यते—यच्छब्दादिभिरेतेषां विधिशक्तिर्विहन्यते।
न हि याभिर्यजेतेति कथंचिद्विधिसंभवः ॥ ११ ॥

तथा दासि गृह्णामीति नात्मनाऽऽत्मा शक्यो विधातुम्। आमन्त्रण-विभक्ते'श्चाग्नीदग्नीन्विहरे'ति वक्त्रभिमुखश्रोतृविषयत्वात्, वेदे च वक्तुरभावात् विधेश्चाभिमुखानभिमुखपुरुषसाधारणत्वाद्विरुद्धस्वभावेनामन्त्रणेन विधिशक्त्य-वलोपः। तस्मादेवमादीनां प्रयोगमध्ये पुरुषान्तरेण पुरुषे स्मारयितव्ये सामर्थ्यम्, न बहिःप्रयोगभाविनि विधाविति, सिद्धमभिधायकत्वम्।

इति षष्ठं विधिमन्त्राधिकरणम्।

---

सप्तमं मन्त्रलक्षणाधिकरणम् ॥ ७ ॥

तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥

न्यायानौपयिकेनापि मन्त्रशब्देन पूर्वं व्यवहृतमिति, तत्प्रसङ्गात् 'अहे-बुध्निय मन्त्रं मे गोपाये'त्यादि वेदे प्रयुक्तस्य मन्त्रशब्दस्यार्थनिरूपणार्थं मन्त्र-

लक्षणं क्रियते । यानि प्रयोगकालेऽनुष्ठानौपयिकार्थाभिधानस्वरूपाणि वाक्यानि, तानि मन्त्रशब्देनोच्यन्ते । प्रायिकमिदमभियुक्तप्रसिद्ध्युपलक्षणार्थम् । यत्र अभियुक्तानां मन्त्रप्रसिद्धिः, स मन्त्र इत्यर्थः ।

इति सप्तमं मन्त्रलक्षणाधिकरणम् ।



अष्टमं ब्राह्मणलक्षणाधिकरणम् ॥ ८ ॥

शेषे ब्राह्मणशब्दः ॥ ३३ ॥

द्विविभागस्य वेदस्यैकस्य भागस्य मन्त्रात्मकस्य लक्षणमुक्तम् । तत्प्रसङ्गा'देतद्ब्राह्मणान्येव पञ्च हवींषी' ति वेदप्रयुक्तब्राह्मणशब्दार्थपरिज्ञानार्थम् ब्राह्मणलक्षणकथनम् । अवशिष्टं ब्राह्मणमिति ।

इत्यष्टमं ब्राह्मणलक्षणाधिकरणम् ।



नवममूहाद्यमन्त्रताधिकरणम् ॥ ९ ॥

अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात् ॥ ३४ ॥

ऊह-प्रवर-नामधेयानां मन्त्रत्वम्, उत नेति संदेहे, मन्त्रवाक्यैकवाक्यत्वेन तन्मध्ये निवेशान्मन्त्रकार्यकरत्वेन च मन्त्रत्वे प्राप्ते—

अभिधीयते—मन्त्रकार्यकरत्वं तावद्रथघोषादिष्वनैकान्तिकम्, मन्त्रैकवाक्यताऽपि न तत्कारणम् ।

किन्तु—अभियुक्तप्रसिद्ध्या हि मन्त्रत्वमवगम्यते ।
स्वाध्यायकाले तेषां च समाम्नातेषु मन्त्रधीः ॥ १२ ॥
मन्त्रानध्यापयामोऽद्य तथा मन्त्रानधीमहे ।
समाम्नायबहिर्भूत ऊहादौ नास्ति मन्त्रधीः ॥ १३ ॥

तस्मादभियुक्तप्रसिद्ध्यभावादेवामन्त्रत्वम् ।

इति नवममूहाद्यमन्त्रताधिकरणम् ।



दशममृग्लक्षणाधिकरणम् ॥ १० ॥

## तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५ ॥

वेदभागयोर्मन्त्रब्राह्मणयोर्लक्षणमुक्तम् । तत्र मन्त्रभागस्यापरोऽवान्तरविभागः—ऋगादिरूपो लोके वेदे च प्रसिद्धः । 'अहे बुध्निय मन्त्रं मे गोपाय, यमृषयस्त्रयीविदा विदुः, ऋचः सामानि यजूंषी' तै० ब्रा० १-२- २६ ति । तत्र को भाग ऋक्शब्देनोच्यते ? को वा सामवेदशब्देन ? को वा यजुःशब्देनेति, तत्परिज्ञानाय ऋगादिलक्षणमुच्यते । यत्रार्थवशेन पादव्यवस्था, सा ऋक्—इति ।

इति दशममृग्लक्षणाधिकरणम् ।

---

एकादशं सामलक्षणाधिकरणम् ॥ ११ ॥

## गीतिषु सामाख्या ॥ ३६ ॥

यद्यपि प्रगीते मन्त्रे सामशब्दप्रयोगोऽभियुक्तानाम्, तथाऽपि नागृहीतविशेषणेति न्यायेन 'कवतीषु रथन्तरङ्गायती' त्याद्यतिदेशोपपत्तेश्च गीतिरेव सामेति सप्तमे सूत्रकारः स्वयमेव वक्ष्यति । इह तु मन्त्रविभागमात्रं विवक्षितम्। तद्यदि प्रगीतो मन्त्रः साम, यदि वा गीतिमात्रम् । उभयथाऽपि ऋक्सामेतिवत् ऋग्यजुषेति निपातनात् प्रकृतस्य साधुता ऋग्यजुषाभ्यामन्यत्सामेति विभागसिद्धेर्न विभागाय प्रयत्यते । सप्तमे तु 'रथन्तरमुत्तरयोर्गायती'त्याद्यतिदेशौपयिकत्वाद्विभागेन प्रयोजनमस्तीति, तत्रैव वक्ष्यमाणावष्टम्भेन गीतिः सामेत्युक्तम् । यत्त्वत्र भाष्यवार्तिकयोर्गीतिवाचित्वं साधितम्, तद्वक्ष्यमाणमेव प्रसङ्गादिति द्रष्टव्यम्, न सूत्रार्थतया । माभूत्साप्तमिकस्य पौनरुक्त्यम् ।

इति एकादशं सामलक्षणाधिकरणम् ।

---

यजुर्लक्षणाधिकरणम् ॥ १२ ॥

## शेषे यजुःशब्दः ॥ ३७ ॥

ऋक्सामाभ्यां यदन्यत्प्रश्लिष्टपठितं मन्त्रजातम्, तद्यजुः ।

इति द्वादशं यजुर्लक्षणाधिकरणम् ।

---

## निगदाधिकरणम् ॥ १३ ॥

**निगदो वा चतुर्थं स्याद्धर्मविशेषात् ॥३८॥ व्यपदेशाच्च ॥३९॥ यजूंषि वा तद्रूपत्वात् ॥४०॥ वचनाद्धर्मविशेषः ॥४१॥ अर्थाच्च ॥४२॥ गुणार्थो व्यपदेशः ॥ ४३ ॥ सर्वेषामिति चेत् ॥ ४४ ॥ न ऋग्व्यपदेशात् ॥ ४५ ॥**

शेषे यजुः शब्द इत्येतदाक्षेपेणेदमारभ्यते। सन्ति निगदा नाम परसंबोधनरूपा मन्त्राः 'प्रोक्षणीरासादये'त्यादयः। ते किं यजूंष्येव, उत यजुर्भ्योऽन्ये? इति विचारः। संज्ञाभेदादिमे निगदाः, इमानि यजूंषीति। तथा 'उपांशु यजुषा' 'उच्चैर्निगदेने'ति विप्रतिषिद्धधर्मयोगाच्च भेदप्राप्तौ—

उच्यते। संज्ञा तावन्नितराङ्गद्यन्ते इति व्युत्पत्त्या यजुःष्वेवोच्चैर्धर्मयोगाच्छक्नोति वर्तितुम्। ब्राह्मणेष्विव परिव्राजकसंज्ञेति, न तया भेदः।

न च धर्मभेदाद्भेदः, सत्यपि यजुष्ट्वे परप्रत्यायनकार्यविरोधेन निगदेषूपांशुत्वाप्राप्तेः, अर्थवशादुच्चैस्त्वसिद्धेः।

ननु वाचनिकमुपांशुत्वम्, लैङ्गिकं परसम्बोधनं कार्यम, तत्कथं लिङ्गेन वचनस्य बाधः? उच्यते। मन्त्राङ्गमुपांशुत्वम्, मन्त्रस्य प्रधानं परप्रत्यायनकार्यम्, तद्यद्यपि दुर्बलप्रमाणकम्, तथाऽपि स्वरूपतो बलवत्त्वात् बलवत्प्रमाणकमपि स्वरूपतो दुर्बलमुपांशुत्वं बाधते। प्रमाणबलाबलाद्धि प्रमेयबलाबलम्बलीय इति वर्णितमेतत्।

न च वचनस्याप्रामाण्यम्, यजुरन्तरे सावकाशत्वात्। अपि चाप्राप्तविधानान्नियमविधानं लघीयः। तेन यत्रानियमेनोपांशुत्वं प्राप्तम्, तत्र तन्नियममात्र'मुपांशु यजुषे'त्यनेन क्रियते। निगदव्यतिरिक्तेषु च यजुःषु येन केनचित्स्वरेण कार्यसिद्धेरुपांशुत्वस्यानियमप्राप्तिरिति, तद्विषयवेदं वचनम्। निगदेषु तु कार्यबलेनोच्चैस्त्वमेव प्राप्तम्, न पक्षेऽप्युपांशुत्वमिति, न तत्रास्य वचनस्य व्यापारः। एवं चार्थप्राप्ते 'रुच्चैर्निगदेने' त्यनुवादः। तस्माद्यजूंष्येव निगदाः, न मन्त्रान्तरम्। तथा वेदे 'अहे बुध्नियमन्त्रं मे गोपाय, ऋचः सामानि यजूंषी'ति मन्त्रशब्दसामानाधिकरण्यं ऋगादीनामेव त्रयाणां दृश्यते। जात्यन्तरत्वे हि निगदशब्दोऽपि तत्र श्रूयेत। तस्मात् त्रैधमेव मन्त्राणाम्।

इति त्रयोदशं निगदाधिकरणम्।

चतुर्दशमेकवाक्यत्वलक्षणाधिकरणम् ॥ १४ ॥

## अर्थैकत्वादेकं वाक्यं साकाङ्क्षञ्चेद्विभागे स्यात् ॥ ४६ ॥

ऋग्यजुःसामरूपे मन्त्रविभागेऽभिहिते, अधुना तदवान्तरभेदं कथयितुं प्रस्तावः। तत्र ऋक्सामानामध्येतृसिद्धो भेदो न वक्तव्यः। यजुषान्तु प्रश्लिष्टपठितानां भेदो न सुज्ञान इति, तत्परिज्ञानाय यजुषः परिमाणलक्षणमुच्यते। यावदेकप्रयोजनं, विभागे च साकाङ्क्षं पदजातम्, तावद्यागसाधनत्वादेकं यजुः, वक्तव्यत्वाच्च वाक्यम्। एतस्माद्धेत्कारणादेकवाक्यत्वम्। तदा यत्ततोऽन्यत् वाक्यान्तरं यजुरन्तरं चेत्युक्तं भवति। उदाहरणम्—'देवस्य त्वा सवितुः प्रसवं' इति। अत्र हि सर्वाणि पदानि निर्वापप्रकाशनार्थानि, विभागे च साकाङ्क्षाणि। तस्मादेकयजुष्ट्वम्।

इति चतुर्दशमेकवाक्यत्वलक्षणाधिकरणम्।

---

वाक्यभेदाधिकरणम् ॥ १५ ॥

## समेषु वाक्यभेदः स्यात् ॥ ४७ ॥

एकप्रयोजनं सर्वं विभज्यमानं साकाङ्क्षं पदजातमेकं यजुरित्युक्तम्। एतेन लक्षणेन यत्र कर्मसमवेतार्थप्रकाशकं निर्वपामीत्यादि पदमस्ति, तत्र सुगमम् परिमाणम्। अथ यत्र समवेतार्थपदाभावेन लैङ्गिकविनियोगाभावे वाचनिकः विनियोगः, परस्परनैराकाङ्क्षं च स्वरूपतोऽवगम्यते। यथे 'षेऊत्वोर्जेत्वे' ति, यथा वाऽऽयुऽऽर्यज्ञेन कल्पतां, प्राणो यज्ञेन कल्पतामि'ति। तत्र कियदेकं यजुरिति चिन्त्यते, किं प्राग् दृष्टार्थमन्त्रावधेरेकमन्त्रत्वम्? उत यावदेव मिथः संबद्धमिषे त्वे ति, तावदेकं यजुः, अन्यच्च यजुरन्तरमिति? तदर्थं च किं सर्वमेकार्थमः, उत भिन्नार्थमिति? चिन्ता।

तत्र तावत्—

अदृष्टार्थत्वमेतेषामनुष्ठेयाप्रकाशनात्।
तच्चैकं तत्र साकाङ्क्षाः सर्वे इत्येकवाक्यता ॥ १४ ॥

अदृष्टं हि कल्प्यमानमेकमेव युक्तम्, तावतैवोपपत्तेः। अतः सर्वे तावदेकार्थाः। तच्च सर्वेषां सह कल्पितमिति संभूयकारित्वाद्विभज्यमानाः साकाङ्क्षाः

भवन्तीत्येकवाक्यता, निश्चिते च मन्त्रैकत्वे यद्यपि प्रत्येकभेदेनानेकत्र विनियोगः- 'इषे त्वेति छिनत्ति, उर्जे त्वेति अनुमार्ष्टीति। तथाऽपि यावद्विनियोगं सकल-आवर्तिष्यते।

उच्यते—

यद्यप्येषामदृष्टोऽर्थस्तथाऽपि न तदेकता।
रूपतो हि निराकाङ्क्षा भिन्नत्वेनावधारिताः॥ १५॥
अन्योन्यानादरेणैव प्रार्थयन्ते प्रयोजनम्।
यथाऽपेक्षमतस्तेषां भिन्नादृष्टप्रकल्पना॥ १६॥
यथा विश्वजिदादीनां भेदेन फलकल्पना।
यथा च समिदादीनामपूर्वं भिन्नमिष्यते॥ १७॥
तद्वदेव न चात्रैषामदृष्टार्थत्वसंभवः।
शाखाच्छेदप्रकाशेन दृष्टार्था हि विधेरमी॥ १८॥

'इ षे त्वेति छिनत्ती'ति शाखाच्छेदने करणत्वेन मन्त्रो विधीयते, क्रिया-निर्वर्तकञ्च करणं भवति। न च मन्त्राणां क्रियानिर्वर्तकत्वमन्यतः प्रकाशनात्। तेन विधिवशादेषां प्रकाशनार्थत्वम्। तत्र यावता विना चोदितप्रकाशनं न भवति, तावदध्याहर्तव्यं छिनाद्मीत्यादि। तत्रैकेन छेदनं प्रकाश्यते, अन्येनानु-मार्जनमिति, अर्थभेदान्मन्त्रभेदः।

तथा 'आयुर्यज्ञेन कल्पतामि' त्यादीनामपि स्वरूपतो निराकाङ्क्षत्वात् "क्लृप्तीर्वाचयती'ति च क्लृप्तिबहुत्ववचनस्य चोदितत्वात्तत्सम्पत्त्यर्थमायुरादि-विशिष्टक्लृप्तिभेदप्रकाशनपरत्वादर्थभेदेन मन्त्रभेदः।

इति पञ्चदशं वाक्यभेदाधिकरणम्।

---

## अनुषङ्गाधिकरणम्॥ १६॥

### अनुषङ्गो वाक्यपरिसमाप्तिः सर्वेषु तुल्ययोगित्वात्॥ ४८॥

अत्रापि यजुःपरिमाणमेव चिन्त्यते। यत्र बहूनां वाक्यशेषापेक्षिणाम् वाक्यानां सन्निधावेकस्यानन्तरदेशे परिपूरणसमर्थो वाक्यशेषः श्रूयते। यथा-'या ते अग्नेऽयाशया, तनूर्वर्षिष्ठा गह्वरेष्ठा' उग्रं वचो अपावधी त्वेषं वचो अपा-

वधीत्स्वाहा, या ते अग्ने रजाशया, याते अग्ने हराशये'ति। अत्रोत्तरौ मन्त्रावुदाहरणम्। किं तयोर्लौकिकः शेषो ऽध्याहर्तव्यः ? उत योऽसौ पूर्वमन्त्रानन्तरं पठितः तनूर्वर्षिष्ठेत्यादिः, स एव सर्वेषामर्थेनाम्नातः पूर्वस्यैवोत्तरयोरप्यनुषङ्गेण शेष ? इति। अध्याहारे 'या ते अग्ने रजाशयेत्येतावानेव मन्त्रः, अध्याहृतस्य लौकिकस्योहादिवदमन्त्रत्वात्। अनुषङ्गे तु तत्सहित एव मन्त्र इत्यस्ति परिमाणे विशेषः।

तत्र—एकत्रैव निबद्धो हि समाम्नायेन वैदिकः।
शेषोऽन्यत्र न नेतव्यो लौकिकस्त्वनिबन्धनः॥ १५॥

लौकिको हि शब्दः सर्वार्थः' न क्वचिदेव विशेषेण निबद्धः, स यत्र यत्र कार्यम्, तत्र सर्वत्र यथेष्टं विनियुज्यमानो न विरुध्यते। वैदिकस्तु यदर्थमाम्नातः तेनैव निबद्धो नान्यत्र नेतुं शक्यते, नीयमानो वा समाम्नायवहिर्भावाल्लौकिक एव स्यात्।

न च सर्वार्थमाम्नात इति वाच्यम्, सकृदाम्नातस्यानेकार्थताऽनुपपत्तेः। न चागृह्यमाणविशेषत्वम्, आनन्तर्येण देशभेदेन च विशेषग्रहणात्। प्रथमस्य ह्यसावनन्तरः, न तृतीयस्य। द्वितीयस्य तु यद्यप्यनन्तरः, तथाऽपि परस्ताद्भावित्वेन वाक्यशेषस्याकाङ्क्षितत्वान्न पुरस्ताद्भाविना संबन्धः, प्रथमस्य त्वपेक्षित एव देशे पठितः, तस्मात्तस्यैवायं शेष इति प्राप्ते—

अभिधीयते—यथापेक्षितरूपे हि वाक्यशेषे समर्पिते।
वेदेन लौकिकः शेषो न मृग्यो निष्प्रमाणकः॥ १६॥

सर्वानन्तरं सकृत्पठितुमशक्यः, बुद्धिविपरिवृत्तिमात्रेण साकाङ्क्षैः सर्वैः संबन्धसिद्धेः। पुनःपुनरसमाम्नातोऽप्ययं शेषः सर्वार्थेनैवाम्नात इति युक्तमङ्गीकर्तुम्। एवं वेदसमर्पितेन शेषेण सर्वेषां नैराकाङ्क्ष्यसिद्धेः, निष्प्रमाणकः लौकिकोऽध्याहारः। शक्नोति चायं सर्वैः संबद्धुम्। प्रथमेन हि संबद्धः, द्वितीयस्याप्यकाङ्क्षावेलायां बुद्धौ विपरिवर्तमानस्तेनापि संबध्यते, तत्संबन्धाच्च विपरिवृत्त्यभङ्गात् तृतीयेनापि संबन्धसिद्धिः। तुल्यो ह्यस्य सर्वैर्योगः, कारणाविशेषात्। एतावच्च शब्दानामन्वये कारणमाकाङ्क्षा, सन्निधिः, योग्यत्वं च, न त्वनन्तरसमाम्नानम्। व्यवहितस्याप्यसंबन्धिव्यवधानाभावे बुद्धिविपरिवृत्तिरूपम् सन्निधानं सर्वत्र क्रमेण लभ्यते। तस्मादाम्नानमेवास्य सर्वार्थमिति, सर्वशेषता।

वर्णकान्तरम्

एवं तावत्साकाङ्क्षेष्वनुषङ्ग उक्तः। यत्र तु निराकाङ्क्षाणामेकार्थानाम् सन्निधावेकस्यानन्तरं वाक्यशेषः श्रूयते। यथा 'चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनात्वि सं-१-२-१-ति। सर्वे निराकाङ्क्षा यजमानपावनार्थाः सत्यप्येकार्थत्वे वचनात्समुच्चीयन्ते। तेषामन्ते 'अच्छिद्रेण पवित्रेणे'ति शेषः समाम्नातः। स किं पूर्वयोरपि अनुषज्यते? किं वा परस्यैव मन्त्रस्य शेष? इति। तत्र शेषस्तावदेकेनैवानन्तरेण संबन्ध्य निराकाङ्क्षः संपद्यते, शेषिणस्तु प्रागेव निरपेक्षाः, तेनाप्रामाणिकोऽनुषङ्ग इति।

उच्यते। पुनातुशब्देनैकवाक्यतामुपगतोऽयमच्छिद्रादिः करणद्वारेण पावनक्रियाप्रकाशनार्थः, सैव च क्रिया पूर्वाभ्यामपि मन्त्राभ्यां प्रकाश्यते, तदर्थञ्च वाक्यशेषः प्रधानवशात्तत्राकृष्यत इत्यनुषङ्गसिद्धिः।

इति षोडशमनुषङ्गाधिकरणम्।

---

## व्यवेताधिकरणम् ॥ १७ ॥

### व्यवायान्नानुषज्येत ॥ ४९ ॥

'सन्ते वायुर्वातेन गच्छताम्, संयजत्रैरङ्गानि, संयज्ञपतिराशिषे'ति गच्छतामित्ययं शब्दः 'संयजत्रै'रङ्गानीत्यनेन बहुवचनान्तेनायोग्यत्वान्न संबध्यते। संयज्ञपतिना तु योग्यत्वादनुषङ्गेण संबध्येत-इत्याशङ्कायाम्—

उच्यते—पूर्वत्रासंबद्धत्वेन बुद्धिविपरिवृत्तिभङ्गान्नानुषङ्गः।

सर्वत्र तुल्ययोगित्वादनुषङ्गो हि वर्णितः।
असंबन्धितिरोधाने व्यवधानान्न तुल्यता ॥ १७ ॥

इति सप्तदशं व्यवायाधिकरणम्।

इति शास्त्रदीपिकायां द्वितीयाध्यायस्य प्रथमः पादः।

# अथ द्वितीयः पादः

## शब्दान्तराधिकरणम् ॥ १ ॥

### शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ १ ॥

गतमुपोद्घातप्रसक्तानुप्रसक्तम्। इदानीं लक्षणार्थः कर्मभेदः शब्दान्तरादिभिरभिधीयते। तत्र प्रथमं शब्दान्तराद् भेदोऽभिधीयते, इहैकप्रकरणगतान्यपर्यायधातुनिष्पन्नान्याख्यातानि यजति-ददाति-जुहोतीत्यादीन्युदाहरणम्। अत्र हि सत्यपि प्रत्ययांशस्यैकत्वे धातुभेदादाख्यातपदानि मिथः-शब्दान्तराणि भवन्ति। तत्र संशयः—किमत्रैका भावना नानाधात्वर्थानुरक्ता विधीयते ? उत प्रतिधात्वर्थं भावनाभेदः ? इति।

तत्र—भिन्नासु भावनासु स्यादनेकापूर्वकल्पनम्।
एकक्लृप्त्युपपन्नेऽर्थे नानेकं तत्र कल्प्यते ॥ १८ ॥

फलापवर्गित्वात्क्रियाणाम्, न फलभेदमन्तरेण भेदसंभवः, तद्यदि प्रतिधात्वर्थं भावनाभेदः स्यात्। ततः सा भाव्यरूपाऽपूर्वभेदादृते न भिद्यत इति, अनेकापूर्वकल्पना स्यात्, न चैकेनोपपन्ने वाक्यार्थे, अनेककल्पनं न्याय्यम्। तस्मादेका भावना।

किंच—भावना प्रत्ययार्थत्वात्तदेकत्वान्न भिद्यते।
गुणभूता हि धात्वर्था न तां भिन्द्युः कथंचन ॥ १९ ॥

यद्यपि धातुभेदादाख्यातपदानि मिथःशब्दान्तरम्, तथाऽपि प्रत्ययांशः सर्वत्रैकरूपः, तदर्थश्च भावना तदभेदादभिन्ना भवितुमर्हति। यदि हि धात्वर्थान् प्रति गुणभूता भावना स्यात्, ततस्तेषां धातुभेदेन भिन्नत्वाद्भावनाऽपि तान्प्रति उपादीयमाना प्रति धात्वर्थं भिद्येत। भावनाप्रधानत्वात्त्वाख्यातस्य तां प्रत्युपादीयमाना धात्वर्थाः संहत्यैव तां विशिषन्ति क्रयमिवारुणिमादयः। तस्मान्न भावनाभेदमावहेदिति प्राप्ते—

अभिधीयते—प्रत्ययांशः समानोऽपि प्रतिधातु प्रयोगतः।
तत्तदर्थानुरागेण भावनाभेदमावहेत् ॥ २० ॥

निष्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि ।
ततः सर्वविशिष्टा स्याद् द्वन्द्वोत्पन्नसुबर्थवत् ॥ २१ ॥
यदि वा प्रत्ययः शुद्धः सर्वधातुपृथक्कृतः ।
श्रूयेत क्रयवत्सर्वैर्विशेष्यत स धातुभिः ॥ २२ ॥

न हि समुदितेभ्यो धातुभ्यः प्रत्ययः श्रूयते अग्नीषोमादिभ्य इव सुप्प्रत्ययः। नापि पृथक् क्रीणातिरिवारुणादिभ्यो विविक्तः । येन सर्वैर्धात्वर्थैः प्रातिपदिकार्थैरिव सुबर्थः पदेन, क्रय इवारुणिमादिभिर्वाक्येन युगपद्भावना विशिष्येत, प्रत्येकन्तु धातुभ्यः प्रत्ययः श्रूयत इति, नैकभावनासंबन्धः । तथा हि प्रत्ययो हि यजतिपरः श्रूयमाणः केवलयागकरणिकां भावनां श्रुत्या विधत्ते, दानहोमौ तस्याम् निविशमानौ पदान्तरगतत्वात् वाक्येन प्रकरणेन वा निविशेयातां, ते च श्रुतितो दुर्बले । करणांशोपनिपाताच्चास्ति विरोधः, समुच्चये नैरपेक्ष्यबाधः, तेन दानहोमयोस्तदनुवादेन विधानासंभवात् ,तदनुरक्ते भावने एव तद्गतेन प्रत्ययेन विधातव्ये, विहितायाश्च विध्यसंभवात् भावनान्तरत्वम् , उच्चार्यमाणश्च प्रत्ययः प्रकृत्यर्थभेदभिन्नामेव स्वाभिधेयां भावनामवगमयति । तस्मात्सिद्धो धात्वर्थभेदेन भावनाभेदः ।

इति प्रथमं शब्दान्तराधिकरणम् ।

अभ्यासाधिकरणम् ॥ २ ॥

## एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्याद् ॥ २ ॥

अभ्यासादिदानीं भेदोऽभिधीयते । विधेरविशेषेण पुनःश्रवणमभ्यासः । यथा 'समिधो यजती 'तै. सं. १-१-२, श. ब्रा. १-५-५-१ त्यादिपञ्चकृत्वो यजतिपदमभ्यस्तम् । तत्किमेकां भावनां प्रतिपादयति, उत प्रत्यभ्यासं भावनाभेद ? इति। तदर्थं च किमेक एव यागः? उत पञ्च यागाः? इति । यागैकत्वे भावनैकत्वम् , तद्भेदे च पूर्वाधिकरणन्यायात् करणीभूतधात्वर्थभेदात् भावनाभेद इति,

तत्र—प्रत्यक्षप्रत्यभिज्ञानाच्छब्दैकत्वं प्रतिष्ठितम् ।
तदेकत्वात्तदर्थोऽपि न भेदं प्रतिपद्यते ॥ २३ ॥

प्रत्ययांशस्य सर्वत्र समानत्वात् . तदर्थस्यापि भावनाया एकत्वं प्राप्तमपि करणीभूतधात्वर्थभेदादपोदितम् । इह तु तस्यैव धातोः पुनः पुनः श्रवणात्, असति च शब्दभेदे अर्थभेदस्य निष्प्रमाणत्वात् । स एव यागः, सैव भावना ।

ननु समिदादिसंज्ञाभेदा 'दथैष ज्योतिः, अथैष विश्वज्ज्योरि' तं.ब्रा१६-२-१ति-वद्यागभेदः स्यात्। न शब्दैकत्वेनार्थैकत्वस्य दृढतरप्रत्यभिज्ञानात् स्पष्टे च यागैकत्वे, तस्य समित्संज्ञावरुद्धस्य संज्ञान्तरमन्याय्यमिति, तनूनपादादिशब्दाः समिद्यागे देवता विधास्यन्ति, न संज्ञाः, येन संज्ञातो भेदः स्यात्। यदि हि 'तननूनपातं यजती'त्यादयो यागविधयो भवेयुः, ततो विहितस्य विधानायोगाद्विधि-पुनःश्रुत्या यागभेदो भवेत्, सति च यागभेदे, संज्ञान्तरं युक्तमेवेति, स्यात्तनून-पादादिशब्दानां संज्ञात्वम्, तेनाभ्यासनिमित्तभेदाधीनमेषां संज्ञात्वमिति, न संज्ञावशाद्भेदसिद्धिः, यत्र तु प्राग्यागभेदावगमात् संज्ञात्वं प्रसिद्धम्, तत्र संज्ञया भेदः स्याद्यथाऽथैष ज्योतिरिति, उद्भिदा यजेते'ति। तेन तूपपदान्यपोद्धृत्य यजतीत्येतावन्मात्रं पञ्चकृत्वोऽभ्यस्तं भेदं बोधयति, न वेत्येतदेव चिन्त्यम्। तत्र चाभेदावगमात् गुणविधिरेव तनूनपादादिशब्दैः।

न च गुणाद्भेदः, सर्वेषां तनूनपादादिशब्दानामुत्पन्नवाक्यशिष्टत्वेन दध्यादिवदभेदकत्वात्। 'समिधो यजतीति' चोत्पत्तौ समिच्छब्दस्य नामधेय-त्वेन गुणत्वाभावात्। न चागृह्यमाणविशेषत्वम्। प्रथमोच्चारितत्वेन समिद्वाक्ये यागविधिः, इतरेषु तत्प्रत्यभिज्ञानात्। तदनुवादेन गुणविधिः, चरमश्रुतत्वात्। एवम् गुणविधानार्थत्वादेव पुनः श्रुतेर्नानर्थक्यम्, सत्यपि चानर्थक्ये न दोषः। न हि प्रयोजनवशेन प्रमाणं नेतुं शक्यम्। तस्मादेको यागः। तदेकत्वाच्च भावनाऽ-पूर्वयोरप्येकत्वमिति प्राप्ते—

ब्रूमः—विधेस्तावत्स्वभावोऽयमप्रवृत्तप्रवर्तनम्।
धात्वर्थभावयोरेव तच्च श्रुत्याऽवगम्यते ॥ २४ ॥

यत्तावदुक्तं भवत्वानर्थक्यमिति, तदयुक्तम्, विधिश्रुतिविरोधात्। तया हि स्वतोऽप्रवृत्तप्रवर्तनं गम्यते। तच्च बलवता कारणान्तरेणाऽन्यथात्वं प्रतिपद्यते। न चात्र तदस्ति, तद्यद्येकमेव कर्म स्यात्, तस्य पूर्वविहितत्वादप्रवृत्तप्रवर्तनात्मा विधिरुपरुध्येत। तेन विधिशात्कर्मान्तरत्वम्। यत्तु दृढप्रत्यभिज्ञानात्कर्मैकत्वमिति। तन्न। सन्निधिकृता हि प्रत्यभिज्ञा, विधिश्रुत्या तु भेदज्ञानम्, संनिधेश्च श्रुतिर्बलीयसी।

ननु यजिश्रुतिकृतैवेयं प्रत्यभिज्ञा। न। यागोऽयमिति श्रुत्याऽवगम्यते। न पुनः स इति, अन्यं इति वा। साधारण्येनैव तदभिधायिन्यां श्रुतौ सन्निधिकृताम-भेदप्रत्यभिज्ञामनभिजानन्तः श्रुतिकृतां मन्यते। तस्माद्विधिश्रुत्या कर्मभेदः। यदप्युक्तम्, सन्निधिकृतप्रत्यभिज्ञाबाधाय गुणविधानार्था पुनः श्रुतिर्भवत्विति,

तप्दययुक्तम्। श्रुतिविरोधादेव, पदलक्षणया हि श्रुत्या धात्वर्थभावनयोरे विधेयत्वं गम्यते, न तत् सन्निधिमात्रेणैव बाधितुं शक्यते। यदि हि तनूनपादा दध्यादिवदविधीयमानमनर्थकं स्यात्, ततस्तस्यावश्यं विधीयमानत्वादनेकार्थ विध्यशक्त्या कर्मानुवादाकाङ्क्षायां सन्निधिकृतमभेदज्ञानं विधिरनुमन्येत, यद तु मन्त्रवर्णप्राप्तत्वात्तनूनपादादिदेवतानां तत्प्रख्यन्यायेन नामधेयत्वेन, अनुवाद त्वेन वा संभवान्नानार्थक्यम्, तदा श्रुत्यवगतं कर्मविधानं न बाधितव्यम्। तस्माद्यागभेदाद्भावनाभेदः, तद्भेदाच्चापूर्वभेदः।

इति द्वितीयमभ्यासाधिकरम्

---

विद्वदधिकरणम् ॥ ३ ॥

**प्रकरणन्तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥ विशेषदर्शनाच्च सर्वेषां समेषु ह्यप्रवृत्तिः स्यात् ॥ ४ ॥ गुणस्तु श्रुतिसंयोगात् ॥ ५ ॥ चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात् तस्य तस्योपदिश्येत ॥ ६ ॥ व्यपदेशश्च तद्वत् ॥ ७ ॥ लिंगदर्शनाच्च ॥ ८ ॥**

इदानीमभ्यासस्यापवादः क्रियते। 'यदाऽऽग्नेयोऽष्टाकपालोऽमावास्यायाम् पौर्णमास्यां चाच्युतो भवति, तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्याम् यजन्, ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत्, ऐन्द्रं दध्यमावास्यायाम्, मैन्द्रं पयोऽमावास्यायामि'ति कालसंयुक्तानि वचनानि श्रूयन्ते। तथा 'समिधो यजति, तनूनपातं यजति, आज्यभागौ यजति' इत्यकालसंयुक्तानि तेषां सन्निधौ 'य एवं विद्वान् पौर्णमासीं यजते' य एवं विद्वानमावास्वां यजते सं० सं–१–६–९–१ इति वाक्यद्वयं श्रूयते। तथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति फलं श्रुतम्। तत्र विचार्यते-किमनेन फलवचनगतेन यजिना सन्निहिताः सर्वे यागा राजसूयवत् फलं प्रति विधीयमानाः समप्रधानाः? किं वा य एव कालसंयुक्ता यागाः, तेषामेव फलसंबन्धेन प्राधान्यम्, अन्येषां तदङ्गता–इति, तत्सिद्ध्यर्थमिदं विचारयितव्यम्। 'य एवं विद्वानि'ति संयुक्तौ यजती प्रकृतानामाग्नेयादीनां पौर्णमास्यमावास्याकालसंयुक्तानां तन्निमित्तप्रसिद्धनामधेयत्वाभ्यां पौर्णमास्यमावास्यापदाभ्यां विशेष्यमाणावनुवदितारौ? उतापूर्वयोः कर्मणोरेवंसंज्ञ-

योर्विधातारावििति ? तत्सिद्ध्यर्थमप्येतच्चिन्तनीयम्, किमपूर्वकर्मविधौ रूपं लभ्यते, न वेति। ततोऽप्येतद्विचार्यते किं 'वार्तघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायामि' तै० सं० २.५.२.५. त्येताभ्यां, यदाऽऽग्नेयोऽष्टाकपाल इत्यादिभिभिर्वाक्यैर्वा कर्मणोरनयोरूपं विधातुं शक्यते न वेति। ततोऽपि पुनर्विचारणीयम् किं प्राप्तकर्मानुवादेनानेकगुणविधानमेकेन विधिना संभवति, उत नेति। अत्र चाभ्यासापवादार्थत्वादधिकरणस्य 'य एवं विद्वानि' त्येवं संयुक्तमेव वाक्यद्वयमधिकरणस्य विषयः, तच्च कर्मान्तरविधायकम्, समुदायानुवादकं वेत्येतावदेवाधिकरणशरीरम्। एतस्य तु फलं समप्रधानाङ्गाङ्गिभावविचारः। फलविचारविषयत्वेन चाग्नेयादिवाक्यानामुपन्यासः, नाधिकरणशरीरविषयत्वेन।

तत्र पूर्वाधिकरणन्यायेन विधेः पुनःश्रुत्या कर्मान्तरत्वं पौर्णमास्यमावास्यासंयुक्तयोः। किं पुनरनयोर्द्रव्यदेवतम्? उच्यते। द्रव्यं तावच्चतुर्धु वायां गृह्णातीत्यसंयुक्तोत्पन्नं ध्रौवमाज्यं प्रयोजनापेक्षम् द्रव्यापेक्षिणां प्रकरणगतानां सर्वकर्मणामविशेषेण लिङ्गप्रकरणाभ्यामङ्गं भवदुपांशुयाजादीनामिवानयोरपि कर्मणोर्लभ्यते।

वचनाद्वा. 'सर्वस्मै वा एतद्यज्ञाय गृह्यते, यद् ध्रुवायामाज्यमि'ति। देवताऽपि 'वार्त्तघ्नी पौर्णमास्यामनूच्येते' वृधन्वती अमावास्यमि तै० सं०२.५.२.५ति वाक्याभ्यां पौर्णमास्यामावास्यासंज्ञयोर्मन्त्रविधानान्मान्त्रवर्णिकीति रूपलाभात्कर्मान्तरत्वम्। अन्यथा समस्तानुवादस्यानर्थक्यम्। न च केवलं 'य एवं विद्वानि' त्येतयोरेवानर्थक्यम्, 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत इत्यपि वाक्यद्वयमनर्थकं स्यात्। न ह्यनेनाग्नेयादीनां कालो विधीयते, तेषामुत्पत्तिवाक्यैरेव कालस्य विहितत्वात्।

यदा तु 'य एवं विद्वानि' त्येताभ्यां पौर्णमास्यमावास्यासंज्ञके कर्मान्तरे विधीयेते, तदा तयोः कालविधाना'त्पौर्णमास्यां पौर्णमास्या यजेते'त्यपि वाक्यद्वयमर्थवद्भवति। तस्मात्कर्मान्तरविधानम्।

यदा त्वेवम्, तदा सर्वे यागाः फलसंबन्धात्समप्रधानभूताः। न हि तदा फलवाक्यगतं दर्शपूर्णमासपदमलमाख्यातमवच्छेत्तुम्, अप्रसिद्धार्थत्वात्। कालनिमित्तं ह्येतद्। द्विवचनान्तं च तन। येषामुत्पत्तौ द्वित्वमाज्यभागादीनाम्, न तेषु प्रातिपदिकं समर्थम्,कालयोगाभावात्।येषां त्वाग्नेयादीनां कालयोगस्तेषां बहुत्वात् द्विवचनानुपपत्तेरसमर्थं पदम्। न च समुदायद्वयापेक्षया द्वित्वसंभवः, समुदायो हि पूर्वसिद्ध एव वा गृह्येत, अत्रैव राजसूयवद्वा संपाद्येत, न तावत्पूर्वसिद्धमस्ति, समुदायद्वयमेकावगत्यनुप्रवेशेन हि कर्मणामेकसमुदायात्तिः, एकाभिधानेन

चैकावगतिः। न चाग्नेयादीनां त्रिकस्य त्रिकस्यैकमभिधानं प्राक् सिद्धम्। 'य एवं विद्वानि' त्येतयोस्तदनुवादकत्वानङ्गीकरणात् उत्पत्तिवाक्येषु चैकैककर्मविधानेन समुदायाभावात्। तत्र तु फलवाक्यगतेन यजिना तन्त्रेण सर्वेषामुपादानात्समुदायापत्तिः स्यात्। तेन च कर्मसमुदायनिष्पत्तौ राजसूयवत् द्विवचनानुपपत्तिः।

न च दर्शशब्देन पौर्णमासशब्देन च त्रिकस्य त्रिकस्य पृथक् तन्त्रोपादानात्समुदायद्वयसिद्धिरिति वाच्यम्, तयोराख्यातपरतन्त्रत्वात्। तद्यत्र आख्यातं वर्त्तते, तत्राभ्यामपि वर्तितव्यम्। न चाख्यातं तन्त्रेण त्रीन् यागान् प्रथममुपादाय, पुनरन्यानुपादातुमर्हति, सकृदुच्चरितत्वात्।

न च समुदायद्वयं तन्त्रेण शक्यमुपादातुम्, समुदायद्वयस्य प्रागसिद्धत्वात्। तदिदमाख्यातं बहून् यागान् सन्निहितान् फलमेकं प्रति तन्त्रेणोपादत्ते, तेषां च तदुपादानादेवैकः समुदायो निष्पद्यते। ततश्च नामधेयमपि समुदाय्यभिप्रायम् बहुवचनम्, समुदायाभिप्रायञ्चैकवचनं लभ्येत, न कथंञ्चिद् द्विवचनम्, द्विवचनान्तञ्चेदम्। अतोऽप्रसिद्धर्थत्वात्, नानेनाख्यातं विशेषे स्थापयितुं शक्यमिति, अविशेषात्सर्वेषां फलसंबन्धात्प्राधान्यम्, नामधेयमपि तत्परतन्त्रत्वात्सर्वेषामेवाव्युत्पन्नं द्विवचनप्रतिरूपकमिति प्राप्ते —

अभिधीयते—कर्मान्तरविधायित्वे स्यात्सर्वेषां प्रधानता।
समुदायानुवादौ तु रूपाभावादिमौ मतौ॥ २५॥
द्रव्यं कथंचिल्लभ्येत देवता तु न लभ्यते।
लभ्यते मन्त्रवर्णाच्चेन्नाज्यभागाङ्गता यतः॥ २६॥
लिङ्गक्रमाभ्यां मन्त्राणामाज्यभागाङ्गता स्थिता।
वचनन्तु व्यवस्थार्थमन्यार्थत्वादबाधतः॥ २७॥

वार्त्रघ्नीवृधन्वतीनां हि लिङ्गक्रमाभ्यामाज्यभागाङ्गत्वेनाव्यवस्थया प्राप्तानां तादर्थ्याबाधेन व्यवस्थामात्रं वार्त्रघ्नी पौर्णमास्याम्, वृधन्वती अमावास्यायामि' त्येताभ्यां विधीयते लाघवादिति, नैतेषां मन्त्राणां 'य एवं विद्वानिति विहितकर्मान्तरसंबन्धः, येन मान्त्रवर्णिकी देवता स्यात्। न च कल्पयितुं देवता शक्यते, विधिगम्यत्वाद्देवतात्वस्य। न चासत्यां देवतायां यागानुष्ठानं संभवतीति, गत्यभावात्समुदायानुवादत्वम्।

तत्र पौर्णमासीसंयुक्तेन वाक्येनोपपदवशात्पौर्णमासीकालयुक्तानां त्रयाणाम् तन्त्रेणानुवादः, तेनैवैकानुवादेन त्रयाणामपि तेषामेकसमुदायापत्तिः, तदेकत्वाच्च

पौर्णमासीमित्येकवचनम्, एवममावास्यासंयुक्तेऽपि। ततश्च समुदायद्वय-सिद्धिः, कालयोगाच्चाग्नेयादीनां प्रसिद्धार्थं दर्शपूर्णमासाभ्यामिति द्विवचनान्तम्, कालयोगि चोपपदं शक्नोत्याख्यातं विशेषे स्थापयितुमिति, तेषामेव प्राधान्यमिति। इयमेव च द्विवचनापेक्षितसमुदायद्वयसिद्धिः समुदायानुवादप्रयोजनमिति, नानर्थक्यम्।

यत्तूक्तं 'पौर्णमास्यां पौर्णमास्ये'त्येतदपि वाक्यद्वयमनर्थकं स्यादिति, नानर्थकम्, आग्नेयादीनामेव त्रिकस्य त्रिकस्य सहप्रयोगार्थत्वात्, उत्पत्ति-वाक्येषु हि तेषां प्रत्येकं कालसंयोगान्नैकप्रयोगता सिद्ध्येत्। अनेन तु वचनेन यथैकप्रयोगसिद्धिः, तथैकादशे ११-२ १ वक्ष्यामः। तस्मादरूपत्वात्प्रयोजनवत्त्वाच्च समुदायानुवादत्वम्।

### आग्नेयादिवाक्यानां गुणविधायकत्वमिति द्वितीयपूर्वपक्षः

इदानीं पूर्वपक्षवादी प्रकारान्तरेण प्रत्यवतिष्ठते—

भवेदेवमरूपत्वे समुदायानुवादता।
यदाग्नेयादिवाक्यैस्तु तयोरूपं विधीयते॥ २८॥

'य एवं विद्वानि'त्येताभ्यां पौर्णमास्यमावास्यसंज्ञकौ यागौ विधीयेते, 'यदाऽऽग्नेयोऽष्टाकपालः' इत्यादिभिस्तु पौर्णमास्यमावास्यासंज्ञाभ्यां तावेव यागावूनद्याष्टाकपालादिद्रव्यमग्न्यादयश्च देवता विधीयन्त इति नारूपत्वम्। एवं सर्ववाक्यानि विधायकानि भवन्ति, न कश्चित्समुदायानुवादः। यागश्च प्रत्यक्षश्रुतो न द्रव्यदेवतासंयोगादनुमातव्यो भवतीति श्रेयानयं पक्षः।

अत्रोच्यते गुणेऽनेकः प्राप्तकर्मानुवादतः।
नैकेन विधिना शक्यो विधातुमसकृच्छ्रुतेः॥ २९॥

भावनास्थोऽपि विधिस्तादर्थ्यभेदेन तत्र तत्र संक्रामति, यत्परश्च विधिः स एव विधेयः, नान्यस्तद्देशोऽपि। तद्यदाऽपूर्वकर्मपरो विधिर्भवति, तदाऽस्यै-कस्यानेकगुणविशिष्टस्य विधानाद्विशेषणानां चार्थापत्त्या विधिसिद्धेर्नासकृच्छ्र-वणदोषः प्रसज्यते। यदा त्वन्यतः प्राप्तं कर्म भवति, तदा तस्याविधेयत्वाद्वि-शेषणपरो भवति। तत्रानेकेषु विशेषणेष्वेकेन विहितेनेतरानाक्षेपात्, तत्रापि श्रुत्यैव विधानं कर्तव्यमित्यावृत्तिप्रसङ्गः. विशेषणान्यपि यानि प्रागेव क्रियान्वयान्मिथः संबन्धितया शब्देन प्रतिपादितानि विनैव विधिना प्रसिद्धसंबन्धानि भवन्ति। यथा पशुनेत्येकपदोपात्तानि जाति-लिङ्ग-सङ्ख्या-कारकाणि। तत्र हि प्रत्ययाभिधेय-

मेकं प्रधानभूतं करणकारकमुपसर्जनीभूतजात्यादिविशिष्टं पदेन प्रतिपादितम्। प्रसिद्धा च कारकशक्तिर्जात्यादीनां प्रमाणान्तरेण विनैव विधिनेति, शक्यम्। प्राप्तकर्मानुवादेनापि तदेकं विधातुम् ।

भिन्नपदोपात्तान्यपि यानि सामानाधिकरण्येन, षष्ठ्या वा क्रियान्वयात्प्रागेव मिथः संबन्धं शब्दतो वस्तुतश्च विधिमनादृत्यैव लभन्ते । यथा-ऽभ्युदितेष्टौ'ये क्षोदिष्ठाः, तान्विष्णवे शिपिविष्टाय 'शृते चरुम्। तत्र हि शिपिविष्टशब्दो यौगिकः शक्नोति सन्निहितेन विष्णुशब्देन श्रुत्यैव सामानाधिकरण्यं प्रतिपत्तुम्, प्रसिद्धश्च विष्णुर्शिपिविष्टो मन्त्रार्थवादादिभिरिति, तत्र केवलं शृतसहितक्षोदिष्ठसंबन्धो विधिना बोधयितव्यः-यो विष्णुः शिपिविष्टः, स शृतस्य क्षोदिष्ठानां च देवतेति । तेनैकार्थविधानाद्विधिप्रत्ययस्य नासकृदुच्चारणापत्तिः ।

अत्र त्वाग्नेयोऽष्टाकपालः पौर्णमास्यामिति यद्यपि तद्धितस्य सन्निहितद्रव्यवचनत्वात्सामानाधिकरण्यलक्षणः शाब्दः संबन्धः प्रागेव पौर्णमासीसंबन्धादाग्नेयाऽष्टाकपालयोर्लभ्यते । तथाऽप्यसौ संबन्धः प्रमाणान्तरेणा-सिद्धत्वादत्रैव विधातव्यः । तञ्च विधाय पुनः पौर्णमासीसंबन्धविधिरित्यावृत्तिप्रसङ्गः । न त्वेवं संभवति-य आग्नेयोऽष्टाकपालः, स पौर्णमास्यामिति असिद्धत्वाग्दानेयस्याष्टाकपालस्य । अत एवं वक्तव्यम्-अष्टाकपाल आग्नेयः कर्तव्यः । स च पौर्णमास्यामित्यावृत्तिः प्रत्ययस्य स्यात्, तस्माद्य एवं विद्वानिति विहितकर्मानुवादेनात्र गुणविध्यसंभवादवश्यमेव भावनान्तरं द्रव्यदेवताविशिष्टमाक्षिप्तयजिकं विधातव्यम्। न च भावनान्तरं भावनान्तरस्य रूपं भवतीति, सिद्धमरूपत्वम्। अतः समुदानुवादो

इति तृतीयं विद्वदधिकरणम् ।

---

## उपांशुयाजाधिकरणम् ॥ ४ ॥

### पौर्णमासीवदुपांशुयाजः स्यात् ॥९॥ चादनात्वाऽप्रकृतत्वात् ॥१०॥ गुणोपबन्धात् ॥ ११ ॥ प्रायेवचनाच्च ॥ १२ ॥

अतः परं समुदायानुवादापवादकतयाऽधिकरणत्रयमारभ्यते । दर्शपूर्णमासयोः श्रूयते 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजति, विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्यः 'ऽजामित्वायाअग्नीषोमावुपांशु यष्टव्यावजामित्वाये'तै सं २–५ ति। तथाऽग्नेया-

ग्नीषोमीयपुरोडाशयाज्यानुवाक्यायुगलयोर्मध्ये वैष्णवप्राजापत्याग्नीषोमीयाणि याज्यानुवाक्यायुगलान्याम्नातानि शाखाभेदेन। तत्र संशयः—किं 'मुपांशुयाजमन्तरा यजती'ति समुदायानुवादो विष्ण्वादिगुणकानां यागानाम्, उत विधिरिति? तदर्थं किमस्य रूपमस्ति? न वेति, तदर्थं च 'विष्णुरुपांशु यष्टव्यः' इत्यादिभिर्विष्ण्वादिदेवत्या यागा विधीयन्ते? किम्वाऽयमर्थवादः—इति। यदि विधयः, तत एषामेव यागानां विष्ण्वादिदेवत्याः याज्यानुवाक्याः लिङ्गक्रमाभ्यामङ्गं भवन्ति, नोपांशुयाजमन्तरा यजतीत्यस्य, सामर्थ्यापरिज्ञानात्। ततश्च मान्त्रवर्णिकदेवताऽलाभाद्रूपः सन्नगत्या विष्ण्वादियागानां समुदायमनुवदति। यदा तु विष्ण्वादिश्रवणमर्थवादः, तदा याज्यानुवाक्या यागान्तराभावा'दुपांशुयाजमन्तरा यजती'त्यस्यैव क्रमादङ्गं भवन्ति, दशमाधिकरणन्यायेनेति, मान्त्रवर्णिकी देवता लभ्यते। ध्रौवञ्च द्रव्यमिति रूपलाभाद्विधिरेव भवतीं।

तत्र विष्ण्वादिवाक्येषु तव्यप्रत्ययदर्शनात्।
ऐकान्तिको विधिर्नात्र वर्तमानापदेशतः॥ ३०॥

वैश्वानरवाक्ये हि 'यदष्टाकपालो भवती'त्यादिषु विधि-पुरुषव्यापारयोरश्रवणाद्यच्छब्दोपबन्धाद्वर्तमानापदेशेनार्थवादसरूपत्वात् 'द्वादशकपालं निर्वपेदे'ति विधियुक्तभावनाश्रवणात्तदुपक्रमोपसंहारमध्यवर्तिनामष्टत्वादीनां तदेकवाक्यत्वम् न बाधितव्यमिति, गुणफलविधानं निरस्तम्। इह तु सत्यपि जामित्वाजामित्वोपक्रमोपसंहारमध्यवर्तित्वे विष्णुरुपांशु यष्टव्यः 'इति यच्छब्दाद्यनुपहतविधिश्रवणादजामित्वायेति च तेष्वेव प्रत्येकमुपक्रमोपन्यस्तजामित्वदोषस्य परिहारप्रशंसाऽवगमाद्वाक्यभेदमङ्गीकृत्य विधित्वमध्यवसीयते। 'जामि वा एतदि' ति चोपक्रमश्रवणमपि त्रयाणामपि तेषामनुषङ्गेण वाक्यशेषो भवति। सति च तेषां विधित्वे रूपाभावाद्वर्तमानापदेशा'च्चोपांशुयांजमन्तरा यजती'त्येवं जामित्वोपन्यासेन वक्ष्यमाणानां विष्णवादियागानां समुदायानुवाद इति प्राप्ते—

अभिधीयते—जामित्वोपक्रमादेकमजामित्वोपसंहृतेः।
वाक्यं तन्मध्यपाताच्च विष्ण्वादेरर्थवादता॥ ३१॥
वाक्यशेषानुषङ्गश्च गतौ सत्यां न युज्यते।
अनूचीननिमित्तश्च जामिदोषः प्रकीर्तितः॥ ३२॥
तेनान्तरालसंयुक्तो विधिस्तत्रैव निश्चितः।
अजामित्वञ्च तस्यैव प्रशंसेत्यवधारितम्॥ ३३॥

'जामि वा एतद्यज्ञस्य क्रियते, यदन्वञ्चौ पुरोडाशावि'ति पुरोडाशनैरन्तर्ये जामितादोषाभिधानादुपक्रम एवैतदध्यवसितं नूनमन्तराले किंचिद्विधित्सितम्। तत्रान्तरालकरणादेवाजामित्यगुणेन प्रशंसितुमिष्टमिति। किं तद्विधेयमित्येतावदनवगतमन्तरालसंयुक्तं तद्विधानमित्यवगतमेव।

न च विष्णवादियुक्तेष्वन्तरालसंयोगोऽस्ति, येन विधिः स्यात्, अन्तराले चाविहितानां नाजामित्वेन प्रशंसाऽवकल्पते। पुरोडाशनैरन्तर्याज्जामिता स्यात्, अतोऽन्यत्र क्वचिद्विष्णोवादयो यष्टव्या अजामित्वायेति किञ्चे न सङ्गतम्? तस्मा'दुपांशुपाजमन्तरा यजती'त्युपांशुगुणको यागोऽन्तरालोपलक्षिते काले विधीयते, तदर्थवादोऽयं 'विष्णुरुपांशु यष्टव्य' इत्यादिर्मन्त्रवर्णप्राप्तविष्ण्वाद्यनुवादेनेति न्याय्यम्। एवञ्चैकवाक्यत्वं न बाधितं भविष्यति, न चानुषङ्गः सत्यां गतौ कल्पितो भवति। तस्माद्विधिरयम्, न समुदायानुवादः।

इति चतुर्थमुपांशुयाजाधिकरणम्।

---

आघाराग्निहोत्राधिकरणम् ॥ ५ ॥

**आघाराग्निहोत्रमरूपत्वात् ॥ १३ ॥ संज्ञोपबन्धात् ॥ १४ ॥ अप्रकृतत्वाच्च ॥ १५ ॥ चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्तत्सन्निधेर्गुणार्थेन पुनः श्रुतिः ॥ १६ ॥**

'अग्निहोत्रं जुहोति, आघारमाघारयती'ति निर्गुणं कर्म संज्ञायुक्तं श्रुतम्। तत्सन्निधौ'दध्ना जुहोति ऊर्ध्वमाधारयती'त्यादीनिस गुणानि श्रवणानि। तत्र संशयः किं'दध्ना जुहोती'त्यादिभिर्गुणविशिष्टा होमाघारा विधीयन्ते। तेषां च रूपवतामरूपोऽय'मग्निहोत्रं जुहोतीति, अघारमाघारयती'ति समुदायानुवादः? उतायमेव कर्मविधिः, इतरे तत्रैव गुणविधय इति। तदर्थमिदं विचार्यते-किमविज्ञातरूपं कर्म विधातुमेवाशक्यम्, उताविज्ञातरूपमपि तावद्विधाय पश्चाद्रूपज्ञानं संभवतीति। तथेदमपरं चिन्तनीयम्—प्राप्ते कर्मणि गुणमात्रविधानं संभवति? उत नेति।

तत्र रूपापरिज्ञाने विशेषानवधारणात्।
सामान्यस्याविधेयत्वान्नानयोर्विधिसंभवः ॥ ३४ ॥
न च दध्यादिभिर्वाक्यैः प्राप्तकर्मानुवादतः।
गुणमात्रं विधातव्यमव्यापारात्मकं यतः ॥ ३५ ॥

'अग्निहोत्रं जुहोती'ति होमसामान्यमवगम्यते। न च तद्विधानयोग्यम्, विशेषस्तु योग्यः, स चानुरञ्जकाधीननिरूपणो न जुहोतीत्येतावता गम्यते। न चेह द्रव्यदेवतादिकमनुरञ्जकमुपात्तम्, यद्वशेन विशेषावधारणं स्यात्, अनिरूपितश्च विशेषो न विधिनाऽन्वेतुं योग्यः, तेनावगतस्य सामान्यस्य अयोग्यत्वात्, योग्यस्य च विशेषस्यानवगतत्वान्नात्र विधिः संभवति। तथाऽग्निहोत्रमिति संज्ञा च विशेषविषयत्वादनवगते विशेषे दुर्घटैव। यदा चैवं विधिरेवानिष्पन्नः, तदा न दध्यादिवाक्यैरपि गुणविधानं शक्यम्, विहिते कर्मणि तदनुवादेन तैर्गुणो विधातव्यः, न चात्र विहितं कर्मेत्युक्तम्।

अपि च यद्यप्यत्र कर्म विधीयते, तथाऽपि न शक्यते गुणो विधातुम्, अव्यापारात्मकत्वात्। चेतनप्रवर्तनात्मको हि विधिः, नचासौ स्वव्यापारादन्यत्र प्रवर्तयितुं शक्यते। तेन दध्यादिवाक्यैरपि स्वस्वव्यापार एव विधातव्यः। तद्विशेषणतया च दध्यादीनां विधिरङ्गीकर्तव्यः, न चाग्निहोत्रवाक्यविहितः होमः पुनरत्र दधिविशिष्टो विधातुं शक्यते, विहितस्य विधानायोगात्। तेन दधिमात्रमवशिष्यते, तच्चाविधेयमित्युक्तम्। अतोऽत्र दध्यादिविशिष्टा होमाः विधीयन्ते। तथा चा'ग्निहोत्रमि'त्यस्यान्यतोऽपि रूपालाभात्समुदायानुवादकत्वमेव। एवमाघारवाक्येऽपीति प्राप्ते—

ब्रूमः—प्रकृतानामसद्भावात्कर्मणां नानुवादता।
न हि दध्यादिवाक्येषु दध्याद्याक्षिप्तशक्तिना॥ ३६॥
विधिना शक्यते कर्म विधातुमितरत्र तु।
अनन्याक्षिप्तशक्तित्वाद्विधिः कर्मैकगोचरः॥ ३७॥

'दध्ना जुहोती'ति ह्यप्राप्तदध्याद्याक्षिप्तशक्तिर्विधायकोऽनेकविधिनिमित्तगौरवपरिजिहीर्षया कर्मानुवादं प्रार्थयमानो यदि न कथंचिदपि प्राप्तिं लभते, ततो विशिष्टविधिमङ्गीकरोति। सत्यान्त्वग्निहोत्रादिवाक्येन कर्मणः प्राप्तौ, तदनुवादेन गुणमात्रविधानम्, लाघवात्। नतु विशिष्टविधानम्। अतश्चाविहितत्वात्, होमानामप्राप्तत्वादग्निहोत्रवाक्येऽनन्याक्षिप्तशक्तित्वात् विधायकः कर्म विधत्ते। यद्यपि तत्र रूपं न ज्ञायते, तथाऽपि विधिवशादेव सामान्यमतिक्रम्य तल्लक्षितोऽन्यत्राविहितो होमविशेषोऽयमित्येतावदवगम्यमानत्वान्न विधानासम्भवः, लक्षितविशेषविषयत्वेन संज्ञोपबन्धोऽप्युपपन्नः। तस्य दध्यादिवाक्यैः रूपविधानान्नारूपत्वम्, स्वरूपेणाऽविधेयमपि दध्यादिव्यापारविशिष्टं शक्यम् विधातुम्—'दध्ना जुहुयादि'ति। यद्यपि न क्रियां विहाय द्रव्यविधिः प्रतीयते,

तथाऽपि तस्यामेव विशिष्टायां प्रतीयमानो विधिः स्वरूपेण तस्याः प्राप्तत्वात् अप्राप्तगुणमात्रपरतामवलम्बमानः फलतो गुणविधिरित्युच्यते, न प्रतीतितः। तेनात्र गुणमात्रविधानात् 'अग्निहोत्रं जुहोती'ति प्रकृतकर्माभावाद्रूपलाभाच्च विधिरेव, न समुदायानुवादः।

इति पञ्चममाघवाराग्निहोत्राधिकरणम्।

---

पशुसोमाधिकरणम् ॥ ६ ॥

**द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगः न हि तस्य गुणार्थेन। १७। अचोदकाश्च संस्काराः। १८। तद्भेदात्कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो द्रव्यगुणीभावात्। १९। संस्कारस्तु न भिद्येत न परार्थत्वाद्, द्रव्यस्य गुणभूतत्वात् ॥ २० ॥**

'अग्नीषोमीयं पशुमालभेते' तै-सं-६-१-११-६ ति श्रूयते। तथा 'हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः' तै-सं-६-३-१०४ इत्यादीनि। तथा 'सोमेन यजेते'ति श्रुतम्। तत्रा "ऽप्यैन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाती"त्येवमादीनि। तत्र संशयः किमवद्यतिगृह्णातिभ्यां चोदितानां कर्मणामलभतियजती समुदायस्य अनुवदितारौ? उतापूर्वयोः कर्मणोर्विधातारा विति?, तदर्थञ्च किमैन्द्रवायवादिवाक्यैर्यागा विधीयन्ते? किम्वा संस्कारमात्रमिति।

तत्र— ऐन्द्रवायवमित्यादिद्रव्यदैवतसङ्गतेः।
याग एव विधातव्यो गृह्णातौ न हि देवता॥ ३८ ॥

'ऐन्द्रवायवमि'त्यादिस्तावद्देवतातद्धितोऽयम्। न च देवता यागादन्येन संपादयितुं शक्यते, येन ग्रहणेनैन्द्रवायवं कुर्यादिति वाक्यार्थः स्यात्। न चैन्द्रवायवं सन्तं गृह्णातीति संभवति, असिद्धत्वादैन्द्रवायवस्य, तेनावश्यं यागा एव विधातव्याः।

ननु नावश्यं देवतातद्धित एवायम्, तस्येदमिति संवन्धमात्रेऽपि तस्य स्मरणात्। तेनेन्द्रवायूद्देशविशिष्टग्रहणमात्रविधिः संभवत्येव, भवेदेवमैन्द्रावायवादिषु परिहारः, मरुत्वतीयादिषु देवतायामेव छविधानादवश्यं देवतासंबन्धोऽङ्गी-

कर्तव्यः। तथा चैन्द्रवायवादिष्वपि तथाऽस्तु, किमनिरूपितसंबन्धमात्राश्रयणेन। तस्माद्यागविधानम्।

एवं च 'सोमेन यजेते'ति देवताभावादरूपः सन्समुदायानुवाद एव भवति यजिः, सोमशब्देन तत्रैव गृह्णातिना सामान्याक्षिप्तं द्रव्यं नियस्यते।

यद्वा 'अण्व्या धारया गृह्णाती' आ. श्रौ. 'ति गुणवाक्येन धारासमर्थद्रवद्रव्यमात्रावगमात्, तत्प्रकृतित्वेन सोमविधानं व्रीहिभिर्यजेतेतिवत्। ननु विकृतावपात्तायाम् प्रकृतिविधानं युक्तम्। न चैन्द्रवायवादिवाक्येपु पुरोडाशवत् विकृतिरुपात्ता, यस्याः प्रकृतिर्विधायेत। यदि तु 'सोममभिषुणोति, सोमं पावयती' त्यादिभिः सोमरसस्य प्रकृतत्वात्तद्विषयत्वाच्च गृह्णातेः, प्राप्त एव विकृतिभूतो रस इत्युच्यते, ततस्तस्य निर्ज्ञातसोमप्रकृतित्वान्न भूयः सोमविधानं संभवति। न च 'अण्व्याधारये'त्य तोऽपि विकृतिप्राप्तिः, उदकस्यापि द्रवद्रव्यस्य संभवात्। उच्यते यदि विकारानुवादेन प्रकृतिर्विधातव्या स्यात्, ततोऽयं दोपः स्यात्, नच 'व्रीहिभिर्यजेत' इत्यपि पुरोडाशानुवादेन व्रीहिविधिः, पुरोडाशस्यानुपात्तत्वात्। 'व्रीहिभिर्यजेते'ति च करणविभक्तेर्द्रव्यसंबन्धाभावात्तेन यागं प्रति करणत्वेन विहिता व्रीहयः पुरोडाशावरुद्धे यागे साक्षात्करणत्वासंभवात्तत्प्रकृतित्वेनैव करणं भवन्तीति, प्रकृतिद्रव्यविधिरित्युच्यते, न च प्रकृतित्वेनैव विधानात्। एवमत्रापि यागं प्रति करणत्वेन विहितः सोमो धारासमर्थद्रवयावरुद्धे यागे तत्प्रकृतिर्भवति, सम्भवति च सोमप्रकृतिकं द्रवद्रव्यमिति, युक्तं प्रकृतिविधानम्।

अथवा 'सोममभिषुणोती'त्यादिभिः सोमरसस्य प्राप्तत्वात् सोमशब्दोऽपि अनुवाद एव तत्प्रख्यन्यायेन नामधेयं भवति।

## विस्तरेणोपपादितस्यार्थस्य संक्षेपेण कथनम्

तदेवं त्रेधा पूर्वपक्षः-सोमशब्देन द्रव्यं विधीयते ? प्रकृतिद्रव्यं वा, नामधेयं वा! इति। यजिस्तु सर्वथैव समुदायानुवादः। तथा च यागभेदादैन्द्रवायवादीनां समुच्चये सति 'दशैतानध्वर्युः प्रातः सवने ग्रहान् गृह्णाति, आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति 'इत्यादि क्रमसमुच्चयदर्शनमुपपद्यते। अन्यथा त्वेकत्वाद्यागस्य, तदर्थानां च देवतानां ग्रहाणाञ्च विकल्पे सति क्रमादिदर्शनानुपपत्तिः। यदि च 'सोमेन यजेते'ति यागविधिः स्यात्, ततः सोमशब्दस्य लतावचनत्वात्तयैवोत्पत्तिशिष्टया यागः साधनीय इति, नैन्द्रवायवादिवाक्यैः रसविषयैर्गुणविधिः संभवतीत्यानर्थक्यं तेषां स्यात्। अभिषवादिर्विधिभिश्चोत्पत्तिशिष्टा लता न रसीकर्तुं शक्यते। तस्मादैन्द्रवायवादिभिरेव यागविधिः।

एवं'मग्नीषोमीयं पशुमालभेते'त्यत्रापि यागविधौ सत्युत्पत्तिशिष्टपशुजातीयद्रव्यमेव यागसाधनमिति, हृदयाद्यवदानवचनानि तत्र गुणविधित्वेनासम्भवादनर्थकानि स्युः। अतो हृदयादिवाक्यविहितहृदयादिद्रव्यकर्मानुवादेन देवताविधानमेतदिति वक्तव्यम्। पशुशब्दोऽपि हृदयादीनां 'छागस्य वपाया मेदसः' इति मन्त्रवर्णाच्छागप्रकृतित्वात्तेषामेव विकृतौ प्रकृतिवदुपचारादनुवादः।

कथं पुनः कर्माणि हृदयादिवाक्यैर्विधीयन्ते, यान्यनूद्य देवताविधानम्। उच्यते—द्वावत्र पक्षौ एकस्तावदवदानमात्रं विधीयते, द्रव्यदेवतासंयोगाश्रवणात् प्रत्यक्षयज्यश्रवणाच्च, तदाक्षिप्तं तु स्पर्शनमालभतिनाऽनूद्यते, पशुशब्देन तु हृदयादिप्रकृतिद्रव्यवाचिना उपचाराद्धृदयादिद्रव्यम्, अग्नीषोमीयशब्देन हृदयादिप्रकृतद्रव्य प्रति तु ग्नीषोमीयत्वे विहिते, तावन्तो यागाः कल्प्यन्तं इति। अन्यस्त्वसत्यपि देवतासबन्धश्रवणे हृदयाद्यवदानानां सान्नाय्यावदानप्रकृतित्वात्तद्वदेव यागसाधनत्वं हृदयादीनामभिषवयुक्तपूतीकवल्लभ्यते, तेन यागानुवादेनैव देवतादिविधिरिति। तस्मात्समुच्चयानुवाद इति प्राप्ते—

अभिधीयते—द्रव्यान्तरेण संयोगान्नानुवादोऽवकल्पते।
तेन यागविधी एतावन्ये गुणविधायिनः॥ ३९॥

पशुशब्दो हि जातिवचनोऽतज्जातीयेषु विना कारणेन न लक्षणयावर्तितुमर्हति, श्रौतपशुविशिष्टयागविधानोपपत्तेः। न च पशुविशिष्टयागे विहिते हृदयादिवाक्यानां गुणविधित्वासंभवः, पशोरेव हृदयादिद्वारेण करणत्वोपपत्तेः, प्रणाड्याऽपि हि येन यत्क्रियते, भवति तत्करणं तस्य। यथा लोके गोमयेन पचतीति, वेदेऽपि 'तुषपक्वा भवन्ति यागेन स्वर्गमि'ति। तस्मादेको यागः पशुविशिष्टोऽग्नीषोमदेवत्यो विधीयते। हृदयादिवचनानि तत्रैव संस्कारमात्रविधानानि।

तथा 'सोमेन यजेते'ति सोमशब्दो लतावचनः। न चासौ प्रकृतेष्वैन्द्रवायवादिषु हविष्ट्वेन विधातुं शक्यते। 'धारया गृह्णाती'ति गुणवाक्यसन्निधापितस्य द्रवद्रव्यस्यैन्द्रवायवमिति तद्धितेन देवतासंबन्धित्वेन श्रुत्या विधानान्न तावद्धविर्विधानम्। नापि तत्प्रख्यन्यायेन नामधेयत्वम्, सोमरसस्य प्रागस्माद्वचनादप्राप्तेः। नन्वैन्द्रवायवमिति प्रकृताभिधायी तद्धितोऽभिषवादिवाक्यैः प्रकृतं सोमरसमभिधत्ते। नैवम्। 'अण्व्या धारये' त्यनेन व्यवधानादभिषवादिवाक्यानामप्रकृतत्वाद्धारासमर्थद्रव्यमात्रमत्र प्रकृतम्। न च धारावाक्यम् सोमरसविषयम्, धारामात्रश्रवणात्, तन्मात्रेणै च वाक्यार्थोपपत्तेः। सत्यपि

संनिधाने तद्विषयत्वं धारावाक्यस्याप्रमाणकम्। संस्कारवाक्येषु हि लौकिकस्य संस्कारानुपपत्तेरपूर्वसाधनविशेषलक्षणया कथंचित्प्रकृतग्रहणं युक्तम्। धारावाक्ये तु ग्रहणोद्देशेन धारामात्रविधानान्न प्रकृतापेक्षा।

किं चास्मिन्पक्षे ऽयमपि नियमो नास्ति, य एव क्रये सोमः, स एवाभिषवे, य एवाभिषवे, स एव पावने—इति। सर्वेषां क्रयादिवाक्यानां लौकिकसोमग्रहणेनारादुपकारकक्रयादिविधायिनां मिथोऽनपेक्षत्वात्।

न च प्रकरणाद्विशेषलाभः, प्रकरणस्याविशेषकत्वात्। नाप्यधिकाराद्विशेषसिद्धिः, तुल्येषु नाधिकारः स्यादि'९. १. १९. ति हि-द्रव्य-संख्या—हेतुसमुदायमि' ९. १. ११.त्यत्र वक्ष्यति। यदि हि तं सोममभिषुणुयादिति तच्छब्दः श्रूयेत, ततः 'सा वैश्वदेवी'तिवत्प्रकृतग्रहणं भवेत्, सोममात्रश्रवणान्न प्रकृतगामित्वम्। एवं धारावाक्येऽपि। ऐन्द्रवायवादिवाक्येषु प्रकृतगामिष्वपि धारासमर्थमेव द्रव्यं गृह्यते, न सोमरसः, तस्याप्रकृतत्वादित्युक्तम्। अतो न तत्प्रख्यन्यायेन नामधेयत्वम्।

एतेनैकदेशिनः संस्कारवाक्यैः सोमरसस्य प्राप्तिमभिदधाना निरस्ताः, तेषां सिद्धान्तेऽपि तथैव सोमप्राप्तेः सोमपदं नामधेयं स्यादित्यास्तां तावत्।

एवं न तावद्धविष्ट्वेनाविधानम्, नापि नामधेयत्वमित्युक्तम्। प्रकृतिद्रव्यविधानन्त्ववशिष्टम्, तन्निराकरणार्थं च सूत्रम् 'अचोदकाश्च संस्काराः' २.२.१८ इति। यद्यैन्द्रवायववाक्येषु यागो विधीयेत, ततः स्यात्प्रकृतिद्रव्यविधिः, तेषु तु ग्रहणमात्रमेव देवताविशिष्टं विधीयते। तन्मात्रश्रवणात्संभवति च ग्रहणेनैन्द्रवायवं कुर्यादिति विधिः। यद्यपि ग्रहणमात्रेण तद्देवत्यता न भवति, यागसहितेन तु ग्रहणेन शक्यते तद्देवत्यता कर्तुम्। अतो देवताविशिष्टे ग्रहणे चोदिते, यागमन्तरेण तदनुपपत्तेः, यागापेक्षायां 'सोमेन यजेतेत'त्येतत्सर्वत्र द्रव्यदेवतासंबन्धानुपपादयद्यागान्तरकल्पनां निरुणद्धि। 'दशमुष्टीर्मिमीत' इति च परिमाणश्रवणात्, तावतश्च सोमस्याल्पपरिमाणैः पात्रैरसति समुच्चये ग्रहणासंभवाद् यथागृहीतानामेव च होमादुपपन्नं क्रमसमुच्चयदर्शनम्—आश्विनो दशमो गृह्यते, तं तृतीयं जुहोती'ति। त्रयाणामपि समुदायानुवादापवादाधिकरणानां पूर्वपक्षे कर्मभेदः, सिद्धान्ते त्वभेद इति लक्षणसंबन्धः।

इति षष्ठं पशुसोमाधिकरणम्।



## संख्याधिकरणम् ॥ ७ ॥

## पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात् ॥ २१ ॥

### वृत्तिकारमतम्

गतोऽभ्यासप्रसङ्गः। संख्यया भेद इदानीमभिधीयते। अत्र कर्मोत्पत्तिवाक्यगता कर्मसमानाधिकरणा संख्योदाहरणम्। यथा 'तिस्र आहुतीर्जुहोति' 'द्वादश द्वादशानि जुहोती'ति। तत्रैको होमो विधीयते, बहवो वेति संदेहः।

तत्र—आख्यातस्य सकृच्छ्रुत्या कर्मैकत्वेऽवधारिते।
संख्यासंपत्तिरभ्यासात्प्रयाजैकादशत्ववत् ॥ ४० ॥

तदुच्यते—स्यादेवं यदि कर्मैक्यं प्रागस्मादवधारितम्।
आख्यातमात्रात्तत्सिद्धयेत्तावतश्चाप्रमाणता ॥ ४१ ॥

'एकादश प्रयाजानि'ति हि निर्ज्ञातसंख्येषु प्रयाजेषु श्रुता संख्या युक्तम् यदभ्यासेन पूर्यते। न चैवमिह कर्मैकत्वं विज्ञातम्। न ह्याख्यातमात्रं प्रमाणम्। यतः कर्मैकत्वं प्रमितं स्यात्, यावन्ति वाक्ये पदानि प्रयुज्यन्ते, तावतां संहत्य प्रामाण्यम्। अतो विदधदेवाख्यातं सङ्ख्यासामानाधिकरण्याद्बहूनि कर्माणि श्रुतसङ्ख्याविशिष्टानि विधत्त इति, सिद्धो भेदः।

### अत्र भाष्यमतम्

अत्र कर्मण्येव सङ्ख्याश्रवणात्पूर्वपक्षशङ्का मन्देति मत्वा भाष्यकारः 'सप्तदश प्राजापत्या' तै. ब्रा. १-३-४ नित्युदाहरत्। अत्र द्रव्यगतसङ्ख्यया नातीव स्फुटः कर्मभेद इति विचार्यते। किं सप्तदशपशुद्रव्यक एको यागो विधीयते ? किं वैकैकपशुद्रव्यकाः सप्तदशैते यागा इति। तदर्थं विचार्यते—प्राजापत्यानिति प्रकृत्या प्रजापतिर्देवताऽभिधीयते, तद्धितेन पशुद्रव्यम्, बहुवचनेन बहुत्वम्। तत्र तद्धितार्थः पशुः बहुत्वेन प्रथममन्वितः, पश्चात् प्रजापतिना देवतया संबध्यते। पशुश्च पशुश्च पशुश्च पशवः, तेषां प्रजापतिर्देवतेति, तदा बहुभिः पशुभिर्व्यासज्यैकदेवता संबध्यते इति, द्रव्यदेवतासंबन्धैक्यादेको यागो भवति। किं वा प्रथमं प्रजापतिनाऽन्वितः पशुः पश्चाद्बहुत्वेन संबध्यते, प्रजापतिर्देवता अस्येति प्राजापत्यः। प्राजापत्यश्च प्राजापत्यश्च प्राजापत्यश्च प्रजापत्या बहव इति, तदा भिन्नैर्द्रव्यदेवतासंबन्धैर्भिन्ना एव यागाः कथ्यन्ते, तत्र प्राजापत्यशब्देन देवतासंबन्धोपसर्जनं द्रव्यमेव प्राधान्येनोच्यते। यच्च प्रधानम्, तस्यैवार्थान्तरेण बहुत्वेन

संबन्धः, नोपसर्जनस्य देवतासंबन्धस्य। ननु देवताविशिष्टं द्रव्यमभिहितम् विशिष्टेनैव स्वरूपेण संख्यान्वयः स्यात्, न स्वरूपमात्रेणेति। न द्वौ त्रय इत्यत्रानैकान्त्यात्, न हि द्वावित्यत्र द्वित्वविशिष्टेन रूपेण द्विवचनाऽभिहितसङ्ख्यायोगः। तथा सति द्वाविति चत्वारः प्रतीयेरन्, एवं त्रय इति नव। न च तथा। तस्माद्यथा तत्र द्वित्वविशिष्टमपि द्रव्य द्विशब्देनोक्तं स्वरूपेणैव द्विवचनाभिहितसङ्ख्यायोगं प्रतिपद्यते, तथाऽत्रापि तद्धिताभिहितं द्रव्यं स्वरूपेणव बहुत्वयोगं प्रतिपद्यते, न सोपसर्जनम्। तस्मादेकं कर्म सप्तदशपशुद्रव्यकम्।

कथमिदानीं चोदकप्राप्तमेकपशुनिष्पन्नैकादशावदानगणद्रव्यकत्वं यागस्य अनुग्रहीतव्यम्। माऽनुग्राहि, न चोदकानुसार्युपदेशनिर्णयः। यथोपदेशं त्वतिदेशावर्णनम्। तस्मादेकं कर्मेति प्राप्ते—

ब्रूमः—यदि कर्म भवेदेकमेकः स्याच्चोदकस्ततः।
तेन चैकगणप्राप्तेः पशुसङ्ख्या विरुध्यते ॥ ४२ ॥

सवनीयविकारा ह्येकादशिनः, तद्विकाराश्च प्राजापत्याः, तत्र चैकपशुनिष्पन्नैकादशावदानगणद्रव्यकत्वं यागस्यासीदिति, अत्राप्येकत्वे यागस्य चोदकोऽप्येकमेवावदानगणमतिदिशेत्, तस्मादत्र सप्तदशानां प्राजापत्यत्वं न संपादितं स्यात्। न चोपदेशेनातिदेशस्य बाधः, विरोधाभावात्। 'प्राजापत्यानि'त्युपदेशस्योभयथाऽप्युपपत्तेः। तेनार्थद्वयसाधारणमुपदेशवाक्यं प्रकृतिवच्छब्देन वाक्यशेषभूतेनानेककर्मपरमवधार्यते। कर्मभेदे हि प्रतिकर्म भिन्नैः चोदकैस्तावतां गणानां प्राप्तः, सिद्ध्यति सर्वेषां प्राजापत्यत्वम्।

एवं 'वसन्ताय कपिञ्जलानालभते' मै. सं. ३-१४-१ इत्यादिष्वपि चोदकवशेनैव यावद्द्रव्यं यागभेदः।

ये तु चोदकमनादृत्य द्रव्यस्य तद्धिताभिहितस्य विशिष्टस्यैव बहुत्वावगमात् भेदमाहुः, तेषां चतुर्थ्यभिहितदेवतेषु 'वसन्ताय कपिञ्जलानि'त्यादिषु न कर्मभेदः सिध्येत्, तत्र प्रतिपश्ववदानगणप्राप्तिर्न स्यात्। अथ तत्र चोदकवशाद्भेदः, ततस्तथैव सर्वत्रास्तु, किमतद्व्यापिना तद्धितोपन्यासेनेत्यास्तां तावत्।

इति सप्तमं संख्याधिकरणम्।

## संज्ञाधिकरणम् ॥ ८ ॥

### संज्ञा चोत्पत्तिसंयोगात् ॥ २२ ॥

उद्देशक्रमस्यातन्त्रत्वाद्बहुविचारं गुण-प्रकरणान्तरनिमित्तं भेदमुपेक्ष्य, संप्रति संज्ञातो भेदोऽभिधीयते। ज्योतिष्टोमं प्रकृत्य श्रूयते—'अथैष ज्योतिः' तां· ब्रा. १६-८-१ अथैष विश्वज्योतिः, अथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेते" १६ ९-१ १६-१०-१ति। तत्रैतच्छब्दपरामृष्टानां ज्योतिरादीनां यजिसामानाधिकरण्योत् यागनामत्वं तावत्सिद्धम्। तत्र संशयः—किं प्रकृतमेव ज्योतिष्टोमं ज्योतिरादिशब्दैरनूद्य सहस्रदक्षिणाख्यो गुणो विधीयते? उत कर्मान्तराण्येवंनामानि, एवंदक्षिणानि विधीयन्त? इति। तत्र प्रकरणादेतच्छब्दस्य च प्रकृताभिधायित्वात्तत्सामानाधिकरण्याच्च ज्योतिरादीनां प्रकृतहानाप्रकृतकल्पनायोगाच्च पूर्वस्यैव गुणविधिरिति प्राप्ते—

ब्रूमः—नामान्तरश्रुतावर्थे भेदस्तावत्प्रतीयते।

बलवद्बाधकाच्चासावन्यथात्वं प्रपद्यते॥ ४२ ॥

न चात्र बलवदस्ति बाधकम्, येन संज्ञानिमित्तो भेदोऽपोद्येत। संज्ञाश्रुत्या चार्थान्तरावगमात्प्रकरणविच्छेदे जाते, अर्थान्तरकलुषितायां बुद्धावुपनिपत'त्सहस्रदक्षिणेन यजेते'ति न ज्योतिष्टोमं गन्तुमर्हति! तस्मात्कर्मान्तराणि। एवञ्च 'अथैष ज्योति'रित्यादेरर्थवत्त्वम्, अन्यथाऽऽनर्थक्यं स्यात्, 'एतेन सहस्रदक्षिणेनै' तावतैव ज्योतिष्टोमस्य गुणविधिसिद्धेः एतच्छब्दश्च प्रस्तूयमानकर्मान्तरवचनत्वेनाप्युपपद्यत इति, सिद्धः कर्मभेदः।

इत्यष्टमं संज्ञाधिकरणम्

---

## गुणाधिकरणम् ॥ ९ ॥

### गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् ॥ २३ ॥

इदानीं गुणलक्षणो भेदः प्रस्तूयते। द्वेधा गुणस्य भेदकत्वम्—कश्चित्तावद्गुणः पूर्वविहितस्य कर्मणः प्रबलगुणावरुद्धत्वात्, तत्र निवेशमलभमानः स्वात्मसंगतये विधेः कर्मान्तरोत्पत्तिपरतां कल्पयन् भेदको भवति, अनेकत्वाद्वा गुणानां प्राप्तकर्मानुवादेन विध्ययोगात्सर्वेषां विधिसिद्धये कर्मपरत्वं विधेः

कल्प्यते। तत्रानेकगुणनिमित्तो भेदः पौर्णमास्यधिकरण एव प्रसङ्गात्प्रतिपादितः। अधुना बलवद्विरोधनिमित्तोऽभिधीयते। चातुर्मास्येषु 'वैश्वदेव्यामिक्षे' ति यागं विधायाम्नायते-'वाजिभ्यो वाजिनमि' ति। तत्र संशयः-किं पूर्वस्मिन्नेवामिक्षायागे वाजिनं गुणो विधीयते? किं वा कर्मान्तरमिति? तदर्थञ्च किमुत्पत्त्युत्पन्नशिष्टौ गुणौ तुल्यबलौ, उत्पत्तिशिष्टो बलीयानिति, तथा तद्धितचतुर्थ्योरपि बलाबलं चिन्तनीयम्।

तत्र—वाजेनाऽऽमिक्षया योगाद्विश्वे देवा हि वाजिनः।
प्रकृतांस्तान्वदेच्छ्रुत्या वाजिशब्दश्च यौगिकः॥ ४४॥

ते च पूर्वविहितकर्मसंप्रदानरूपेण प्रकृताः, तेनैव रूपेण प्रत्यभिज्ञायन्ते। तथाविधेन च संबध्यमानं वाजिनं पूर्वकर्मण्येव विहितं भवति। एवञ्च संभवति पूर्वत्र गुणमात्रविधाने प्रकृतहानम्, अप्रकृतकल्पनम् अपूर्वान्तरकल्पनम्, विशिष्टविधिगौरवं च नाश्रयितुं युक्तम्। नन्वामिक्षायुक्तस्यैव पूवकर्मण उत्पत्तावगतत्वान्न तस्य द्रव्यान्तरसंबन्धापेक्षा, योग्यता वास्ति।

उच्यते-यद्यप्युत्पत्तौ द्रव्ययुक्तं कर्माऽवधारितम्, तथाऽपीह निष्कृष्य कर्मस्वरूपमात्रमनूद्यते। अभिधानकृता चाकाङ्क्षा, न वस्तुकृता। तेन स्वरूपमात्रस्याभिधानोपात्तस्यास्त्येव द्रव्यान्तरसंबन्धापेक्षा। योग्यता चास्त्येव द्रव्यान्तरेण स्वरूपमात्रस्य संबन्द्धुम्। शब्दान्तराधिकरणे २-२-१ हि प्रत्ययवाच्या भावना प्रकृत्यर्थानुरक्तैवावगम्यते, न शुद्धस्वरूपेति, धात्वर्थान्तरमनवकाशं स्यादित्युक्तम्। इह तु कल्पितेन यजिना गुणाननुरक्तमपि कर्मावगतम्, पदान्तरत्वात्। अतस्तदनुवादेन शक्यं गुणान्तरविधानम्, अतो नास्त्युत्पत्त्युत्पन्नशिष्टयोर्विरोधः। न चामिक्षया देवतासंबन्धस्य श्रौतत्वाद्वाक्यगम्याद्वाजिनसंबन्धाद्बलीयस्त्वमिति वाच्यम्, उभयोर्वाक्यगम्यत्वात्, न ह्यामिक्षाया देवतासंबन्धो वैश्वदेवीपदेन केवलेनावगम्यते, किं त्वामिक्षापदैकवाक्यतया। तस्मादुभयोस्तुल्यबलत्वात्पूर्वस्मिन्नेव कर्मणि विकल्पः, समुच्चयो वेति प्राप्ते—

अभिधीयते—आमिक्षाया बलीयस्त्वमुत्पत्तौ चोदनाच्छ्रुतेः।
उत्पन्ने वाजिनं वाक्यात्तेन तद्दुर्बलं मतम्॥ ४५॥

यत्तु सगुणोत्पन्नमपि कर्म स्वरूपमात्रेण निष्कृष्य शक्यं गुणान्तरम् विधातुमित्युक्तम्, तदयुक्तम्, यद्यपि ह्यभिधानतः स्वरूपमात्रं निष्कृष्यते, तथाऽपि

तस्योत्पत्तिवाक्यावगतस्यानुवादात्तत्स्वरूपमालोच्यमानमेव गुणयुक्तमवगम्यते, ततश्च नैराकाङ्क्ष्याद्योग्यत्वाच्च गुणान्तरं तत्र निवेशमलभमानमात्मनिवेशक्षमकर्मान्तरोत्पत्तिं सूचयति। श्रौतश्चामिक्षाया विश्वैर्देवैः संबन्धः, तद्धितस्य देवताविशिष्टद्रव्यवाचिनः पदान्तरोपस्थापितद्रव्यविशेषवचनत्वात्। वाजिभ्य इति चतुर्थी संप्रदानमात्रं वदति, न तद्विशिष्टं द्रव्यम्, वाक्यात्तु तत्संबन्ध इति दुर्बलम्, प्रपञ्चितञ्चैतद्वार्तिक एव। अन्ये च बहवः सन्निकर्षविप्रकर्षप्रकारा वार्तिके एव द्रष्टव्याः। तस्मादामिक्षाऽवरुद्धे कर्मण्यसभवन्निवेशाद्वाजिनगुणात्कर्मभेदः।

इति नवमं गुणाधिकरणम्।

---

## गुणात् कर्मभेदापवादाधिकरणम् ॥ १० ॥

**अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ॥ २४ ॥**

इति प्रत्युदाहरणसूत्रम्। अथवाऽधिकरणान्तरम्। 'अग्निहोत्रं जुहोती' ति निर्गुणकर्मोत्पन्नम्, तत्सन्निधौ च' दध्ना जुहोति, पयसा जुहोती'त्यादयो बहवो गुणाः श्रूयमाणाः पूर्वकर्मनिवेशे सति विकल्पप्रसङ्गादन्यतरावरुद्धे चान्यतरस्य निवेशासंभवात्पूर्ववदेव कर्मान्तरं कल्पयतीति प्राप्ते—

ब्रूमः—सर्वेषाममीषामन्योन्याऽनालोचनेनाग्निहोत्रवाक्यमात्रालोचनात्तत्र च निर्गुणस्य कर्मणोऽवगतस्य सर्वगुणयोग्यत्वात्पौर्वापर्याभावाच्चान्यावरुद्धेअन्यस्य अनिवेश इत्यभावात् तत्रैव गुणमात्रविधानम्, प्रमाणवशाच्च विकल्पः।

इति दशमं गुणात् कर्मभेदापवादाधिकरणम्।

---

## इन्द्रियकामाधिकरणम् ॥ ११ ॥

**फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात् ॥ २५ ॥ अतुल्यत्वात् वाक्ययोर्गुणे तस्य प्रतीयेत ॥ २६ ॥**

अग्निहोत्रं प्रकृत्य 'दध्नेन्द्रियकामस्य जुहुयादि'ति श्रूयते। तत्र संशयः- किमग्निहोत्रात्कर्मान्तरं दधिविशिष्टमिन्द्रियकामाय विधीयते? उत तत्रैव गुणमात्रं फलाय विधीयत? इति। तदर्थमिदं विचार्यते—किं कर्मणः फलमिदम्, उतगुणादिति?

यदि कर्मणः, ततः प्राप्तस्य कर्मणः फलसंबन्धम्, गुणसंबन्धैञ्चैकं वाक्यं न शक्नोति विधातुमिति, कर्मान्तरं स्यात्। गुणफलसंबन्धे तु तन्मात्रं वाक्येन विधीयते। दधिहोमसंबन्धस्त्वाश्रयाश्रयिरूपः प्रकरणप्राप्तोऽनूद्यमानो न वाक्यम् भिनत्तीति, सिद्ध्यत्येकवाक्यत्वम्, अकर्मान्तरत्वञ्च। तेन भेदाभेदसिद्ध्यर्थं कर्मणः फलम्, गुणाद्वेति चिन्त्यते, सत्यपि च पक्षद्वये भावनाभेदे धात्वर्थभेदाभेदविचारणाल्लक्षणसंबन्धः।

तत्र—धात्वर्थात्फलमित्युक्तं भावनासन्निकर्षतः।
विप्रकृष्टस्तु नामार्थस्तदर्थो न फलान्वयी॥ ४६॥

भावार्थाधिकरणे ह्येतदुक्तं—यथा धात्वर्थात्फलम्, न नामार्थात्। स तु धात्वर्थस्यैव अङ्गमिति। तदिहापि दधि होमार्थम्, होमः फलार्थः।

किञ्च—दध्नश्च फलसंबन्धे जुहोतेः स्यादनन्वयः।
यदि सोऽपि विधीयेत वाक्यभेदः प्रसज्यते॥ ४७॥

न ह्येकं वाक्यं फले होमे च शक्नोति दधि विधातुम्। तत्रासति होमसंबन्धे जुहोतिपदमनर्थं स्यात्। तस्य च दध्ना सह क्रियाकारकभावोऽवगम्यमानः परित्यक्तः स्यात्। तस्मात् होमस्यैव फले विधानं गुणविशिष्टस्येति प्राप्ते—

ब्रूमः—धात्वर्थस्यान्यतः प्राप्तेर्गुणमात्रं विधीयते।
विधेयं यच्च तेनैव फलं नान्येन युज्यते॥ ४८॥

तत्रैव हि भावार्थाधिकरणन्यायः, यत्र धात्वर्थो नामार्थश्चोभयमपि विधीयते। अत्र तु प्राप्तत्वेन धात्वर्थस्याविधेयत्वाद्, गुणमात्रं विधीयते, विधेयस्यैव फलसंबन्धः, नाविधेयस्य। तेन गुणस्यैव फलम्, न तु कर्मान्तरं विधेयं भविष्यति। नापि प्रकृतहानाप्रकृतकल्पनाविशिष्टविधिगौरव-मत्वर्थलक्षणादोषप्रसङ्गः। अतः गुणमात्रविधानात्, तस्यैव फलम्। जुहोतेरिदानीं कथमन्वयः?

### अत्र विषये निबन्धनकारमतम्

केचिदाहुः—कर्मापन्नमेव दधि फलकामस्य विधीयते, न दधिमात्रम्, अभावार्थस्य विधिविषयत्वायोगात्। अतो दध्यनुरक्तो होम एव विधीयते। न चैवं वाक्यभेदः, दध्नो विधानाभावात्। लौकिकं हि क्रियाकारकलक्षणं संबन्धमाश्रित्य द्रव्याणां क्रियाऽऽपत्तिः, न पुनस्तादर्थ्यम्, कर्मणोऽकारकत्वप्रसङ्गात्, अतः

फलार्थतैव होमे कारकीभूतस्य दध्नः प्रतीयते, न होमार्थत्वम्, तत्रापि विधिव्यापाराद्वाक्यभेदः स्यात्, न तु तदस्ति, तेन होमाश्रितस्य दधिव्यापारस्य फले विधानाद्वाक्यभेदं विनैव सिद्धो जुहोत्यन्वयः—इति ।

### तस्य निरासः

अत्रेदं वक्तव्यम्—यदि न दधि विधीयते, किं तर्ह्यत्र विधीयते ? होम एव दध्यनुरक्तः फलाय विधीयत इति चेत्, एवं तर्हि होम एव फलार्थः स्यात्। दधि तु होम एव दध्यनुरागसंपत्त्यर्थमुपादीयमानं तदर्थमेव स्यात्, न फलार्थम्। अपि च मा भूद्दध्नो विधानम्, तदनुरागस्तु प्राप्तस्य कर्मणो विधीयते, फलसंबन्धश्चेति वाक्यभेदः ।

ननु न ब्रूमो दध्नो न विधानमिति, किंतु होमार्थतया न विधीयते, फलार्थतया होमाश्रितं विधीयते—होमे कारकीभूतमित्यर्थः । उच्यते दध्नेति दधिविशिष्टं करणकारकमात्रं पदेनोच्यते, होमे तु तत्कारकमिति कुतोऽवगम्यते ?। वाक्यादिति चेत्, एवं सत्याश्रयसंबन्धम्, फलसंबन्धेञ्च बोधयद्वाक्यं भिद्येत ।

ननु लेकसिद्धमेव क्रियाकारकलक्षणमाश्रयाश्रयिसंबन्धमुपादाय केवलं फलसंबन्धकरणान्न वाक्यभेदः । नैतदेवम्, लोकतो हि क्रियाकारकयोः संबन्धः संभवमात्रेण सिद्धः, न कर्तव्यतया। कर्तव्यतया चात्र दधिहोमसंबन्धः श्रूयते 'दध्ना जुहुयादि' आप. श्रौ. ६-२५ ति। तेन तस्य कर्तव्यता, फलसंबन्धश्चेति वाक्यभेदः। न हि 'दध्नेन्द्रियकामस्य जुहुयादि'न्ते ब्रा. २-१-५-३ त्यत्र यः इन्द्रियकामः, स दध्ना जुहुयादिति वचनव्यक्तिः संभवति, होमस्याविधेयत्वात्। विधाने च कर्मान्तरत्वापत्तेः । अतो जुहुयादिति तावदनुवादः । तत्र यज्जुहुयात्, तद्दध्नेन्द्रियकामस्येति च वाक्यभेदः। अथ यद् दध्ना जुहुयात्,तदिन्द्रियकामस्येति। तदयुक्तम्। न हि सत्यपि संभवे दध्ना होतव्यं प्राप्तम्, यदनूद्येत। अथ यदिन्द्रियकामस्य जुहुयात्, तदन्ने ति। तदप्ययुक्तम्, इन्द्रियकामार्थत्वेन होमस्याप्राप्तत्वात्।

अथ मन्येत यद्यपीन्द्रियकामस्येन्द्रियकामत्वेन रूपेण होमो न प्राप्तः—इन्द्रियार्थत्वेनेति यावत्। तथाऽपि पुरुषाणां बहुकामत्वात्कदाचिदग्निहोत्रावस्थायामपि संभवतीन्द्रिये पुरुषस्य कामना, तेनेन्द्रियकामनोपलक्षितस्य पुरुषस्य कदाचित्प्राप्त एव होम इति, तदनुवादेन दधि विधीयते । तदयुक्तम्। फलरूपाभिधायिनः कामपदस्य पुरुषस्वरूपपरत्वे लक्षणाप्रसङ्गात्। अपि चैवं न फलार्थम् दधि स्यात्, किंतु इन्द्रियकामनायां निमित्ते नैमित्तिकं क्रत्वङ्गं स्यात्।

### तत्र विवरणमतम्

विवरणकारस्य तु अपूर्वान्तरानभ्युपगमात् क्रत्वपूर्वान्वितस्यैव गुणस्य फलार्थत्वात्, अपूर्वसंबन्धस्य च लोकतः सिद्ध्यभावात्सुतरां वाक्यभेदः स्यात्। तस्मान्न होमसंबद्धं दधि वाक्येन विधीयते, अपि तु दध्नेत्येतावन्मात्रम्—य इन्द्रियकामः, स दध्नेति, कथं तर्हि जुहोतेरन्वयः ?। उच्यते—दध्नेति करणभूतं दधि फलाय विधीयते, तृतीयानिर्देशात्। क्रियापेक्षञ्च करणकारकमिति, क्रियाविशेषापेक्षायां सन्निधिलक्षणप्रकरणप्राप्तो होमसंबन्धो जुहोतिनाऽनूद्यते।

ननु होमादिवत्फलभावनापेक्षमेव करणत्वं भविष्यति, न क्रियान्तरमपेक्षते। उच्यते, न धात्वर्थवद्दध्यादेः सिद्धस्वभावस्य स्वरूपेण फलभावनाकरणत्वमुपपद्यते, कर्तृव्यापारविषयस्य हि करणत्वम्, दध्यादेश्च कंचिद्धात्वर्थं प्रति करणीभवतः कर्तृव्यापारविषयता, न स्वरूपेण यागादिवदिति, अस्ति धात्वर्थविशेषाकांक्षा। यद्यपि चादृष्टोपकारप्रयाजादिव्यापारविषयता यागादिवद्दध्यादेः सिद्धस्वभावस्यापि स्वरूपेण संभवेत्, तथाऽपि दृष्टार्थव्यापारविषयतासिद्ध्यर्थं कारकभावमपेक्षते। अवश्यञ्च दृष्टद्वारेणापि कर्तृव्यापारविषयता करणस्याङ्गीकर्तव्या, अन्यथाऽदृष्टार्थाङ्गमात्रानुष्ठानात्करणं प्रति पुरुषव्यापाराभावात् करणोपदेशवैयर्थ्यं स्यात्। तस्माद्विभक्त्यभिहितकारकविशिष्टं दधि, दधिविशिष्टम् वा कारकं प्रत्ययार्थप्राधान्यात्फलाय विधीयते। फलभावनाकरणत्वञ्च यागादिवदेव समभिव्याहारात्सिद्धं न विभक्त्यर्थभिधानमपेक्षते। कारकभावश्च क्रियाविशेषापेक्ष इति, सन्निधिवशप्राप्तो होमो धातुनाऽनूद्यत इति, सिद्ध्यति जुहोतेरन्वयः, कारकभावश्चैकपदोपात्तः, क्रियाविशेषसंबन्धश्च सन्निधिप्राप्तः। फलान्वय एव वाक्येन विधीयते इति, न वाक्यभेदः।

इति एकादशमिन्द्रियकामाधिकरणम्।

---

### रैवत्यधिकरणम् ॥ १२ ॥

## समेषु कर्म युक्तं स्यात् ॥ २७ ॥

'त्रिवृदग्निष्टुदग्निष्टोमः' तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेते 'तां.ब्रा. १७-६-१ त्यग्निष्टुत्संज्ञकं यागं विधाय, तस्य प्राकरणिकेन वारवन्तीयमग्निष्टोमसामकार्यमिति वाक्येन गुणं विधाय, पुनराम्नात-'मेतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेते'ति।

तत्र पूर्ववत्संशयः—किं पूर्वस्मिन्नेवाग्निष्टुत्संज्ञके यागे पशुफलार्थत्वेन रेवत्याधारम् वारवन्तीयं गुणो विधीयते ? उत कर्मान्तरमिति ? तदर्थमेतत् विचार्यते—किं पशुफलार्थस्य वारवन्तीयस्य प्रकृतो याग आश्रयी भवितुं शक्नोति, ने?ति।

तत्र पूर्ववदत्रापि गुणमात्रं विधीयते।
फलाय न तु यागस्य विधानं विधिगौरवात्॥ ४८॥
सामाश्रयत्वं यागस्य साक्षादाद्यप्यसंभवि।
तथाऽपि स्तोत्रनिर्वृत्तिद्वारा तदुपपद्यते॥ ४९॥

विशिष्टयागान्तरविधौ विधिगौरवात्, प्रकृतहानाऽप्रकृतकल्पनादोषाच्च तत्रैव रेवत्याधारं वारवन्तीयं फलाय विधीयते। यद्यपि द्रव्यदेवतासाधनो यागः साम्ना साक्षात्साधयितुं न शक्यत इति, न साक्षात्साम्नः प्रकृताश्रयकत्वं संभवति। तथा'ऽप्यानर्थक्यात्तदङ्गेषु' ३.१.१८ त्यङ्गभूतस्तोत्रनिर्वृत्तिद्वारेण यागसाधनत्वम् साम्नः संभवतीति, युक्तं प्रकृताश्रयकत्वम्।

नन्वेवं रेवतीवारवन्तीयसंबन्धः, फलसंबन्धश्चेत्यनेकार्थत्वाद्वाक्यभेदः स्यात्। नैष दोषः। यदि संबन्धद्वयमपि विधिशब्देनैव बोधयितव्यं स्यात्, तदा स्याद्वाक्यभेदः। कृत्याशब्देनैव तु रेवतीवारवन्तीसंबन्धे प्रतीते केवलफलसंबन्धः एव यजेः परेण लिङ्प्रत्ययेन प्रतिपादयितव्य इति, न वाक्यभेदः, यथा विशिष्टापूर्वकर्मविधौ तस्य विशेषणसंबन्धे विभक्त्यादिभिरेव सिद्धे तादृशस्य फले विधानादवाक्यभेदः—यः फलं कुर्यात्, स ईदृशेन यागेनेति, तद्वदिहापि—यः फलं, कुर्यात्, स रेवतीषु वारवन्तीयकरणेनेति न वाक्यभेदः। तस्मात्फलाय गुणमात्रविधिः, यजिस्तु विपरिवृत्तिप्राप्तयागानुवादः, एतच्छब्दोऽपि षष्ठ्यन्तः पूर्वस्य यागस्य फलवता गुणेन सहाश्रयाश्रयिसंबन्धं सन्निधिलब्धमनुवदति। अग्निष्टोमसामशब्दोऽपि आनर्थक्यतदङ्गन्यायेन प्राप्तस्तोत्रसंबन्धानुवादः। यद्यपि तत्र बहूनि स्तोत्राणि आज्यपृष्ठादीनि सन्ति, तथाऽपि वारवन्तियस्य क्रत्वर्थस्याग्निष्टोमस्तोत्रमेव स्थानं दृष्टमिति, फलार्थस्यापि तदेव स्थानम् भविष्यति। तस्मादेषां प्राप्तत्वेनाविधेयत्वान्न वाक्यभेद इति प्राप्ते—

---

ब्रूमः—प्रकृतं कर्म गृह्णाति फलाय विहितो गुणः।
यत्र तत्र गुणात्कामो यागः साम्ना न साध्यते॥ ५०॥

कारकभावापत्तिर्हि तदाश्रयत्वम्, तदपि प्रकरणप्राप्तमनुवदितव्यम्। वाक्येनाश्रयसंबन्धकरणे वाक्यभेदात्, तेन यत्र प्रकृते कर्मणि फलार्थस्य

गुणस्य कारकभावः संभवति, तत्रैव गुणात्कामः यथा—दध्नेन्द्रियकामस्येति, न त्विह प्रकृतयागे कारकत्वं साम्नः संभवति, संभवति तु तदङ्गभूते स्तोत्रे कारकत्वम् तत्तु न प्रकृतमस्ति, आतिदेशिकत्वादिह स्तोत्राणाम्। न चाय'मानर्थक्यतदङ्गन्यायस्य' विषयः। यो हि कर्माङ्गत्वेन गुणश्चोद्यते, स तत्र साक्षादसंभवन्नङ्गे निविशते। संभवति ह्यङ्गद्वारेणाप्युपकारकत्वम्। न चाश्रयत्वमङ्गद्वरेण संभवति। न ह्यङ्गे कारकंभावात्प्रधाने कारकत्वं भवति। साम्नश्च गीतिरूपक्रियात्वाद्यागादिवन्नाश्रयापेक्षा। यतः प्रकृतक्रियासंबन्धः स्यात्।

ननु नावश्यं कारकतयैव तदाश्रयत्वम्, संबन्धान्तरेणाप्युपपत्तेः। तेन क्त्वाशब्देन क्रियान्तरसमानकर्तृकतया गम्यमानं रेवतीवारवन्तीयसंबन्धकरणम् फलाय विधीयते। किं तत्क्रियान्तरमित्यपेक्षायां सन्निधानाद्यागोलभ्यते। एवमप्यग्निष्टोमसामेति नावकल्पते, अनुवादासंभवात्, विधाने च वाक्यभेदात्। न च क्रत्वर्थस्य वारवन्तीयस्य यत्स्थानम्, तदेव पुरुषार्थस्यापि भवतीति प्रमाणमस्ति, यतोऽग्निष्टोमसामत्वमनूद्येत।

किञ्च रेवतीषु वारवन्तीयं कृत्वा पशून् भावयेदित्युक्ते पशुभावनापेक्षयैव समानकर्तृत्वसंभवान्न क्रियान्तरापेक्षा, यतः सन्निहितो यागः संबध्येत। तस्मात् क्त्वाशब्दकल्पितगुणफलसंबन्धविधौ यजेतेति, चाग्निष्टोमसामेति च द्वावपि शब्दौ प्रकरणप्राप्तानुवादासंभवाद्विधाने च वाक्यभेदादनर्थकौ स्याताम्। तस्मात् क्त्वाशब्दकल्पितरेवतीवारवन्तीयसंबन्धविशेषितो यागः फलाय

---

विधीयते। तत्र साम्नः प्रकृतितोऽग्निष्टोमस्तोत्रस्थानप्राप्तेस्तदनुबद्धा रेवत्योऽपि तत्स्थाना भवन्ति। तेनोग्निष्टोमसामेत्यनुवादः, एतच्छब्दोऽपि प्रस्तूयमानापूर्वयागवचनो रेवतीषु वारवन्तीयं कृत्वा पशुकामो यजेतेत्येतावन्मात्रं विधीयत इति लाघवम्, एकवाक्यत्वं च लभ्यतेऽपूर्वविधौ। गुणफलसंबन्धविधौ तु यज्यादेरानर्थक्यं वाक्यभेदो वा स्यादित्युक्तम्।

ये तु गुणफलाधिकारेष्वपि वाक्येनैव गुणस्याश्रयसंबन्धमुपगच्छन्तः कर्मैव गुणानुरक्तं फलाय विधीयते वाक्येनेत्याहुः। तेषामत्रापि रेवतीवारवन्तीयसाधनकाग्निष्टोमस्तोत्रविशिष्टस्य प्रकृतस्येव यागस्य दध्यनुरक्तस्यैव होमस्य फले विधिसंभवात्सिद्धान्तहानिः। ननु तत्र दध्यनुरागो होमस्य लोकसिद्धः लभ्यते, केवलस्तु फलसंबन्धो वाक्येन विधीयते। इह तु यद्यपि ऋक्सामयोः स्तोत्रसाधनत्वं लौकिकम्। स्तोत्रस्य यागविशेषणत्वं न लोकतः सिध्यतीति, विधिवशादेव लब्धव्यम्, ततश्च तस्य, फलसंबन्धस्य च विधानाद्वाक्यभेदः

स्यात्। सत्यम्, न लोकसिद्धम्, अतिदेशतस्तु सिद्धं स्तोत्रस्य पूर्वयागाङ्गत्वम्, स्तोत्रविशेणत्वं च ऋक्सामयोर्लोकसिद्धम्। तदेव ऋक्सामविशेषितस्तोत्रानुरागं यागस्या अन्यतः सिद्धमुपादाय, केवलफलसंवन्धमात्रं विधिनाऽनेन वोध्यत इति, कुतो वाक्यभेदः।

किं च कृत्वाशब्देन स्तोत्रसमानकर्तृकत्वमेव यागस्योच्यते, न तत्कारकत्वम्, तादर्थ्यं वा। समानकर्तृकत्वञ्च लोकसिद्धमेव लभ्यते इति, दध्यादिभिरविशेषः। अतो रेवतीवारवन्तीयसाधनकाग्निष्टोमस्तोत्रसमानकर्तृकत्वविशिष्टः प्रकृत एव यागः फलाय विधातुं शक्यते।

यद्वा—अग्निष्टोमस्तोत्रमेवातिदेशप्राप्तं रेवतीवारवन्तीयानुरक्तं पशुकामस्य विधीयताम्। यजिपरस्यापि विधेः स्तोत्रविषयत्वं न दुष्यात निर्वापपरस्येव द्रव्यदेवतासबन्धविषयत्वम्, यजेरपि निर्वपतिवदनुवादत्वात्, तस्माद्वाक्येनाश्रयसंबन्धे सिद्धान्तहानिरित्यास्तां तावत्।

इति द्वादशं रेवत्यधिकरणम्।



सौभराधिकरणम् ॥ १३ ॥

**सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ॥२८॥ सर्वस्य वोक्तकामत्वात्, तस्मिन् कामश्रुतिः स्यात्, निधनार्था पुनःश्रुतिः ॥ २९ ॥**

'यो वृष्टिकामः, योऽन्नाद्यकामः, यः स्वर्गकामः, स सौभरेण स्तुवीते'- तां. ब्रा. ८-८-१९ ति ब्रह्मसामाख्यं स्तोत्रं प्रकृत्य तदाश्रितं सौभरं फलत्रयसाधनत्वेनाम्नातम्। यद्यपि सौभरस्य साम्नो गीत्यात्मकक्रियात्वाद्वारवन्तीयवन्नाश्रयापेक्षा, तथाऽपि 'स्तुवीते'त्यनेनैकवाक्यत्वात्तत्साधनभूतस्यैव फले विधानम् विज्ञायते। तथाहि—यावन्ति पदानि प्रयुज्यन्ते, तावतां यथाऽन्वयो भवति, तथा वाक्यार्थो वर्णनीयः। तद्यदि सौभरमात्रं विधीयेत, ततः 'स्तुवीते'त्यनर्थकं स्यात्। स्तुत्यन्तरविधाने गौरवम्, मत्वर्थलक्षणा च स्याद्, अतः सौभरेणत्येकपदोपात्तम् सौभरविशिष्टं करणकारकं फले विधीयते, करणं च क्रियाऽपेक्षमिति, युक्तम् प्रकृतस्तोत्राश्रयत्वम्। वारवतीयन्तु द्वितीयान्तत्वान्न करणीभूतमवगम्यते, किंतर्हि? कर्मीभूतम्। न च स्तोत्रे, यागे वा साम्नः कर्मत्वं संभवति, तेन कृत्वा—शब्दार्थमात्रं प्रति कर्मत्वान्न क्रियान्तरापेक्षेति वैषम्यम्। तदेवं फलत्रयसाधनम्

सौभरं प्रकृत्याऽऽम्नातं 'हीषीति वृष्टिकामाय निधनं कुर्यात्, ऊगित्यन्नाद्यकामाय 'ऊ इति स्वर्गकामाये' ता. ब्रा. ८-८-१९ ति। तत्र संशयः—किं हीषादयः निधनविशेषाः सौभरफलात्फलान्तरार्थेन विधीयन्ते ? उत सौभरस्यैव तत्तत्फलं साधयतस्तत्तन्निधनमनियमेन पाठतः प्राप्तं नियम्यत ? इति। तदर्थं—किं वृष्टिकामादिशब्दोक्तपुरुषशेषत्वेनैतो साक्षाद्विधीयन्ते ? अथवा तत्साधनशेषत्वेने ?ति। तत्र पुरुषस्य श्रौतत्वात्तादर्थ्यमेव हीषादीनां चतुर्थ्या विज्ञायते, तच्छेषता च तदभिलषितफलसाधनतयेति, फलान्तारार्थत्वमेवैषाम्। साधनसंबन्धे तु वृष्टिकामादिशब्दैः सौभरं लक्ष्येत। न च श्रुतिसंभवे लक्षणा न्याय्या। तस्माद्धीषादयः गुणाः फलान्तरार्था इति प्राप्ते—

ब्रूमः वृष्ट्यादीनि पूर्वोक्तान्येव विपरिवर्तमानानि प्रत्यभिज्ञायन्त इति, न फलान्तरावगमः। किंच हीषिति शब्दमात्रे फलाय विहिते सति, आश्रयापेक्षायाम् यत्तावत्सौभरं प्रकृतम्, न तच्छक्नोत्याश्रयत्वं प्रतिपत्तुम्। यत्तु तदवयवभूतं निधनम्, न तत्प्रकृतम्, न चानर्थक्यतदङ्गन्यायस्यायं विषय इत्युक्तम्। सत्यपि च तदङ्गावतरणेऽनेकावयवत्वान्न नियमेन निधनसंबन्धः, तत्र निधनमित्यनर्थकं स्यात्, विधाने च वाक्यभेदः। तस्माद्वृष्टिकामादिशब्दलक्षिते सौभरे निधनत्वेनैवानियतप्राप्ता हीषादयो नियम्यन्ते।

अथवा लक्षणाऽपि नातीवात्र विद्यते। न हि यदेव फलस्य करणम्, तस्यैव पुरुषशेषत्वम्, तदङ्गस्यापि तद्वारेणास्त्येव पुरुषशेषता। तथा चान्यत्राऽपि प्रयोगो दृश्यते—'वासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजः' इत्यादिः। तेन हीषादयः सौभराङ्गभूतास्तद्वारेण वृष्टिकामादीनां पुरुषाणायथामनियमेन शेषभूताः प्राप्ताः, तानेव प्रति यथा प्राप्ता रूपा नियम्यन्त इति, न लक्षणा, साधनद्वारेण तु तादर्थ्यम्, न साक्षादिति लक्षणावाचो युक्तिर्भाष्यवार्तिकयोः। यथाप्राप्तानां च नियम इति, न शाखान्तरगते सौभरे शाखान्तरीयं निधनं प्रयोक्तव्यम्, किन्तु तत्तन्निधनसहित एव च सौभरविशेषस्तत्तत्फलार्थेन प्रयोक्तव्यः।

तस्मात्फलान्तरार्थेन नैव हीपादयो गुणाः।
विधीयन्ते नियम्यन्ते तत् यथाप्राप्तन्तु सौभरे॥ ५१॥

इति त्रयोदशं सौभराधिकरणम्।

इति शास्त्रदीपिकायां द्वितीयस्याध्यायस्य द्वितीयः पादः।

# अथ द्वितीयाध्याये तृतीयः पादः

रथन्तराधिकरणम् ॥ १ ॥

**गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ।१।**

**एकस्य तु लिङ्गभेदात् प्रयोजनार्थमुच्येत, एकत्वं गुणवाक्यत्वात् ॥२॥**

ज्योतिष्टोमं प्रकृत्य श्रूयते-"यदि रथन्तरसामा सोमः स्यात्, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्। यदि बृहत्सामा शुक्राग्रानि" आप. श्रौ. १२-१४-१ ति। तत्र संशयः-किं ज्योतिष्टोमात्कर्मान्तरं रथन्तरसामा बृहत्सामेति विधीयते ? किं वा ज्योतिष्टोम एव रथन्तरेण, बृहता वाऽवच्छिन्नो ग्रहाग्रताविशेषं प्रति निमित्तत्वेन अनुकीर्त्यत ? इति। तदर्थमिदं चिन्त्यते-किमयं कृत्स्नक्रतुसंयोगो रथान्तरादेः, उत अकृत्स्नक्रतुसंयोग ? इति। तदर्थमपि-किं रथन्तरविशिष्टः क्रतुरिह निमित्तम्, उत क्रतुविशिष्टं रथन्तरमिति ?

तत्रान्यार्थप्रधानत्वाद्बहुव्रीहेर्निमित्तता ।
रथन्तरविशिष्टस्य क्रतोरेवागम्यते ॥ ५२ ॥

विशेषणं व्यवच्छेत्तृ विशेष्यव्यापि चोच्यते ।
ज्योतिष्टोमे च नान्येषां व्यवच्छेदस्य संभवः ॥ ५३ ॥

रथन्तरेण कृत्स्नस्य क्रतोर्व्याप्तिश्च नैव हि ।
सन्त्यन्यान्यपि सामानि गायत्रादीनि तत्र हि ॥ ५४ ॥

तेन व्यवच्छेदाभावात्सत्तयाऽपि चाव्यापिन्या सामान्तरसापेक्षतया विशेषणासंभवात्पूर्वत्रासंभवी रथन्तरसामत्वं गुणः कर्मान्तरं कल्पयति। यदि-शब्दश्च निपातत्वाद् निरर्थकः, रुच्यध्याहारादिना वा व्याख्येय इति प्राप्ते—

ब्रूमः यदिशब्दात्प्रकरणाच्च ज्योतिष्टोमस्याभिधानम्। न च सामान्तर-

व्यवच्छेदेन रथन्तरस्य विशेषणत्वम्। शब्दो हि स्वार्थसत्तामेव प्रथमं बोधयति, यदि सा नित्यप्राप्ता स्यात्, ततस्तत्प्रतिपादनमनर्थकमिति, अर्थान्तरव्यवच्छेदम् कुर्यात्, इह तु रथन्तरसत्तायाः पाक्षिकत्वात्, तत्प्रतिपादनेऽपि नानर्थकत्वमि-त्यसत्ताव्युदासेन सत्तयैवात्र विशेषणत्वलाभान्न कर्मान्तरत्वम्। यद्यपि सामा-

न्तरमेव व्यवच्छेत्तव्यम्, तथाऽपि वैकल्पिकयोरथन्तर-बृहतोर्विरोधिनोः परस्पर-व्यवच्छेदेनैव विशेषणत्वम्। नाविरोधिनां सामान्तराणां व्यवच्छेदेन। यथा-नीलोत्पलमिति पीतादीनामेव व्यवच्छेदः, न तु दैर्घ्यादीनाम्।

न च रथन्तरस्य सामान्तरापेक्षत्वम्, अनपेक्षस्यैव पृष्ठस्तोत्रसाधनत्वेन ज्योतिष्टोमान्वयात्। तेन यद्यपीह रथन्तरविशिष्टः क्रतुरिह निमित्तम्, तथाऽपि प्रकृतस्यैवाभिधानम्।

अथवा क्रतुविशिष्टं रथन्तरमिह निमित्तम्, अनित्यत्वात्। नित्यस्तु क्रतुर्न निमित्तं भवितुमर्हति। तेन यद्यपि बहुव्रीहिणा रथन्तरविशिष्टः क्रतुरेवाभिधीयते, तथाऽपि 'दध्ना जुहोती'तिवद्विशेषणपरत्वात् तस्यैव निमित्तत्वं प्रथमप्रतीतं रथन्तर-मुल्लङ्घ्य यदिशब्दोपक्रान्तनिमित्तप्रतीतिर्न यावत्क्रतुं गच्छतीति, रथन्तरमेव निमित्तम्, तच्च ज्योतिष्टोमेऽप्यस्ति। तस्मान्न कर्मान्तरम्।

इति प्रथमं रथन्तराधिकरणम्।

---

अथावेष्टयधिकरणम् ॥ २ ॥

अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते ॥ ३ ॥

राजसूये राजकर्तृके अवेष्टिर्नामेष्टिः समाम्नाता 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणे' तै. सं. १-८-१९ त्यादिका। तां प्रकृत्योच्यते-'यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेत्। यदि राजन्यः, ऐन्द्रम्, यदि वैश्यः, वैश्वदेवमि' 'मै.सं.४-४-९ ति। तत्र संशयः-किम् ब्राह्मणादीनामवेष्टौ प्राप्तानां मध्ये निधानविशेषं प्रति निमित्तार्थानि श्रवणानि ? उताप्राप्तानां प्रापकाणी ? ति। तदर्थमिदं विचार्यते—किं राजसूये त्रयाणामपि ब्राह्मणादीनामधिकारः ? उत क्षत्रियस्यैवे ? ति। तदर्थमपि—किं राजसूयाधिकार-विधिगतो राजशब्दस्त्रयाणामपि वाचकः? किम्वा क्षत्रियस्यैवे ? ति। ततोऽपि किं राजशब्दो राज्ययोगनिमित्त ? उत क्षत्रियत्वजातिनिमित्त इति विचारयितव्यम्। यदि राज्ययोगनिमित्तः, ततस्तद्योगिनां त्रयाणामपि अधिकारवाक्यस्य राजोपप-दोपादानतः प्राप्तेर्निमित्तार्थानि ब्राह्मणादीनां श्रवणानि। अथ जातिर्निमित्तः, ततः अतज्जातीययोर्वैश्यब्राह्मणयोराजोपपदवशेनार्थन्निवृत्तेरप्राप्तानां ब्राह्मणादीनां प्रापकाणि।

तत्र—राज्ययोगनिमित्तोऽयमार्यावर्तप्रसिद्धितः ।
सर्वलोकप्रसिद्धत्वादविगानाच्च गम्यते ॥ ५५ ॥
क्षत्रियत्वनिमित्तत्वमनार्येष्ववगम्यते ।
द्रविडेषु विगीतं च तदन्येष्वप्रसिद्धितः ॥ ५६ ॥

तेन राज्ययोगाद्राजानस्त्रयोऽपि भवन्तीति। राज्यपदं तु रूढ्या जनपदपर रक्षणे वर्तते, न राजयोगमपेक्षते।

ननु राजयोगाद्राज्यमभियुक्ताः स्मरन्ति 'तस्य कर्मणी'त्यधिकृत्य 'पत्यन्तपुरोहितादिभ्यो यगि' पा. सू. ति वचनाद्राजशब्दस्य तत्र पाठादाचाराच्च स्मृतेर्बलीयस्त्वं स्थितम्। उच्यते। लोकप्रयोग एव शब्दार्थावधारणे प्रमाणम्। स्मृतेरपि सः एव मूलम्। नान्यदस्ति, प्रयोगाच्च राज्यशब्दस्यैव स्वातन्त्र्यम्, तन्निमित्तत्वं च राजशब्दस्यावगम्यते, ततस्तदनुसारेण स्मरणं साधुशब्दविभागमात्रपरं व्याख्येयम्। अतस्त्रयाणामपि राजपदाभिधेयत्वेन राजसूये प्राप्तानां निमित्तार्थानि श्रवणानि।

यदिशब्दसामर्थ्यादप्येवमेव। यदिशब्दो हि राजशब्दस्य राज्ययोगनिमित्तत्वे प्रमाणम्। अन्यथा प्राप्त्यभावाद्यदिशब्दोऽनुपपन्नः स्यात्, वैदिकश्च निर्देशः स्मृतेरपि बलीयान्। तस्मान्निमित्तार्थानीति प्राप्ते—

ब्रूमः—न तावद्वैदिकनिर्देशादत्र निर्णयः शक्यते कर्तुम्। अन्यथाऽपि तत्सद्भावात्।'राजानमभिषिञ्चेत्' इति ह्यभिषेकविधौ प्रागेव राज्ययोगाद्राजशब्दः क्षत्रियमात्रे वेदे प्रयुक्तः। तेन रूढमेव राजपदं निर्णीयते। यदिशब्दस्तु निपातत्वाद्यथाकथंचिन्नीयमानो न दुष्यति। स्मरणाच्च स्वतन्त्रमेव राजपदम्।

न च तस्य निर्मूलत्वम्, द्रविडप्रयोगस्य मूलस्य संभवात्। अतो नायथार्थत्वे स्मरणस्य प्रमाणमस्तीति। तेनैवाभियुक्तप्रणीतेनाचारस्य संभवाद्गौणभ्रान्त्यादिप्रयोगप्रसूतस्य बाधाद्राजयोगादेव राज्यशब्दः। स्वतन्त्रस्तु राजशब्दः क्षत्रियवचन इति, ब्राह्मणादेरवेष्टौ प्राप्त्यभावात्प्रापकाणि वचनानि—इति।

इति द्वितीयमवेष्ट्यधिकरणम्।



आधानाधिकरणम् ॥ ३ ॥

## आधानेऽसर्वशेषत्वात् ॥ ४ ॥

इदमामनन्ति—'वसन्ते ब्राह्मणोऽग्नीनादधीत, १-१-२-६ ग्रीष्मे राजन्यः, सं १-१-२ शरदि वैश्यः' १-१-२-७ इति। तथा 'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यमि'ति। अत्रापि स एव विचारः। [किं ब्राह्मणादीनामाधानोपनयनयोः प्राप्तानां वसन्तादिकालं प्रति निमित्तार्थानि श्रवणानि? उत प्रापकाणी? ति।

तत्र विद्याग्निसाध्यत्वात् क्रतूनाम् तदुपाययोः।
प्राप्तत्वात् ब्राह्मणादीनां निमित्तार्था पुनःश्रुतिः ॥ ५७ ॥

'आहवनीये जुहोती'ति वाक्यादग्निसाध्यत्वं क्रतूनाम्, आहवनीयश्चाधानैकसाध्य इति, अर्थात् आधानाप्राप्तिः, ज्ञानपूर्वकत्वाच्चेतनप्रवृत्तेः, क्रतुज्ञानस्य च वेदाध्ययनसाध्यत्वात्, वेदाध्ययनस्य चापनयनमन्तरेणासंभवात्, उपनयनस्यापि क्रतुभिरेवार्थात्प्राप्तिः। नन्वलौकिकत्वादाहवनीयादीनां विधिमन्तरेणाधानसाध्यत्वानवगतेः, कथं क्रतुभिरर्थादाधानस्याक्षेपः। तवापि वा कथमाधानविधिषु वसन्तादिष्वाहवनीयादिपदाश्रवणादाधानसाध्यत्वावगमः स्यात्। ]

यदि 'नक्तं गार्हपत्यमादधाति, दिवाऽऽहवनीयम्, त्रिभिर्गार्हपत्यमादधाति, पञ्चभिराहवनीयमि'त्यादिगुणवाक्यालोचनेनैतज्ज्ञायते नूनमाधानाधीनमाहवनीयाभिधानीयकमित्युच्यत, तन्ममापि तुल्यम्। अतोऽग्निविद्यासाध्यैः क्रतुभिस्तदुपायभूतयोरुपनयनाधानयोराक्षेपतः प्राप्तिः।

अथवा 'य एवं विद्वानग्निमाधत्त' इति सामान्यतः सर्ववर्णानामाधानस्य विधायकं गुणानपहृतशक्तिकमस्ति वचनम्, यस्मिन् गुणापहृतविधिशक्तयः वसन्तादिविधयो ब्राह्मणादिनिमित्तं कालमात्रं विदधति। तस्मान्निमित्तार्थानि श्रवणानीति प्राप्ते—

ब्रूमः—न तावत्क्रतुसामर्थ्यात्प्राप्तिरैकान्तिकी तयोः।
सामान्यवचनं यत् तद्वर्तमानापदेशकम् ॥ ५८ ॥

वसन्तादिवाक्येषु तावद्यदिशब्दाद्यभावाद्वाक्यान्तरविहिताधानोपनयनविपरिवृत्त्यभावाच्च क्रियाविधिरेव प्रतीयते। यदि सामान्यतः प्राप्तिः स्यात्, तदा बलान्निमित्तार्थता स्यात्, न त्वस्ति प्राप्तिः। क्रतुविधयस्तावदग्निविद्यामात्र-

साध्याः, अग्नयस्तु यद्यप्याधानसाध्याः, तथाऽपि न तेनैव सर्वैर्निष्पाद्याः। अन्येन निष्पादितानामन्येन क्रयादिभिरपि प्राप्तिसंभवात्।

तथा विद्याऽपि पुस्तकानिरीक्षणाद्युपायसंभवेन नैकान्तत उपनयनमाक्षिपति। तत्रास्ति विधेरवकाशः, सामान्यवचनन्तु वर्तमानापदेश सरूपम् न वसन्तादियुक्ते प्रत्यक्षविधौ सति क्लेशेन विधित्वमापादयितव्यम्। तस्मात्प्रापकाणि वचनान्याधानोपनयनयोः।

इति तृतीयमाधानाधिकरणम्।

---

अथ दाक्षायणाधिकरणम् ॥ ४ ॥

**अयनेषु चोदनान्तरं संज्ञोपबन्धनात् ॥५॥ अगुणा च कर्मचोदना ॥६॥ समाप्तं च फले वाक्यम् ॥७॥ विकारो वा प्रकरणात् ॥८॥ लिङ्गदर्शनाच्च ॥९॥ गुणात्संज्ञोपबन्धः ॥१०॥ समाप्तिरविशिष्टा ॥११॥**

दर्शपूर्णमासप्रकरणे श्रूयते 'दाक्षायणयज्ञेन स्वर्गकामो यजेत' तै.सं.२-५ ५-४ तथा'साकंप्रस्थाप्यीयेन यजेत पशुकामः' तै.सं. २-५-४ इति। तत्र विचारः—किं कर्मान्तरविधिः, उत दर्शपूर्णमासयोरेव गुणात्फलमि? ति। तदर्थं च किं दाक्षायणादिशब्दो गुणविधिः, कर्मनामधेयमिति विचारः। तत्रैवंविधसंज्ञायुक्तस्य लोके गुणास्याप्रसिद्धत्वात् उद्भिदादिवच्च सामानाधिकरण्येन नामधेयत्वम्, तच्च भेदकं ज्योतिरादिवत्। अपि चास्य नामत्वेनाविधेयत्वात् गुणान्तरस्याविधेस्याभावात्फलस्य चाविधेयत्वात्कर्मैव विधेयमिति, अभ्यासादपि भेद इति प्राप्ते—

ब्रूमः—स्यादेवं नामधेयत्वे गुणस्त्वत्र विधीयते।
फलाय साकं प्रस्थानमावृत्तिश्चेत्यभिन्नता ॥ ५९ ॥

नामत्वे संज्ञालक्षणः, अभ्यासलक्षणो वा कर्मभेदः स्यात्। गुणविधिस्त्वयम्। यद्यपि न लोकसिद्धो गुणः, तथाऽपि वाक्यशेषाद्, अवयवव्युत्पत्त्या वाऽऽवृत्ति—सहप्रस्थानलक्षणगुणवचनत्वमनयोरवगम्यते। अतो गुणावप्राप्तावश्यं विधातव्यौ, यागस्तु प्रकृत इति तदाश्रयमेव गुणमात्रं फलाय विधीयते दध्यादिवत्। यथैव दध्यादेरर्थान्तरेऽत्यन्तरूढत्वान्न नामधेयत्वम्, एवं दाक्षा-

यणादिशब्दानाम्, 'द्वे द्वे पौर्णमास्यावि'त्यादिवाक्यशेषदर्शनेन दार्शपौर्णमासिक-गुणवचनत्वावगमात्तद्वशेन च धातुपारार्थ्यादेराश्रयणीयत्वात्, नोद्भिदादि-वत्कर्मान्तरवचनत्वं सम्भवतीत्यकर्मभेदः।

इति चतुर्थं दाक्षायणाधिकरणम्।

ईषालम्भाधिकरणम् ॥ ५ ॥

**संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात् ॥ १२ ॥ यावदुक्तं वा कर्मणः श्रुतिमूलत्वात् ॥ १३ ॥ यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्म-सम्बन्धात् ॥ १४ ॥ लिङ्गदर्शनाच्च ॥ १५ ॥**

'वायव्यं श्येतमालभेत भूतिकामः 'तै. सं.२.१.१.१' सौर्यं चरुं निर्वपेद्ब्रह्म-वर्चसकामः' तै. सं. २.३.२.३ इत्यनारभ्याम्नातम्। तथा दर्शपूर्णमासप्रकरणे 'ईषामालभेत' चतुरो मुष्टीन्निर्वपति' इति। तत्र संदेहः किं दार्शपूर्णमासि-कयोरीषालम्भ 'मुष्टिनिर्वापयोः श्वेतचरुगुणौ विधीयेते ? किम्वा कर्मान्तरे यावदुक्तो निर्वपणमालम्भनं च। गुण फलविशिष्टे ? किम्वा यागविधानमितरच्चे-तरच्चेति। तत्र विधिगौरवान्न कर्मान्तरविधानम्। यागस्त्वश्रुतो दूरभ्रष्टः। न चासति यागे देवतात्वं वाय्वादीनां संभवति तेन सर्ववृक्षाणां वायुसंबन्धात् कथंचिदीषाया एव वायव्यमित्यनुवादः। सौर्यमिति चाग्नेयस्यैव बोधकः, तेजोदेवतासामान्यात्, अतो दार्शपौर्णमासिकयोरालम्भनिर्वापयोर्गुणविधी। यदालभेत, तच्छ्वेतमिति, यन्निर्वपेत्, तच्चरुमिति। चरुशब्दः स्थालीवचनः, सप्तम्यर्थे च द्वितीया, स्थाल्याम् निर्वपेदित्यर्थः। भूतिब्रह्मवर्चसकामशब्दौ सर्वकामप्राप्तानुवादाविति।

नैतद्युक्तम्। न हि फलपदयोर्नित्यवच्छ्रुतयोः संभवत्प्रयोजनयोश्च पाक्षि-कानुवादत्वम्, अनर्थक्यं च युक्तमङ्गीकर्तुम्। तस्माद्गुणफलविशिष्टं कर्मान्तरम् यावदुक्तं विधीयते। लोकेऽपि चालम्भादिसद्भावान्नैकान्ततो दार्शपौर्णमासि-कयोः प्रतीतिः, देवतापदं तु पूर्ववद्यथाकथंचिन्नेयम्। यागस्याश्रुतस्य विधाना-योगात्, तदभावे च देवतात्वासंभवात्, तस्माद्यावदुक्तकर्मान्तरविधिरिति प्राप्ते—

ब्रूमः – देवतापदवैयर्थ्यं यावदुक्तविधौ भवेत्।
तेन तत्कल्पितो यागो विधेयोऽत्राश्रुतोऽपि सन् ॥ ६० ॥

न हि यदेव प्रत्यक्षपठितम्, तदेवैकं शाब्दम्, सामर्थ्यमपि हि शब्दैकदेश इत्युक्तम्। अतो द्रव्यदेवतासंबन्धकल्पितो यागो विधीयते। तदयं वाक्यार्थः श्वेतमालभेत वायुदेवत्यं कुर्यात् भूतिकामः—इति। तत्र चालभेतेत्यनुवादः चोदकादर्थाद् वा प्राप्तत्वाद्वायव्यं श्वेतं कुर्यादित्येतावद्विधीयते। न चान्तरेण यागं वायव्यं कर्तुं शक्यमिति याग एवायमेवं विहितो भवति। तस्माद्याग एव गुणफलविशिष्टो विधीयते।

इति पञ्चममेषालम्भाधिकरणम्।



अथ वत्सालम्भाधिकरणम्॥ ६॥

विशये प्रायदर्शनात्॥ १६॥ अर्थवादोपपत्तेश्च॥ १७॥

अग्निहोत्रदोहाधिकारे 'वत्समालभेते' मै. सं-१-५-९ ति श्रुतम्। तत्रासत्यपि देवतासंयोगे प्राणिद्रव्यकालम्भत्वसामान्यादत्रापि यागविधिं मन्यते। तस्योत्तरम्, आलम्भो नाम स्पर्शमात्रम्। न तस्य यागमन्तरेणानुपपत्तिः, लोकेऽपि दृष्टत्वात्, अतोऽत्रालम्भमात्रं वत्ससंस्कारो विधीयते।

इति षष्ठं वत्सालम्भाधिकरणम्।



नैवारचरूपधानार्थताधिकरणम्॥ ७॥

संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात्॥ १८॥

'चरुमुपदधाति, बृहस्पतेर्वा एतदन्नम्, यन्नीवाराः' इत्यत्रापि किं चरोर्यावदुक्तमुपधानमात्रम्, उत याग इति? संशयः। तत्र बृहस्पतेर्वा एतदि'ति कथं बृहस्पतेः स्यादसौ देवता न स्यात्, संम्बन्धान्तराभावात्। तैतिरीयकाणां तु 'बार्हस्पत्योपवती'ति तद्धितेनैव वाक्यशेषे देवतात्वमुक्तम्। वाक्यशेषावगतसंबन्धबलेन यागार्थता, चरोरुपधानं तु यागोपयुक्तस्य प्रतिपत्तिः स्विष्टकृदादिप्रत्याम्नानेनेति प्राप्ते—

ब्रूमः—विध्युद्देशापेक्षितो विशेषो वाक्यशेषाद् गृह्यते, नानपेक्षितः। चरुश्च चोपधानेनैव स्थण्डिलनिर्वृत्त्यौपयिकेन निराकाङ्क्षो नार्थान्तरमपेक्षते।

नचोपधानस्य यागवद्देवतापेक्षा, यतो वाक्यशेषावगता देवता गृह्येत, तैत्तिरीयकवाक्यमपि 'बार्हस्पत्यो भवती' तै॰ब्रा-१-३-७ ति वर्तमानापदेशकम्, न देवताविधिपरम्, अतोऽर्थवादमात्रं, वाक्यशेष इत, त्युपधानमेव चरोः, न यागः।

इति सप्तमं चरूपधानाधिकरणम्।

---

पात्नीवताधिकरणम् ॥ ८ ॥

## पात्नीवते तु पूर्ववत्त्वादवच्छेदः ॥ १९ ॥

'त्वाष्ट्रं पात्नीवतमालभेते'ति प्रकृत्य 'पर्यग्निकृतं पात्नीवतमुत्सृजती तै-सं-६-६-६ ति श्रुतम्। तत्र संशयः—किं पर्यग्निकरणान्ताङ्गरीतिगुणविधिः? उत तत्संबद्धयागविधिः? इति। तदर्थं च किं पर्यग्निकृतं पात्नीवतं कुर्यादित्यन्वयः? उत पर्यग्निकृतमुत्सृजतीति। तत्राऽव्यवहितसंबन्धलाभात् पर्यग्निकृतं पात्नीवतं कुर्यादित्यन्वयः, न तु पर्यग्निकृतमुत्सृजतीति, व्यवहितकल्पनादोषात्।

न च पात्नीवतशब्दात्पूर्वयागप्रत्यभिज्ञा। त्वष्टा हि पत्नीवांस्तत्र देवता, न केवलः पत्नीवान्। अतो यथाऽऽग्नेयमित्यग्नीषोमीयादेरग्रहणम्, तथाऽत्रापि।

न च पूर्वत्र विधेयः कश्चिदिह गुणः संभवति। न तावत्पर्यग्निकरणम्, चोदकप्राप्तत्वात्। नोत्सर्गः, तस्योत्पत्तिवाक्यसिद्धत्वात्, पर्यग्निकरणविशिष्टपात्नीवतोद्देशेनोत्सर्गविधौ विशिष्टानुवादाद्वाक्यभेदः। न च पर्यग्निकृत्वोत्सृजतीति क्रमः, तस्यापि चोदकप्राप्तेः। न च पर्यग्निकरणान्ताङ्गकलापः, तस्यापि सिद्धत्वात्। नोत्तराङ्गपरिसंख्या, त्रिदोषत्वात्। तस्मात्कर्मान्तरमिति प्राप्ते—

ब्रूमः पात्नीवतशब्दस्तावन्मनोतास्थाग्निशब्दवच्छक्नोति पूर्वयागमुपस्थापयितुम्। न चात्राग्नेयवदसामर्थ्यम्, उत्पत्तिवाक्ये हि 'त्वाष्ट्रं पात्नीवतमि'ति हि प्रत्येकमुत्पन्नस्तद्धितः प्रत्येकमेव देवतात्वङ्गमयति, न त्वग्नीषोमीयादिवत्समासादुत्पन्नस्तद्धितः, येन व्यासक्तं सापेक्षं देवतात्वं स्यात्।

न च प्रत्येकमपि देवतात्वे विकल्पः, युगपदेकेन वाक्येन विधानात्। डित्थडवित्थयोर्माता डित्थमातेति शक्यते वक्तुं यथा, एवं पात्नीवतमपि। सति चैवं प्रकृतप्रत्यभिज्ञाने न कर्मान्तरत्वं युक्तम्, अत उत्सृजतिना पूर्वयागमनूद्य पर्यग्निकरणान्ताङ्गकलापविधिः। यद्यपि चासौ चोदकात्सिद्ध्यति, तथाऽपि ततः प्रागेव विधीयते। तेन च क्लृप्तोपकारेण निराकाङ्क्षस्त्वाष्ट्रप्रयोगवचनो गृहमेधीयवन्नातिदेशमपेक्षते। शक्नोति च पर्यग्निकृतशब्दः प्राकृतपर्यग्नि-

करणावस्थावचनस्तदन्ताङ्गकलापं गमयितुम्। न हि पूर्वाङ्गेष्वकृतेष्वियमवस्था भवति पर्यग्निकृतोत्सर्गानुवादेन चाङ्गरीतिविधौ पात्नीवतशब्दो नित्यानुवाद इति, न विशिष्टानुवाददोषः।

इति अष्टमं पात्नीवताधिकरणम्।

अंश्वदाभ्याधिकरणम् ॥ ९ ॥

अद्रव्यत्वात्केवले कर्मशेषः स्यात् ॥ २० ॥

एष ह वै हविषा हविर्यजते, योऽदाभ्यं गृहीत्वा सोमाय यजते, परा वा एतस्यायुः प्राण एति, योंऽशुं गृह्णाती तै-सं-३-३-४-२ त्यनारभ्य श्रुतम्। तत्र विचारः- किम् ज्योतिष्टोमे ग्रहणविधिः ? उत यागान्तरविधिः-इति। तदर्थं च किमंशुम्, अदाभ्यमिति यागनामनी ? ग्रहणनामनी वे ? ति। तत्र ग्रहणस्य संस्कारत्वादवघातादिवन्नामधेयानर्हत्वाद्यागनामत्वम् 'अदाभ्यं यजत' इति। नाम च प्रकृतादपि भेदकमित्युक्तम्, किमुताप्रकृतादेव ज्योतिष्टोमात्, अंशौ तु यद्यपि यजिर्न श्रुतः, तथाऽपि संज्ञयैव तावत्कर्मान्तरं कल्प्यते। तच्च गृह्णातिचोदनासामान्याज्ज्योतिष्टोमप्रकृतिकमिति, तदीयविध्यन्तप्राप्तैर्द्रव्यदेवतासंबन्धाद्यागो भविष्यति। तस्माद्यागान्तरे-इति—

उच्यते—संस्काराणां न नामानि वार्यन्ते राजशासनात्।
आनन्तर्यादतः स्यातां ग्रहयोरेव नामनी ॥ ६१ ॥
अंशौ तावद्यजिर्नैव श्रुतस्तन्नामता कुतः।
अदाभ्ये श्रूयमाणाऽपि व्यवधानान्न नामभाक् ॥ ६२ ॥
तदिह ग्रहयोरेव भेदो नामवशाद्भवेत्।
न तु यागस्य, तेनात्र विधीयेते ग्रहावुभौ ॥ ६३ ॥
तयोर्गृह्णात्युपस्थानाज्ज्योतिष्टोमेन सङ्गतिः।
अथवा तैत्तिरीयाणामनयोर्विनियोजकम् ॥ ६४ ॥
अस्ति प्रकरणे वाक्यं तेन तादर्थ्यमेतयोः।
अदाभ्ये श्रूयमाणोऽपि गुणसंक्रान्तशक्तिना ॥ ६५ ॥
विधिना न विधातव्यो यागस्तेन न भिद्यते।
अंशौ त्वश्रुत एवेति विधेयौ केवलौ ग्रहौ ॥ ६६ ॥

इति नवममंश्वदाभ्याधिकरणम्।

## चयनाधिकरणम् ॥ १० ॥

**अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयेत ॥ २१ ॥ द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ॥ २२ ॥ तत्संयोगात्क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ॥ २३ ॥**

'य एवं विद्वानग्निं चिनुते' इति श्रुतम्। तथेमान्यपि वचनानि ''अथातोऽग्निमग्निष्टोमेनानुयजन्ति, तमुक्थ्येने'त्यादि। तत्र संशयः—किमयमग्निं चिनुते इति यागविधिः? उताग्निसंस्कारमात्रं चयनं स्वतन्त्रं विधीयते?। किं वा ज्योतिष्टोमादिषु गुणो विधीयते? इति। तदर्थं च किमग्निशब्दो यागनामधेयम्? उत द्रव्यवचन? इति। तत्राश्वदाभ्यवत्प्रकरणे पुनः संकीर्तनाभावान्न क्रतुसंयोगः, तदभावे च संस्कारमात्रं स्वतन्त्रमनर्थकम्। अ'तो ऽग्निं कुर्या'दिति यागविधिः, चिनोति'श्चेष्टकाभिरग्निं चिनुत' इति वाक्यप्राप्तानुवादो निर्वपतिवत्। कथं पुनरसति यजिश्रवणे यागविधानम्?। उच्यते—अग्निं कुर्यादिति तावत्संज्ञयैव कर्मान्तरेऽवधारिते, 'अथातोऽग्निमग्निष्टोमेनाऽनुयजन्तीति यदग्निं यजति, तदग्निष्टोमेनेति संस्थाविधिपरे वाक्ये यजिनाऽनुवादादुत्पत्तौ यागवचनोऽग्निशब्द इति गम्यते। यद्यपि नायं संस्थाविधिः, किं त्वाग्नष्टोमसंस्थेन यागेनाग्निमनुयजन्तीति, तथाऽपि अप्यग्नेर्यागत्वम्। न ह्यन्यथा तमन्वन्यैर्यष्टुं शक्यते। यथा देवदत्तमनुगच्छति-यज्ञदत्त इत्युक्ते, देवदत्तोऽपि गच्छतीति प्रतीयते, अन्यथाऽनुगमनानुपपत्तेः। एवमनुयजनवशादेवाग्नेर्यागत्वं सिद्धम्। तस्माद्यागविधानं स्यादिति प्राप्ते—

ब्रूमः – अग्नेश्चयनसंस्कारमात्रमत्र विधीयते।
तस्याथाऽतोऽग्निमित्यादिवाक्यैः स्यात्क्रतुसङ्गतिः ॥ ६७ ॥
वह्नौ रूढोऽग्निशब्दोऽयं न हि यागस्य वाचकः ॥ ६७½ ॥

न ह्यग्निशब्दोऽत्यन्तरूढत्वात्, वाक्यभेद–तत्प्रख्य–तद्व्यपदेशविधुरत्वाच्च यागनामत्वं प्रतिपद्यते। तेन ज्वलनस्यैवायं चयनसंस्कारो विधीयते। तस्य संस्कारस्य क्रतुसंबन्धपराण्यथातोऽग्निमग्निष्टोमेनानुयजन्ती'त्यादीनि। 'अथातः अग्निमि'त्यादिवाक्येष्वग्निशब्दःप्रकरणाच्चयनसंस्कृते अग्नौ वर्तते, अनुशब्दश्चयनापेक्षया पश्चाद्भावमग्निष्टोमादीनामाह। तेन चयनसंस्कृतेऽग्न.वग्निष्टोमादिभिर्यजेतेत्यर्थः। न त्वत्राप्यग्निशब्दो यजिसमानाधिकरणः, येन नाम स्यात्।

न चावश्यं तुल्यरूपाणामेव पौर्वापर्यम्। पाकसनुभुङ्क्ते इत्यादिषु विजातीयानामपि दर्शनात्, तस्मादपि ज्योतिष्टोमादिषु गुणविधिः।

इति दशमं चयनाधिकरणम्।

---

प्रकरणान्तराधिकरणम् ॥ ११ ॥

प्रकरणान्तरे प्रयोजनान्यत्वम् ॥ २४ ॥

गुणभेदप्रसङ्गे समाप्ते, अधुना प्रकरणान्तरेण भेदोऽभिधीयते। कुण्डपायिनामयने 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वति, मासं दर्शपूर्णमासाभ्यां यजन्ते' तां. ब्रा. २५-४-१ इत्यादि श्रुतम्। तत्र संशयः—किं नैयामिकेऽग्निहोत्रादौ मासो विधीयते? किम्वा कर्मान्तरमिति। तदर्थं किमनुपादेयगुणसंबन्धानुगृहीतोऽसन्निधिर्भेदकारणं संभवति उत ने? ति।

तत्राग्निहोत्रशब्देन तत्कर्मोपस्थितं यतः।
तस्मात्तत्रैव मासोऽयमप्राप्तो हि विधीयते ॥ ६८ ॥

उपादेयम्, अनुपादेयं वा यदप्राप्तम्, तदेव विधेयम्, मासश्च तथा। यच्च प्राप्तम्, तदनुवाद्यम्, अग्निहोत्रशब्दश्च स्वाभिधेयं कर्मोपस्थापयति। तच्च प्राप्तं न विधेयम्। अतो यद्यपि स्वभावतोऽनुपादेयं मासमुद्दिश्य कर्मोपादीयते। तथाऽपि मास एव विधेयः, न कर्म। विधिनिबन्धनश्च भेदः, नोपादाननिबन्धनः, तस्मादुपादेयमपि कर्माविधीयमानं न भिद्यते इति प्राप्ते—

अभिधीयते—'प्रकरणान्तरे प्रयोजनान्यत्वमि'ति। किमिदं प्रकरणान्तरम्? इति। अप्रकृताभिधानमित्यर्थः कथमप्रकृताभिधानम्? उच्यतेऽन्उपसद्भिश्चरित्वेतिवचनात्. न हि नैयमिकस्योपसदः सन्ति, तत्र ताश्च मासश्चेत्येको गुणः प्राप्ते कर्मणि न शक्यते विधातुमिति कर्मान्तरम्। अत्र चाप्रकृतभिधानादेव प्रकरणान्तरपर्यायाद्भेदः। अप्रकृताभिधानं तु गुणादिति, न गुणाद्भेदः।

यद्येवम्, 'वाजिभ्यो वाजिनमि' त्यत्राप्यप्रकृताभिधानादेव प्रकरणान्तरपर्यायाद्भेदः।

अप्रकृताभिधानं तु पूर्वकर्मसंयोगिनो गुणादिति, तत्रापि प्रकरणान्तरमेव भेदकं स्यात्, न गुणः। तथा शब्दान्तराभ्याससंज्ञाभिप्यप्रकृतविषयतैव विधेः बोध्यते, न साक्षाद्भेदः। स तु विधेरप्रकृतविषयत्वात्सिद्ध्यतीति, सर्वत्र प्रकरणान्तर-

मेव भेदकं स्यात्, न शब्दान्तरादयः। अथैतेषामेतदेव भेदकत्वं यद्विधेरप्रकृतविषयत्वापादनम्। एवं सत्यत्रापि गुणादेव तत्सिद्धेः, स एव भेदकः स्यादिति, न प्रकरणान्तरं शब्दान्तरादिभिः सह संख्यातुं युज्येत। तद्धि साक्षाद्भेदकं, सर्वत्र, अन्ये तु तद्धेतव इत्यतुल्यत्वात्कथं सह गणनम्?

अपि च 'मासं दर्शपूर्णमासाभ्यां यजन्ते' इत्यत्रानेकगुणाभावान्नाप्रकृताभिधानं सिध्येत्। तस्मान्नाप्रकृताभिधानं प्रकरणान्तरम्? किन्त्वन्यदेव गुणादिवदप्रकृताभिधानहेतुभूतमिति वक्तव्यम्। किं पुनस्तत्? पूर्वकर्मासन्निधानम्? कथम् पुनस्तेन भेदसिद्धिः! उच्यते—

कर्मासन्निहितं नैव बुद्धौ विपरिवर्तते।
शब्दात्तु तदुपस्थानमुपादेये गुणे भवेत्॥ ६९॥

असन्निहितं तावत्कर्म न बुद्धौ विपरिवर्तते, तादृशमपि कथंचिज्जुहोतीति प्राप्तवन्निर्देशेन दूरस्थमपि उपस्थाप्येत, यदि विधित्सितो गुण उपादेयः स्यात् आहवनीयादिवत्। तत्र हीदृशी वचनव्यक्तिः शक्यते निदर्शयितुम् यज्जुहोति—तदाहवनीये—इति।

यत्र वाक्येऽनुपादेयो देशकालादिको गुणः।
श्रुतो न तत्र दूरस्थकर्मोपस्थानसंभवः॥ ७०॥

यत्कुर्यादित्येवं प्राप्तवन्निर्देशेन दूरस्थकर्मोपस्थापनं स्यात्। तथा च तस्योद्देशान्मासस्तत्रोपादेयः।

न च होमानुरोधेन मासः संपादयितुं शक्यते। तेन-एषा वचनव्यक्तियोमासः, तत्र होमं कुर्यादिति। तेन शब्दस्वरसतः प्राप्तोपस्थानानवगमात्सन्निधानाभावाच्च, क्रियैव विधातव्येति कर्मभेदः।

एवं 'सरस्वत्या दक्षिणेन तीरेणाग्नेयोऽष्टाकपालः, 'सत्रायाऽवगूर्य विश्वजिता यजेते'ति देश-निमित्तयोरपि द्रष्टव्यम्।

ननु नामधेयेन भवति पूर्वकर्मोपस्थापनम्? भवतु धात्वर्थस्य, भावना तु तेनानुपस्थानाद्भिद्यते एव। धात्वर्थोऽपि यादृशो धातुनाऽख्यातवर्तिनापूर्वापरीभूतो विधेरुपादीयते, न तादृशो नाम्ना उपस्थाप्यत इति, तस्यापि युक्तोभेदः, तदभेदेऽपि तावद्भावना भिन्नेति सिद्धम्।

इति एकादशं प्रकरणान्तराधिकरणम्।



## फल-संस्कार्याधिकरणम् ॥ १२ ॥

### फलं चाकर्मसन्निधौ ॥ २५ ॥

'आग्नेयमष्टाकपालं निर्वपेद् रुक्कामः' तै० सं० २-३-३ इत्यनारभ्य श्रुतम्। तथा 'त्रैधातव्या दीक्षणीये' त्यश्वमेधे। तत्रापि पूर्ववत्संशयः-किं प्रकृते आग्नेये फलविधिः, काम्ये च त्रैधातवीये कर्मणि दीक्षणीयाकार्ययजमान-संस्कारविधिः ! उत कर्मान्तरविधिः ! इति। तदिह यः पूर्वत्र प्रकरणान्तरग्रहणात्त-देव भेदकम्, नासन्निधानमात्रमिति मन्यते, यो वा फलस्योपादेयत्वं मन्यते, शक्यते तद्दर्शपूर्णमासस्थेनापि कामयितुम्, न मासादिवदशक्यसंपादनमिति। तन्निराकरणार्थमिदमधिकरणम्।

पूर्वत्राप्यविपरिवृत्तिकारणत्वादसन्निधानमेव कारणम्, न प्रकरणान्तरम्। सदपि तन्न व्याप्रियते। तच्चासन्निधानमत्राप्यविशिष्टम्, यद्यपि च फलं शक्यते कामयितुम्, तथाऽपि स्वरसादेव तत्काममुद्दिश्य साधनमेवोपादेयं न फलं फलत्व-व्याघाताद्विधीयमानं हि तदङ्गमेव स्यात्, एवं संस्कारेऽपि द्रष्टव्यम्, न चाग्नेये अग्निहोत्रवन्नामधेयत्वमस्ति येनाभेदाशङ्काऽपि तावत्स्यात्, तस्मादत्रापि कर्मभेदः।

इति द्वादशं फल-संस्कार्याधिकरणम्।



## प्रकरणान्तरप्रत्युदाहरणाधिकरणम् ॥ १३ ॥

### सन्निधौ त्वविभागात्फलार्थेन पुनः श्रुतिः ॥ २६ ॥

सर्वेषामेव देश-काल-निमित्त-फल-संस्कार्याणामसन्निधिप्रत्युदाहरणार्थ-मारभ्यते। 'समे दर्शपूर्णमासाभ्यां यजेत पौर्णमास्या यजेत, यावज्जीवं दर्शपूर्ण-मासाभ्यां यजेत, एतयाऽन्नाद्यकमं याजयेत्, शेषात्स्विष्टकृते समवद्यती'ति। तत्र संशयः-कर्मसन्निधौ किं देशादिसंबन्धे कर्मभेदो भवति ! उत प्रकृतमेव कर्म देशादिषु विधीयते ! इति विचारः। किं प्राप्तम्।

अत्रापि तावद्देशादेरुद्देशात्कर्म तं प्रति।
उपादेयं तथा च स्याद्विधेयं तेन भिद्यते ॥ ७१ ॥

विधानमेवोपादानम्, नान्यत्। अत्र च देशादेरुद्देश्यत्वात्कर्मावश्यमुपादेयम्, अतश्च विधेयत्वापत्तेर्विहितस्य विधानायोगात्सत्यपि सन्निधौ कर्मान्तरमिति प्राप्ते—

ब्रूमः—सन्निधाववविभक्तत्वं कर्मणः प्रत्यभिज्ञया।
गम्यते तेन तस्यैव फलाद्यर्था पुनः श्रुतिः॥ ७२॥

निर्देशगतस्वातन्त्र्य—पारतन्त्र्यात्मके उद्देशोपादाने, प्राप्त्यप्राप्तिवशौ तु विध्यनुवादौ। अतस्तयोः ताभ्यां भेदादुपादेयमपि कर्म देशकालयोः पूर्वं प्राप्तम् तद्रूपमेव प्रत्यभिज्ञायत इत्यनुवाद्यम्। तस्य तूद्देश्याभ्यामपि देशकालभ्याम् संबन्धमात्रमप्राप्तमिति, तन्मात्रं विधीयत इति कर्मभेदः स्यात्।

अस्तु तावद्देश—कालयोर्विधेयत्वात्कर्मणोऽनुवादः। निमित्त—'फल-संस्कार्याणां त्वविधेयत्वात्कर्मैव विधेयमिति भेदः स्यात्।

सत्यं कर्म विधातव्यं तथाऽपि तु न भिद्यते।
उत्पत्तिविधिभेदे हि भेदो नास्ति च सोऽत्र नः॥ ७३॥

कर्मस्वरूपगताप्रवृत्तप्रवर्तनमुत्पत्तिः। न चैकस्मिन्कर्मणि उभाभ्यामप्रवृत्तप्रवर्तनं संभवतीति, कर्मभेदः स्यात्। संभवति चान्येनोत्पादितस्याऽन्येन निमित्तादिसंबन्धमात्रप्रतिपादनम्, कर्तव्यतामात्रं ह्युत्पत्तिवाक्यादवगतम्। तत्र किं कस्मिन् निमित्ते कस्मै वा कामायेति विशेषापेक्षायामुत्पन्नस्यैव कर्मणः नैमित्तिकी कर्त्तव्यता निमित्तवाक्ये प्रतिपाद्यते, फलविनियोगश्च फलवाक्ये, संस्कार्यविनियोगश्च तद्वाक्य इत्यकर्मभेदः।

इति त्रयोदशं प्रकरणान्तरप्रत्युदाहरणाधिकरणम्।

---

आग्नेयद्विरुक्तेः स्तुत्यर्थताधिकरणम्॥ १४॥

**आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत॥ २७॥ अविभागात्तु कर्मणो द्विरुक्तेन विधीयते॥२८॥ अन्यार्था वा पुनः श्रुतिः॥२९॥**

दर्शपूर्णमासयोः "यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतः भवती'ति कालद्वययुक्तमाग्नेयस्यैकं वचनम्, अपरं तु 'यदाग्नेयोऽष्टाकपालः अमावास्यायां भवती' त्येककालयुक्तम्। तत्र संशयः-किमुभयत्र विहितादाग्ने-

यात्कर्मान्तरमिदममावास्यायां विहितम्, उत तस्यैवानुवादः—इति। तत्राभ्यासात्कर्मान्तरम्। ननु तत्राविशेषाद्भेदः, न हि तत्रैवं शक्यं वक्तुम, एवमर्थेन पुनः श्रुतिरेवेति, विशेषाग्रहणात्सर्वे विधयः। इह त्वस्ति विशेषग्रहणं कालद्वययुक्तस्येतरा पुनः श्रुतिः संभवति। न च विपर्ययः, पौर्णमास्याधिक्यादिति।

नैवम्। न हि तत्राविशेषाद् भेदः। समिद्वाक्यस्य प्राथम्येन विशेषग्रहणाद्विधिपुनःश्रुतिबलात्तु तत्र भेदः। किञ्चात्रापि न विशेषग्रहणम्, किमुभयकालयुक्तेन विहितस्येतरोऽनुवादः, किं वा केवलामावास्यायुक्तेन विहितममावास्यायामाग्नेयमनूद्येतरेण केवलपौर्णमासीकालयुक्ताग्नेयविधिरिति तस्मात् कर्मान्तरमिति। प्राप्ते—

ब्रूमः—कर्मणः प्रत्यभिज्ञानादविभागः प्रतीयते।
ऐन्द्राग्नस्य प्रशंसार्था तस्यैवैषा पुनः श्रुतिः॥ ७४॥

आग्नेयद्विरुक्तेस्तुत्यर्थताधिकरणम्॥ १५॥

इति शास्त्रदीपिकायां द्वितीयस्याध्यायस्य तृतीयः पादः।

---

# अथ द्वितीयाध्यायस्य चतुर्थः पादः।

## यावज्जीवाधिकरणम्॥ १॥

यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात्॥ २॥ कर्तुर्वा श्रुतिसंयोगात्॥ २॥ लिङ्गदर्शनाच्च कर्मधर्मे हि प्रक्रमेण नियम्येत; तत्र-अनर्थकमन्यत् स्यात्॥३॥ व्यपवर्गञ्च दर्शयति; कालश्चेत्, कर्मभेदः स्यात्॥ ४॥ अनित्यत्वात्तु नैवं स्यात्॥ ५॥ विरोधश्चापि पूर्ववत्॥६॥ कर्तुस्तु नियमात्, कालशास्त्रं निमित्तं स्यात्॥ ७॥

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते' ति काम्यं प्रयोगं विधाय, आम्नायते-'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते' ति। तत्र संशयः—योऽयं यावज्जीविको धर्मो विधीयत इति, स किमभ्यासः कर्मार्थः? उत नियमः पुरुषार्थः? इति। पूर्वपक्षे काम्यस्यैव प्रयोगस्याभ्यासविधिः, सिद्धान्ते प्रयोगान्तरं नित्यं विधीयते

इति, भेदप्रसङ्गात् प्रयोगभेदाभेदचिन्ता। तत्र कर्माङ्गविधौ कर्मकथंभावसंबन्धात्प्रकरणानुग्रहः, पुरुषार्थविधौ तु तदसम्बन्धात्प्रकरणबाधः स्यात्, अतः अभ्यासविधिः—यावज्जीवकालं यागमभ्यस्येदिति।

नैतदुक्तम्—यावज्जीवपदे काललक्षणैवं प्रसज्यते।
यजिना च तदभ्यासलक्षणा प्रक्रियावशात्॥ ७५॥

न हि प्रकरणवशेन श्रुतेर्लक्षणार्थता न्याय्या। त्वत्पक्षे च जीवनवाचिना तत्संबद्धः कालो लक्ष्यते, यजिना च यागाभ्यासः, न चैतन्न्याय्यम्। तस्माज्जीवने निमित्ते पुरुषस्य प्रत्यवायपरिहाराय दर्शपूर्णमासप्रयोगो विधीयते। जीवनं च यावद्विनिपातं नियतमिति, नियतनिमित्तत्वान्नियमोऽयं विधीयत इति पुरुषार्थः।

इति प्रथमं यावज्जीवाधिकरणम्।

शाखान्तराधिकरणम्॥ २॥

नाम-रूप-धर्मविशेष-पुनरुक्ति-निन्दा-अशक्तिसमाप्तिवचन-प्रायश्चित्तान्यार्थदर्शनात् शाखान्तरेषु कर्मभेदः स्यात् ॥८॥ एकं वा संयोगरूपचोदनाख्याविशेषात् ॥९॥ न नाम्ना स्यादचोदनाभिधानत्वात् ॥१०॥ सर्वेषां चैककर्म्यं स्यात् ॥११॥ कृतकं चाभिधानम् ॥१२॥ एकत्वेऽपि परम् ॥१३॥ विद्यायां धर्मशास्त्रम् ॥१४॥ आग्नेयवत्पुनर्वचनम् ॥१५॥ अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् ॥ १६ ॥ अर्थासन्निधेश्च ॥१७॥ न चैकं प्रति शिष्यते ॥ १८ ॥ समाप्तिवच्च संप्रेक्षा ॥ १९ ॥ एकत्वेऽपि पराणि निन्दा-शक्तिअसमाप्तिवचनानि ॥ २० ॥ प्रायश्चित्तम् निमित्तेन ॥ २१ ॥ प्रक्रमाद्वा नियोगेन ॥ २२ ॥ समाप्तिः पूर्ववत्त्वाद्यथाज्ञाते प्रतीयेत ॥ २३ ॥ लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना तस्माद् द्वादशाहस्याहारव्यपदेशः स्यात् ॥ २४ ॥ द्रव्ये चाचोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद्व्यवतिष्ठेत; तस्मान्नित्यानुवादः स्यात् ॥२५॥ विहितप्रतिषेधात् पक्षेऽतिरेकः स्यात् ॥२६॥ सारस्वते विप्रतिषेधाद्यदेति स्यात् ॥ २७ ॥ उपहव्येऽप्रतिप्रसवः ॥२८॥

**गुणार्था वा पुनः श्रुतिः ॥ २९ ॥ प्रत्ययश्चापि दर्शयति ॥ ३० ॥ अपि वा क्रमसंयोगाद्विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत ॥३१॥ विरोधिना त्वसंयोगादैककर्म्यं; तत्संयोगाद्विधीनां सर्वकर्मप्रत्ययः स्यात् ॥ ३२ ॥**

शाखान्तरेषु किमग्निहोत्रादि कर्म भिद्यते ? किं वा सर्वशाखास्वेकमेवेति ? विचारः। तत्राविशेषपुनःश्रुतिलक्षणादभ्यासाद्,दूरत्वलक्षणाच्च प्रकरणान्तराद्भेदः। तथा गुणादपि। क्वचि'दैन्द्राग्नमेकादशकपालं निर्वपेदि'ति श्रुतम्, 'क्वचिद्द्वादशकपालमि'ति। तत्रावश्यमन्यन्तरेण कर्मोत्पादयितव्यम्, येन चोत्पादितम्। तद्गतो गुणः उत्पत्तिशिष्टः, इतरस्तु तत्र निवेशमलभमानो वाजिनवत्कर्मान्तरं कल्पयतीति प्राप्ते—

ब्रूमः — विधेः कर्मार्थतामात्रं पुनः श्रुत्यादिभिर्भवेत्।
तावन्मात्रमिहापि स्यान्न तु भेदः प्रसिद्ध्यति ॥ ७६ ॥

पुनःश्रुत्या हि कर्म विधेयमित्येतावत्सिद्ध्यति। विधिवशात्तु भेदः, विहितस्य विधानायोगात्। एवमसन्निधावपि विपरिवृत्त्यभावात्कर्मविधानम्, विधानाच्च भेदः। तदिहापि कर्मविधिः पुनःश्रुत्यादिना सिद्ध्येत, न तत्र विधिवशाद्भेदसिद्धिः, विहितस्यापि पुरुषान्तरं प्रति विधिसंभवात्। यथा खल्वेकशाखागतमग्निहोत्रादिवाक्यमेकस्य पुरुषस्य विहितम्, एवमपरस्यापि विधत्ते, न कर्मान्तरम्। एवमत्रापि अध्येतृभेदात् तान् प्रति सर्वाण्येव वाक्यानि एकमेव कर्म विदधति। न कर्मान्तरम्। एवमेकादश-द्वादशकपालयोरुभयोरुत्पत्तिशिष्टत्वान्न बलाबलम् तस्माद भेदः।

उक्त-वक्ष्यमाणयोश्श्रोतृबुद्धिसमाधानाय संग्रहः।

शब्दान्तराभ्यासगुणैस्ससंख्यैः ।
नाम्ना च दूरेण च सापवादः ॥
भेदः क्रियाणामिति साधितोऽयम्—
अतः परं तद्विनियोगचिन्ता ॥ ७७ ॥

इति श्रीमहामहोपाध्याय—श्रीपार्थसारथिमिश्रविरचितायाम्
शास्त्रदीपिकायां द्वितीयाध्यायस्य चतुर्थः पादः
इति द्वितीयोऽध्यायश्च समाप्तः।

# अथ तृतीयाध्यायः

## तत्र प्रथमः पादः ।

### शेषलक्षणप्रतिज्ञाधिकरणम् ॥ १ ॥

### अथातः शेषलक्षणम् ॥ १ ॥

#### स्वमतेन संगतिवर्णनम् ।

एवं सिद्धे भेदे, शेषशेषित्वमिदानीं चिन्त्यते । भिन्नानां हि तत्संभवति, नाभिन्नानामिति, भेदलक्षणस्य हेतुत्वम् । यद्यपि "व्रीहीनवहन्ति, 'सोमेन यजेते' त्यादिषु द्रव्यकर्मणां शेषशेषिभावो न कर्मभेदापेक्षः, तथाऽपि कर्मणामपि प्रयाजाग्नेयादीनां शेषशेषित्वमिहैव वक्तव्यमिति, तत्सिद्ध्यर्थं भेदलक्षणापेक्षणम् ।

#### प्राभाकराभिमतसंगतेरुपन्यास–निरासौ ।

ननु चावघातस्यापि 'व्रीहिभिर्यजेते'ति शास्त्रान्तरार्थेन शेषशेषित्वचिन्ता, न व्रीहिपदार्थमात्रेण, शास्त्रभेदलक्षणञ्च पूर्वं वृत्तमिति, भवति हेतुत्वम् । तत् किं 'व्रीहीनवहन्ति, व्रीहिभिर्यजेते' त्यनयोः शास्त्रयोर्भेदोऽस्ति ? ओमिति चेत् केन खलु, न केनापीति । न तावन्निरपेक्षसाध्यभेदोऽत्रास्ति, नाप्यनुबन्धभेदः, येन शास्त्रभेदः स्यात् । तस्माद्वाक्यान्तरत्वमेवात्र, न शास्त्रान्तरत्वम्, न च वाक्यभेदलक्षणं पूर्वं वृत्तम् । 'सोमेन यजेत, अरुणया क्रीणाती'त्यादिषु वाक्यान्तरत्वमपि नास्ति ।

ननु तत्रापि 'ज्योतिष्टोमेन स्वर्गकामो यजेते' ति शास्त्रान्तरविहिताधिकारसंबन्धस्यैव यागस्य शेषः सोमः, इति चेत् ? न हि सोम–ज्योतिष्टोमवाक्ययोरनुबन्ध–साध्यभेदोऽस्ति, उभयत्रापि सोमस्यैव विषयत्वेनानुबन्धभेदाभावात् । निरपेक्षसाध्यभेदाभावाच्च । 'उद्भिदा यजेत पशुकामः, सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्यादौ तु स्ववाक्यत एव फले यागस्य, द्रव्यदेवतस्य च यागे शेषत्वमिति, वाक्यान्तरत्वमपि नास्ति । तथैकस्मिन्नेव पदे प्रत्ययार्थं भावनाम्, अपूर्वं वा प्रति प्रकृत्यर्थस्य यागस्य शेषत्वात्पदभेदोऽपि नास्ति, नतरां वाक्यभेदः, न तमां च

शास्त्रभेदः, तस्मात्कर्मणामेव शेषशेषित्वचिन्तार्थं भेदलक्षणापेक्षणम्। अतोऽपि न शास्त्रभेदापेक्षा, तदभावेऽप्यवघाताग्नेयादीनां शेषशेषित्वात्। तस्मात्कर्मभेदानुभाषणमेवैतत् 'नानाकर्मलक्षणं वृत्तमि'भा-पृ-६५७ ति, न तद्द्वारा शास्त्रभेदानुभाषणम्, तस्येहानुपयोगात्। अत एव कर्मभेद एव पूर्वाध्यायार्थः, न शास्त्रभेदः।

सौत्रेण चतश्शब्देन पूर्ववृत्तस्येह हेतुत्वमुच्यते, हेतुत्वं च कर्मभेदस्यैव संभवति, न शास्त्रभेदस्येत्युक्तम्, अतःसूत्रभाष्यविपरीतं शास्त्रभेदस्याध्यायार्थत्वम्। अयुक्तं च। अनुबन्धान्तरं हि बुध्यमानस्तदनुबद्धं नियोगान्तरमेव बुध्यते, न मध्ये शास्त्रभेदम्, अतो नासौ चोदनार्थः, अचोदनार्थश्च न विचारमर्हतीति, न तद्विचारार्थं भेदलक्षणमित्यास्तां तावत्।

### अध्यायार्थस्य प्रतिज्ञा

बहुप्रकारं चेदं शेषलक्षणं वक्ष्यते। कः शेष इति स्वरूपम्, केन हेतुना शेष इति शेषशब्दप्रवृत्तिनिमित्तम्, कथं विनियुज्यत इति विनियोगप्रकारः, श्रुत्यादीनि विनियोगे—शेषस्य शेषिणा सहान्वयबोधने कारणानि—प्रमाणानि, तेषां च विरोधे बलाबलम्, विरोधश्च क्वास्ति, क्व च नास्ति, तदेतत्सर्वमभिसंधाय, शेषलक्षणं वक्ष्याम इति सूत्रितम्, तदनेन सूत्रेण श्रोतृबुद्धिसमाधित्सया वक्ष्यमाणार्थप्रदर्शनमात्रं कृतम्। नात्र पूर्वपक्षेण प्रयोजनम्।

इति प्रथमं शेषलक्षणप्रतिज्ञाधिकरणम्।

---

### शेषलक्षणाधिकरणम् ॥ २ ॥

## शेषः परार्थत्वात् ॥ २ ॥

उक्तं शेषलक्षणं वक्ष्यत इति, तदिदमुच्यते, प्रथमं तावदनेन सूत्रेण शेषस्वरूपम्, हेतुश्च श्रुत्यर्थाभ्यामुच्यते। तत्र सूत्रे श्रुत्याहेतुरुच्यते 'परार्थत्वात् शेषः' इति। शेषस्वरूपं त्वर्थात्। यदा हि परार्थत्वं शेषशब्दप्रवृत्तौ हेतुः, तदा परार्थ एव शेष इति सिद्धं भवति। भाष्ये तु योऽत्यन्तं परार्थं 'तं वयं शेषं इति ब्रूम भा० पृ० ६५९ स्वरूपं श्रुत्युक्तम्। अर्थात्तु हेतुरिति द्रष्टव्यम्।

अत्र चाविनाभावादीति लक्षणाभासनिराकरणाय पारार्थ्यं लक्षणमुच्यते। केचित्किल येन विना यन्न भवति, बीजादिनेवाङ्कुरादिः, स बीजादिस्तस्यांकुरादेः शेष इत्याहुः। तदयुक्तम्। रूपरसादीनाम्, आग्नेयादीनां च मिथोऽविनाभावेन

शेषत्वापत्तेः। प्रयोज्यत्वं शेषत्वमित्येतदपि पुरोडाशकपालादिष्वप्रयोज्येष्वपि शेषत्वसंभवादव्यापकम्। अन्ये तु यद्यस्मादधिकं विधीयते, स तस्य शेषः इत्याहुः, तदतिमन्दम्। अङ्गप्रधानानां परस्पराधिक्यात्, अन्ये विध्यन्तविहितम् शेषमाहुः, तदपि विध्यादिविहितानामपि शाखाच्छेदनादीनामङ्गत्वदर्शनात् अयुक्तम्। तस्मादुपकारकत्वमेव शेषत्वमित्युन्ये। तदप्ययुक्तम्। प्रधानान्यप्यङ्गानामनुष्ठानोपयोगं कुर्वन्ति शेषत्वं गच्छेयुः।

तस्मात्पारार्थ्यमेवैकं युज्यते शेषलक्षणम्।
परोद्देशप्रवृत्तिश्च पारार्थ्यमभिधीयते ॥ १ ॥

कथं तर्हि श्रुत्यादिलक्षणं शेषत्वम्? न हि 'सोमेन यजेते'ति तृतीयया परोद्देशप्रवृत्तत्वं सोमस्योच्यते, करणमात्राभिधानात्। उच्यते, न श्रुत्यादयः पारार्थ्यमभिदधतीति ब्रूमः, किं तर्हि विधिसहिताः पारार्थ्यं बोधयन्तीति। विधिरपि नाभिधानेन पारार्थ्यं गमयति, किंत्वर्थापत्त्या, स हि चेतनप्रवर्तनात्मा, न चानुद्दिष्टफले व्यापारे चेतनः प्रवर्तयितुं शक्यत इत्यर्थाद्विधिविषयस्य व्यापारस्य फलोद्देशप्रवृत्तताऽवगम्यते, फलार्थश्च व्यापारः, फलवदेव पुरुषस्याभिलषित इति, तत्साधनत्वेन श्रुत्यादिभिरवगतानां तत्साधनत्वेन च विधीयमानानां सोमादीनामपि तदुद्देशप्रवृत्तिः सिद्धा भवति। तस्माद्युक्तं श्रुत्यादिगम्यं पारार्थ्यलक्षणं शेषत्वम्–इति।

इति द्वितीयं शेषलक्षणाधिकरणम्।

---

## बादर्यधिकरणम् ॥ ३ ॥

**द्रव्य-गुण-संस्कारेषु बादरिः ॥३॥ कर्माण्यपि जैमिनिः फलार्थत्वात् ॥ ४ ॥ फलं च पुरुषार्थत्वात् ॥५॥ पुरुषश्च कर्मार्थत्वात् ॥६॥**

अत्र शेषत्वस्य विषयकथनेन कः शेष इत्ययमेवांश प्रपञ्च्यते।

बादरिमतेन पूर्वपक्षः।

बादरिर्द्रव्यसंस्कारगुणेष्वेवाह शेषताम्।
श्रुत्यादेर्दर्शनाच्चैते कर्मणामुपकारकाः ॥ २ ॥

उपकारकत्वमेव शेषत्वम, न पारार्थ्यम्, तस्य बोधकाभावात्। विधिस्तावत्प्रवर्तनामात्ररूपो न तादर्थ्यं गमयति, श्रुत्यादयोऽपि साध्यसाधनभावमात्रपरा न पारार्थ्यं प्रतिपादयन्ति। तस्मादुपकारकत्वमेव शेषत्वम्,

तच्च दृष्टार्थानां द्रव्य-गुण-कर्मणां दर्शनादेवावगम्यते, प्रोक्षणादीनां तु श्रुत्यादिभिः। द्वितीया हि व्रीहीणां प्रोक्षणं प्रति साध्यत्वमभिदधानोपकारमन्तरेण तदनुपपत्तेरुपकारं गमयति। न तु यागस्य फलशेषत्वे, फलस्य वा पुरुषशेषत्वे प्रत्यक्षदर्शनम्, श्रुत्यादयो वा संभवन्ति। यजेतेति यागः कर्तव्य एतावदुच्यते, न तु यागेन फलमिति। तदेतत्स्वर्गकामाधिकरणपूर्वपक्षे वक्ष्यामः। स्वर्गोऽपि काम्यमानात्मना शब्देनोच्यते। न त्वात्मार्थः, परार्थो वेति। तस्मान्न तयोः शेषत्वम। अत एव न पुरुषस्य शेषिता, शेषत्वं तु तस्य द्रव्यत्वादिष्टमेव, तस्मात् द्रव्य-गुण-संस्कारेष्वेव शेषत्वम्—इति। तदेतत्स्वर्गकामाधिकरणपूर्वपक्षवादिनो बादरेर्मतम्।

## सिद्धान्तः।

जैमिनिस्तु उपकारलक्षणस्य शेषत्वस्योक्तदोषत्वात्पारार्थ्यमेव शेषत्वम्। तच्च विधिगम्यमिति स्वर्गकामाधिकरणसिद्धान्ते वक्ष्यमाणमभिप्रेत्य कर्मणामपि पारार्थ्याच्छेषत्वमाह। तदेतत् तत्र सिद्धमिति, नात्र किंचित्प्रतिपाद्यम्। प्रपञ्चमात्रं त्विह पूर्वोक्तशेषत्वविषयस्य क्रियते। प्रपञ्चन्तु कुर्वन् परमतोपन्यासपुरःसरम् स्वमतमुपन्यस्तवान्। एवं फलस्यापि पुरुषशेषत्वं कामवशादेवावगम्यते, विधिवशाच्च। न ह्यस्वार्थं कश्चित्कामयते, यदपि परार्थं कामयते। तदपि परम्परया स्वार्थमेव, अत्र तु परम्पराप्रमाणाभावादात्मार्थतैव गम्यते। विधिश्चिनात्मार्थफलसाधने प्रवर्तयितुमशक्नुवन् फलस्यात्मार्थतां गमयति, यजेतेति चात्मनेपदनिर्देशात्। तस्माद्यागफलयोरप्यस्ति शेषता, ततश्च पुरुषस्यापि शेषत्वम्। न चैवम् सर्वतः प्रधानत्वात्पुरुषस्य शेषत्वं नास्तीति मन्तव्यम्। आख्यातेन कर्तुर्गुणभूतत्वेनोपादानात्, औदुम्बरीसंमानादिषु श्रुत्यैव गुणत्वात्[1]।

इति तृतीयं बादर्यधिकरणम्।

---

### तेषामर्थाधिकरणम्॥ ३॥

**तेषामर्थेन संबन्धः॥ ७॥ विहितस्तु सर्वधर्मः स्यात्, संयोगतोऽविशेषात् प्रकरणाविशेषाच्च॥ ८॥ अर्थलोपादकर्म स्यात्॥९॥ फलं तु सह चेष्टया; शब्दार्थोऽभावाद्विप्रयोगे स्यात्॥ १०॥**

---

१—'फलं च पुरुषार्थत्वात्, पुरुषश्च कर्मशेषत्वात् द्विसूत्रीति का० मु० पु० पा०।

कः शेषः, केन हेतुना शेषः, इति द्वयमप्युक्तम्। इदानीं कथं च विनियुज्यत इत्ययमंशो निरूप्यते। दर्शपूर्णमासयोर्निर्वपण-प्रोक्षणावघातादय औषध-धर्माः, उत्पावनादय आज्यधर्माः, शाखाहरणादयः सान्नाय्यधर्माः। तेषु संशयः- किं सर्वे आज्ये, औषधे, सान्नाय्ये च कर्तव्याः ? उत यथायोगं व्यवस्थाइति। तदर्थञ्च किं परमापूर्वप्रयुक्ता एते ? किं वाऽवान्तरापूर्वप्रयुक्ता ? इति। तत्सिद्ध्यर्थमपि किमवान्तरापूर्वाणि सन्ति ? नेति। सत्स्वपि तेषु किं तानि प्रयोजकानि ? कि वा परमापूर्वं ? यदाऽपि तानि। तदाऽपि किं सर्वाणि सर्वेषां प्रयो जकानि ? किंवा व्यवस्थेति ? किं तावत्प्राप्तम्।

एकमेव फलापूर्वं फलस्यैकस्य सिद्धये।
कल्प्यं नान्यानि धर्माणां तादर्थ्योत्संकरो भवेत्।। ३ ।।

अवघातादीनां व्रीह्यादिभिः संबन्धोऽपूर्वसाधनविशेषत्वकृतः, न व्रीह्यादिस्वरूपकृतः। तच्चापूर्वं सर्वेषामग्नेयादीनामेकफलसाधनत्वदेकमेव कल्प्यते, न बहूनि। तदर्थश्चोवघातस्तदीये हविषि कर्तव्यः, तदीयत्वं चाज्यादीनामप्यविशिष्टम्। अतो यथा व्रीहिषु श्रुतोऽवघातो यवेष्वपि भवति, एवमाज्यादिष्वपि भवितुमर्हति। सन्तु वाऽवान्तरापूर्वाणि, तथाऽपि तानि निष्फलत्वाद्यागस्वरूपवदेव न धर्माणां प्रयोजकानि। परमापूर्वं तु फलवत्, अतस्तदेव प्रयोजकम्। न चात्र वाङ्नियमन्यायः, तत्र हि दीक्षणीयाशब्दो दीक्षणीयापूर्वम् लक्षणपयोस्थापयति, ज्योतिष्टोमापूर्वं तु लक्षितलक्षणयोयस्ति विप्रकर्षः, अत्र तु परमापूर्वमवान्तरापूर्वं च द्वयमप्याग्नेयादिसाध्यमिति, 'न लक्षणायां विशेषः'। प्रधानत्वाच्च परमापूर्वमेव प्रयोजकं युक्तम्। यद्यपि चावान्तरापूर्वाण्येव प्रयोजकानि, तथाऽपि प्रकरणाविशेषात्सर्वाणि सर्वेषां प्रयोजकानि, तस्मात्सङ्करः—इति।

अत्राऽभिधीयते—सन्ति तावदवान्तरापूर्वाणि।
कुतः – नह्याग्नेयादिकर्माणि विशरारूणि तैर्विना।
संहत्य परमापूर्वं जनयन्ति स्वरूपतः।। ४ ।।

तदेतदपूर्वाधिकरणे एवानागतावेक्षणेन प्रतिपादितम्। सत्सु च तेषु तादर्थ्यमेवावघातादेर्युक्तम्, प्रत्यासत्तेः। यद्यपि चाग्नयादीन्येवोभयत्र कारणम्, तथाऽपि साक्षादुत्पत्त्यपूर्वे करणत्वम्, तद्द्वारेण तु परमापूर्वे, संबन्धनिमित्ता च लक्षणा। तेन व्रीहिशब्दो यागद्वारेणाऽपूर्वमुपस्थापयन्प्रथमम् तावदुत्पत्त्यपूर्वे निपतति, तस्यापि चादृष्टत्वेनाज्ञातप्रकारत्वात्, परमापूर्वसिद्ध्यौपयिकत्वेन च फलवत्त्वात्, अतिक्रमकारणाभावात्तादर्थ्यमेवाव-

घातादेर्युक्तम्। सत्यपि च सर्वेषां प्रकरणाविशेषे श्रुतेर्बलीयस्त्वावगमादसङ्करः। एवञ्चावघातादेर्दृष्टार्थता भवति, अन्यथात्व दृष्टार्थता स्यात्। न च क्वचिदपि दृष्टसंभवे तत एव विध्युपपत्तेः अर्थापत्तिपरिक्षयाददृष्टकल्पनया सर्वार्थत्वं युक्तमङ्गीकर्तुम्। अतश्च यद्यपि तावत् 'अवहन्तीत्येतावन्मात्रं श्रूयते' तथाऽपि दृष्टार्थवशादेव व्यवस्था स्यात्। किमुत यदा व्रीह्यादिसंयोगेनैव श्रवणम्, तस्माद्यथासंयोगं व्यवस्था।

इति चतुर्थं तेषामर्थाधिकरणम्।

---

स्फ्यकपालाधिकरणम् ॥ ५ ॥

द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत ॥ ११ ॥

दर्शपूर्णमासयोः 'स्फ्यश्च कपालानि चेत्याद्युपक्रम्य' एतानि वै दश यज्ञायुधानी' ति श्रुतम्। तथा 'स्फ्येनोद्धन्ती' त्यादीन्यपराणि वचनानि। तत्र संशयः- किं स्फ्यादीनां मध्ये येन यदस्मिन्प्रकरणे कर्तुं, शक्यम्, तत्सर्वं तेन कर्तव्य उत यथासंयोगमुद्धननाद्येवेति। तत्रायुधशब्दस्य साधनवचनत्वाद्यज्ञसाधनत्वं गम्यमानं साक्षादसंभवदंगेऽवतरदविशेषात् सर्वांगेषु विज्ञायते, उद्धननादिसंयोगस्त्वनेनैव प्राप्तत्वादनुवादः।

नैतद्युक्तम्—एवं हि बहूनामुद्धननादिवाक्यानामानर्थक्यं स्यात्। नचानुवादत्वमपि न संभवति, नित्यप्राप्त्यभावात्। नह्युद्धननं स्फ्येनैव प्राप्तम्, अन्येनापि सम्भवात्।

पाक्षिकानुवादत्वे वा नित्यवच्छ्रवणविरोधः, तस्मादेतानि वाक्यानि विधायकानि। यज्ञायुधवाक्यं त्वेतैरेव प्राप्तार्थत्वात्, वैशब्दोपबन्धात्, अख्याताभावाच्चानुवादकम्। वरं च बह्वानर्थक्यादेकानर्थक्यम्। न चास्यानर्थक्यम् 'यज्ञायुधानि संभरती'त्यनन्तरश्रुतासादनविधिशेषत्वात्।

तस्मादस्यानुवादत्वादितरे विधयो मताः।
तेन स्फ्यादेर्व्यवस्था स्यात्कार्येषूद्धननादिषु॥ ५॥

इति पञ्चमं स्फ्यकपालाधिकरणम्।

---

## अरुणाधिकरणम्

### अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् ॥ १२ ॥

ज्योतिष्टोमे श्रूयते 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणीतो'तै. सं. ६-१-८ ति। तत्रारुणाशब्दोऽयमाकृत्यधिकरणन्यायेनान्वयव्यतिरेकाभ्यां च गुणवचनः, पिङ्गाक्ष्येकहायनी-शब्दौ तु यौगिकौ सामानाधिकरण्यादेक-द्रव्यवाचिनौ, गुणाधिक्यफलं च शब्दद्वयम्, न चैकेन विहिते, अपरेण विधिर्न संभवतीति वक्तव्यम्, उभयोरपि श्रुत्यैव द्रव्यवाचकयोर्युगपत्प्रवृत्तेः। तदि-हारुणिमानं प्रति संदेहः—किमेनं वाक्याद्भित्त्वा प्रकरणेन सर्वद्रव्येषु निवेशयामः? किं वा क्रीणातिना संबद्धं तदङ्गं सदेकहायन्यां निविशत इति, तदर्थं च क्रियासाधनत्वं संभवति, नेति।

तत्र—अमूर्तत्वाद् गुणो नैव क्रियां साधयितुं क्षमः।
तस्मात्क्रीणातिना नाऽस्य संभवत्येकवाक्यता ॥ ६ ॥

क्रीणातिना च संबध्यमानस्तृतीयया संयोगात्करणकारकं स्यात्, न चामूर्तस्य करणकारणत्वं संभवतीति, नास्य क्रयासंबन्ध इति, ततः पृथग्भूतः प्रकरणे निविशते—इति।

ननु प्रकरणे वा कथमस्य निवेशः? न तावत्क्रियाभिः, अमूर्तत्वात्। न च द्रव्यैः, कारकस्य द्रव्यसंबन्धानुपपत्तेः अनुपात्तानि चात्र द्रव्याणि कथम् तैर्गुणः संबध्येत? स्यादेतत्। तृतीयया करणद्रव्याणि प्राकरणिकान्यनूद्य, प्रातिपदिकार्थो गुणस्तत्परिच्छेदकत्वेन विधीयते। न तु गुणस्य करणत्वम्, येन द्रव्यसंबन्धो न स्यात्, तृतीयया चोपादानात् द्रव्याणां नानुपादानदोष इति। नैतद्युक्तम्। न हि तृतीया करणीभूतद्रव्याभिधायिनी, विभक्तयो हि कारकशक्तिम् निष्कृष्याऽभिधाय, तया क्रियां विशिंषन्ति, न तु कृदन्तकरणादिशब्दवत्कारकोप-सर्जनं द्रव्यमभिदधति, येन गुणस्तत्परिच्छेदकतया संबध्येत।

उच्यते—प्रातिपदिकमेव गुणवचनमपि लक्षणया द्रव्यं प्रतिपादयति। तच्च तृतीयासंयोगात्करणम्, तदनेन पदेन गुणविशिष्टं द्रव्यं करणभूतं प्रतिपाद्यते। तत्र विशेष्याणि करणद्रव्याणि प्रकरणगतान्यनूद्य विशेषणभूतो गुणः परिच्छेदकत्वेन विधीयते, येन द्रव्येण किंचित्क्रियते, तेनारुणगुणकेनेति। नन्वेवं लक्षितस्य द्रव्यस्य क्रय एव करणत्वस्य संभवात्किमिति वाक्यभेदः, नानेन लक्षितं द्रव्यान्तरं शक्यं विधातुम्, श्रौतैकहान्यवरुद्धत्वात् क्रयस्य, एकहायनी तु स्वशब्द-विहिता न पुनर्लक्षणया विधातुं शक्यते।

अथैकहायनीमेवानूद्य तत्रैव गुणो विधीयताम्, न भविष्यति वाक्यभेदः। नैवं शक्यम्, विधीयते ह्यत्रैकहायनी क्रयं प्रति गुणभूता च स्वार्था च। नासावेकस्मिन्नेवोच्चारणेऽनुवदितुं गुणं प्रति प्रधानीभवितुं परार्थं चोच्चारयितुं शक्येत आवृत्तिप्रसङ्गात्। प्राकरणिकानि तु द्रव्याणि वाक्यान्तरविहितानि शक्यन्ते वाक्यान्तरेणानुवदितुम्। तस्मात्कृत्स्ने प्रकरणेऽरुणिमा निविशत इति प्राप्ते—

ब्रूमः - तृतीयया गुणस्यैव करणत्वं क्रयं प्रति।
विस्पष्टं गम्यते, तच्च द्रव्यद्वारेण युज्यते ॥ ७ ॥

यद्यप्यमूर्तत्वादयं न साक्षात्क्रियां साधयितुमलम्, तथाऽपि द्रव्यपरिच्छेदमुखेन शक्नोति साधयितुम्, न ह्यपरिच्छिन्नं द्रव्यं क्रियां साधयति, गुणश्च तत्परिच्छिनत्तीति युक्तमस्य क्रियासाधनत्वम्। गुणं हि साधनत्वेन विदधच्छब्दः यथा ह्यनेन शक्यते साधयितुं तथा कुर्यादित्याह। स च द्रव्यपरिच्छेदमुखेन शक्नोति साधयितुम्, नान्यथा, तेनायमर्थो भवति—अरुणगुणपरिच्छिन्नेन द्रव्येण कुर्यादिति। एवं संभवति श्रौतस्यैव गुणस्य क्रयैकवाक्यत्वे लक्षणा, वाक्यभेदश्च न युज्यते। यदा च क्रयार्थत्वम्, तदा तदीय एव द्रव्ये निवेशादेकहायिन्यामेवास्य निवेशः।

ननु वासःप्रभृतीन्यन्यान्यपि क्रयद्रव्याणि, तेष्वपि निविशते। न तेषां क्रयान्तरद्रव्यत्वात् भिन्ना ह्येते प्रतिवाक्यं क्रयाः, विधिभेदात्। सर्वे ह्येते विधयोऽन्योन्यस्मिन्नुत्पत्तिशिष्टद्रव्यान्तरावरोधात् द्रव्यान्तरं विधातुमशक्नवन्तस्तत्तद्द्रव्यविशिष्टक्रयविधानार्थाः। न च विहितस्य विधानं संभवतीति सिद्धः क्रयभेदः। यदाऽऽह भाष्याकारः भिन्ने हि वाक्ये एकहायनीसाधनक एकः क्रयोऽवबुद्धो भवति अरुणसाधनकमपि क्रयान्तर मि भा० पृ० ६९९ति। एवं हि वदन्वाक्यभेदे क्रयभेदं दर्शयति,

तेन ये तु गुणकर्मत्वात्क्रयाणां भेदं नेच्छन्ति, ते न्यायविरोधाद्, भाष्यविरोधाच्चोपेक्षणीयाः। न च गुणकर्मणां भेदो नास्तीति राजाज्ञा, ऐन्द्रवायवादिग्रहाणां भेदस्य पशुसोमाधिकरणे दर्शितत्वात्, अतोऽस्ति क्रयभेदः, 'क्रयणे तु विकल्पः स्यादि १-४-५ त्यत्राधिकरणे क्रयाणामेव विकल्प'समुच्चयचिन्ता, न द्रव्याणामित्यविरोधः।

इति षष्ठमरुणाधिकरणम्।

संमार्गाधिकरणम् ॥ ७ ॥

एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥ १३ ॥ सर्वेषां वा लक्षणत्वात् अविशिष्टं हि लक्षणम् ॥ १४ ॥ चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेत ॥ १५ ॥

एवं त्रिभिरधिकरणैः क्रमेण संस्कार-द्रव्य-गुणानां यथासंयोगं व्यवस्थोक्ता। संयोग एव त्विदानीं चिन्त्यते–किं विवक्षितविशेषणेन शेषिणा शेषस्य संयोगः? किमविवक्षितविशेषणेने?ति। एवं श्रुतम् "ग्रहं संमार्ष्टी"ति। तत्र संशयः–किमेकस्य ग्रहस्य संमार्गः, उत सर्वेषामिति। तदर्थं च किमुद्देश्यगता संख्या विवक्षिता? ने?ति।

तत्र श्रुतेर्बलाद्यद्वत् संख्योपादेयगामिनी।
विवक्षिता तथोद्देश्यगता श्रुत्यविशेषतः ॥ ८ ॥

इति प्राप्ते—

अभिधीयते—उद्देश्यलक्षणं जातिर्यद्द्रव्यं लक्ष्यते तया।
तस्याङ्गमेष संमार्गः सर्वस्येति विनिश्चयः ॥ ९ ॥

यदि ग्रहत्वजातेरयं संस्कारः स्यात्, ततस्तस्याः प्रतिव्यक्ति समाप्तेः यत्र क्वचिद्द्रव्ये संस्कृते सा संस्कृतैवेति, न द्रव्यान्तरे संस्कारः क्रियेत। तस्यास्त्वमूर्तत्वादसाधनत्वाच्च, तल्लक्षितानां द्रव्याणां ज्योतिष्टापूर्वसाधनानाम् संमार्गः। तत्रापि यदि द्रव्याणि संमार्गं प्रति गुणभूतानि स्युः पशुरिव यागम् प्रति, ततो येन केनापि सिद्धेर्नावश्यं सर्वत्र क्रियेत। न हि यावद्गुणं प्रधानमावर्तयितव्यम्, प्रयोजनाभावात्। ततश्च कियतां द्रव्याणमयं संमार्गः कर्तव्यः इत्यपेक्षा भवति। तस्यां चापेक्षायां परिच्छेदकत्वेन संख्या विधीयेत, पश्वेकत्ववत्, प्रधानानि त्विह द्रव्याणि, संमार्गं प्रति द्वितीयानिर्देशात्, प्रयोजनवत्त्वाच्च, प्रतिप्रधानं च गुणावृत्तेः सर्वेषां समुच्चितानामयं संस्कार इति निश्चयान्न परिच्छेदकापेक्षा, तदभावाच्च न संख्या पूर्ववदादर्तव्या। परिच्छेदकतया हि तस्याः क्रियान्वयः। न च परिच्छेदोऽपरिच्छिन्ने संभवतीति, द्वाराभावान्न क्रियाऽन्वयः संख्याया विधातुं शक्यते। विधीयमानमप्येकत्वम् सर्वद्रव्येषु समुच्चयेन संमार्गे प्राप्ते परिसंख्यार्थं स्यात्। च सा पत्रिदोषा, न चैकस्मिन्वाक्ये संमार्गविधिः परिसंख्या च संभवति, वचनव्यक्तिभेदात्। न चास्य विधिरपि संभवति

कुतः—ग्रहस्य संमृजेर्वैतत्प्रधानं गुण एव वा।
सर्वथा वाक्यभेदः स्यादतो नास्य विधेयता ॥ १० ॥

विधीयमानं ह्येकत्वं यदि तावद् ग्रहस्य विधीयते, ततो ग्रहसंमार्गसंबन्धः, ग्रहैकत्वसंबन्धश्चेत्यर्थद्वयविधानाद्वाक्यभेदः स्यात्। विहितमपि चैकत्वम् ग्रहस्वरूपमात्रोपक्षयान्न संमार्गविशेषणमिति, सर्वेषां संमार्गः स्यादिति, अस्मत्पक्षाविरोध एव। अथ संमार्गान्वितस्य ग्रहस्यैकत्वसंबन्धो विधीयते, न स्वरूपमात्रस्य, नैवं शक्यम्, न हि संमार्गो ग्रहविशेषणम्, निर्ज्ञातं हि विशेषणम् भवति, संमार्गस्त्विहाऽपूर्वो विधीयते, कथमसौ ग्रहविशेषणम्, ? युगपद्वा विधानविशेषणत्वयोरभ्युपगमे वाक्यभेदः-ग्रहं संमृज्यात्, यञ्च संमृज्यात्, स एकः-इति।

अथैकत्वविशिष्टस्य ग्रहस्य संमार्ग एकोऽर्थो विधीयते, तेन न कश्चित्पूर्वोक्तो दोषः स्यादिति मतम्। कस्तदा भवति वाक्यार्थः ? यद्ग्रहजातीयमेकसख्यञ्च द्रव्यम्, तस्य संमार्गः—इति। एवमपि सर्वेषां प्रत्येकमेकत्वाद्, ग्रहत्वाच्च, संमार्गस्य च तद्गुणत्वात्सर्वत्र प्राप्तिः स्यात्।

अपि च विभक्त्या युगपत्संख्या, कारकं चोच्यते, न तु प्रथमं संख्यां प्रातिपदिकार्थस्याभिधाय, पश्चात्तद्विशिष्टस्य कारकत्वम्, येनैकत्वविशिष्टस्य ग्रहस्य संमार्गं प्रति कर्मता स्यात्। तन्न तावदेकत्वं ग्रहविशेषणम्। अथैतदपि पश्वेकत्ववद्विभक्तिश्रुत्या कारकं सत्क्रिययैव संबध्यते, तत्रापि द्वयी गतिः स्यात्—एकत्वस्याङ्गं संमार्गः, संमार्गाङ्गं वा एकत्वम्, यदि तावदेकत्वाङ्गं संमार्गः स्यात्, ततः ग्रहमेकत्वं चाद्दिश्य संमार्गविधानात्, उद्देश्ययोश्चापादेयवत्क्रियया वशीकरणासंभवात्, प्रत्येकमेव ताभ्यां क्रियासंबन्धात्प्रत्युद्देश्यं वाक्यसमाप्तेर्वाक्यभेदः, पुनरपि च ग्रहस्यैकत्वानपेक्षस्यैव संमार्गान्वयात्सर्वग्रहसंमार्गः स्यादित्यस्मत्पक्षसिद्धिः।

अथैकत्वं संमार्गस्य गुण इत्युच्यते। तदयुक्तम्। न हि द्वितीया गुणत्वं वदति, प्राधान्यवाचिनी हि सा। अथ सक्तुवल्लक्षणया गुणत्वमुच्यते, न तु श्रुतिसंभवे सा युक्ता। किञ्च तथा सति ग्रहस्यापि गुणत्वं स्यात्, अथैकत्वस्य गुणत्वम्, ग्रहस्य च प्राधान्यमुच्यते, न तच्छक्यम्, कथं हि सकृदुपात्ता द्वितीया विभक्तिः ग्रहापेक्षया प्राधान्यं श्रुत्याऽभिदध्यात् ? एकत्वापेक्षया च गुणत्वं लक्षयेत्। तन्न कथंचिदेकत्वं विवक्षितुं शक्यम्।

इति सप्तमं ग्रहैकत्वाधिकरणम्।

---

चमसाधिकरणम् ॥ ८ ॥

**संस्काराद्वा गुणानामव्यवस्था स्यात् ॥ १६ ॥ व्यवस्था वाऽर्थस्य श्रुतिसंयोगात्, तस्य शब्दप्रमाणत्वात् ॥ १७ ॥**

किमेकत्ववत्प्रातिपदिकार्थस्याप्यविवक्षितत्वात्, चमसानामपि संमार्गः कर्तव्यः, उताविवक्षाकारणाभावाद्ग्रहाणामेवे ? ति विचारः। तत्र 'संमार्ष्टी'त्येतावत्युक्ते सोमावसेकनिर्हरणप्रयोजनतया सोमपात्राणामित्यवगमात्भूयः कस्येत्यपेक्षाभावादविवक्षितंग्रहग्रहणमेकत्ववदुपलक्षणमात्रम्। अपि च सोमयागस्यैकत्वात्तदपूर्वमप्येकमेव, तत्साधननिवेशी च संमार्गः चमसेष्वपि तत्साधनेषु भवितुमर्हति। न ह्यत्र कर्मभेदोऽस्ति, येनापूर्वभेदादवघातादिवद्व्यवस्था स्यात्, तस्माच्चमसेष्वपि स्यादिति प्राप्ते—

अभिधीयते—न हि ग्रहविवक्षायां वाक्यभेदः प्रसज्यते।
यागैकत्वेऽप्यपूर्वाणि भिद्यन्तेऽभ्यासभेदतः ॥ ११ ॥

न तावदेकत्वविवक्षावद् ग्रहविवक्षायां वाक्यभेदः, अवश्यं हि संमार्गः कस्यचिद्विधातव्यः, तत्र शब्दोपनीतं ग्रहमुल्लङ्घ्य, न युक्तं यत्सामर्थ्यलभ्यम् सोमपात्रमात्रं गम्यते। एकस्यापि च यागस्याभ्यासभेदात्, तेषां चापूर्वमन्तरेण संहत्यकारित्वायोगात्, अवश्यं प्रत्यभ्यासमपूर्वाणि भिद्यन्ते, ततश्च ग्रहशब्दलक्षितापूर्वविशेषनिबन्धनः संमार्गो न चमसेषु कर्तव्यः।

इत्यष्टमं चमसाधिकरणम्।

---

आनर्थक्यतदङ्गाधिकरणम् ॥ ९ ॥

**आनर्थक्यात्तदङ्गेषु ॥ १८ ॥**

'सप्तदशारत्निर्वाजपेयस्य यूपो भवति' शत. ब्रा २–२–२–६ इति श्रूयते। तत्र संशयः-किं सप्तदशारत्नित्वं वाजपेयसाधनभूतोर्ध्वपात्रद्वारेण वाजपेयाङ्गम् ? उत यूपद्वारेण पश्वङ्गम्—इति। तदर्थं च किं सप्तदशारत्निर्वाजपेयस्येति वचनव्यक्तिः, उत सप्तदशारत्निर्यूप इति। तत्राव्यवहितत्वात्, प्रधानत्वात्, प्रकरणानुग्रहाच्च सप्तदशारत्निर्वाजपेयस्येति सम्बन्धः। परिमाणञ्च साक्षात् कर्मणि न संभवतीति, तत्साधनभूतोर्ध्वपात्रद्वारेण संबध्यते, यूपशब्दश्चोर्ध्वपात्र एव सादृश्यात् वर्तते।

यद्वा 'वाजपेयस्ये'ति षष्ठया तत्सम्बन्ध्यूर्ध्वपात्रमुद्दिश्य सप्तदशारत्नित्वम् विहितं तद्द्वारेण वाजपेयाङ्गं भवति। एवञ्च वाजपेयशब्दः श्रुतिवृत्तो भवति, यूपसम्बन्धे तु वाजपेयस्य यूपाभावात्पशुयागसम्बन्धित्वाद्यूपस्य वाजपेयशब्दः पशुलक्षणार्थः स्यात्। मन्वितरत्रापि यूपशब्दो गौणः, स तु न दोषः जघन्यत्वाद्यूपशब्दस्य। वाजपेयशब्दस्य तु मुख्यत्वात्, तत्र न लक्षणा युक्ता। तस्मादूर्ध्वपात्रे निवेशः।

स्यादेवं यदि यूपेन सम्बन्धे लक्षणा भवेत्।
वाजपेयश्रुतेर्नासौ श्रुतिवृत्त्यैव सा यतः ॥ १२॥
षष्ठी सम्बन्धमात्रार्था नाङ्गाङ्गित्वमपेक्षते।
नाप्यव्यवधिसम्बन्धं देवदत्तस्य नप्तृवत् ॥ १३॥
यूपस्य च पशुद्वारा वाजपेयोपकारतः।
सम्बन्धमात्रमस्त्येव क्रतुनाऽतो न लक्षणा ॥ १४॥
ऊर्ध्वपात्रेण सम्बन्धे यूपशब्दस्य गौणता।
अनन्तरेण सम्बन्धः प्रधानेन च सङ्गतिः ॥ १५॥
प्रक्रियानुग्रहश्चैवं नाद्दत्यः श्रुतिबाधतः।
तेन सप्तदशारत्निर्यूप इत्येव सङ्गतिः ॥ १६॥
सा च प्रकरणाद्वाजेपेयसम्बन्धियूपगा।
तेनायं वाजपेयस्येत्यनुवादो भविष्यति ॥ १७॥

इति नवममानर्थक्यतदंगाधिकरणम्।

अभिक्रमणाधिकरणम् ॥ १० ॥

**कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ॥ १९ ॥ साकांक्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ॥ २० ॥**

दर्शपूर्णमासयोः प्रयाजसमीपे श्रूयते 'अभिक्रामं जुहोती तै० सं० २-६-१०ति। तत्र भाष्यकारेण जुहोतेः सन्निहितप्रयाजविषयत्वं सिद्धं कृत्वा किमभिक्रमणं तेनैकवाक्यं सत् तत्कर्त्रा सम्बध्यते ? किं वा ततो भिन्नं सत् कृत्स्नप्रकरणकर्त्रे ? ति विचारितम्। एवञ्च पूर्वपक्षः—

क्रियया कारकस्यैव नान्यस्यास्त्येकवाक्यता ।
न चाभिक्रमणं मूर्तिवर्जितं कारकं भवेत् ॥ १८ ॥

न चारुण्यवद् द्रव्यद्वारेण संभवति, तत्र ह्येकहायनीद्रव्यमुपात्तम्—युक्तम् यद् द्वारतां प्रतिपद्यते। अत्र जुहोतिना कर्तुरनुपादानान्न द्वारत्वम्, तस्माद्विच्छिन्नम् प्रकरणेन गृह्यते, शक्यते च क्रियायाः प्रकरणेन ग्रहणं प्रयाजवत् । संभवति हि कर्मणः कर्मोपकारकत्वम्, कारकत्वं तु न संभवति। तस्माद्दर्शपूर्णसाङ्गम् सत्सामर्थ्यात्कर्तृसंस्कारकं भवति, कर्ता च सर्वप्रयोगाङ्गमिति, सर्वप्रयोग-सम्बन्धोऽभिक्रमणस्येति ।

सिद्धान्तस्तु—अनुपात्तोऽपि सद्भावमात्रेण द्वारतां व्रजेत् ।
कर्ताऽभिक्रमणं तेन भवेद्धोमस्य साधनम् ॥ १९ ॥

## वार्तिकमतम्

वार्तिककारस्तु णमुलन्तमभिक्रमणं न क्रियातोऽन्येन सम्बध्यते । तस्माज्जुहोतिसम्बन्धस्य स्पष्टत्वान्न ततो विच्छेदाशङ्केति, अन्यथाऽधिकरणं वर्णयाञ्चकार- 'अभिक्रामं जुहोती' ति होमानुवादेन विधीयमानमभिक्रमणं किं प्राकरणिकसर्व-होमाङ्गम्, उत प्रयाजहोमस्यैवेति संशयः, तदर्थं च किमवान्तरप्रकरणमस्ति, न वे ? ति।

फलवद्भावनोद्भूतकथंभावतिरोहिताः ।
नैवाङ्गानां कथंभावाः प्रादुःष्यन्ति तमन्तरा ॥ २० ॥

प्रादुःष्युर्यदि चाङ्गानां कथंभावास्ततो मिथः ।
तेषामङ्गाङ्गितापत्तेरव्यवस्था प्रसज्यते ॥ २१ ॥

तस्मान्नाऽवान्तरप्रकरणम्। तदभावे च सन्निधिमात्रेणाभिक्रमणं प्रयाजाङ्गम् स्यात्, स च दुर्बलः प्रकरणात् । अतो दर्शपूर्णमासभावनया सम्बन्धात्तदीय-सकलहोमाङ्गमभिक्रमणं बर्हिर्धर्मवत् ।

नन्वसत्यप्यवान्तरप्रकरणे वाक्येनैव प्रयाजाङ्गता स्यात् 'अभिक्रामं जुहोती'ति। नैवम् । जुहोतेः साधारणत्वेन प्रयाजोपस्थापानाभावात । नन्वनुवादोऽयं सन्निहित-गामी, प्रयाजाश्च सन्निहिताः। नैवम् । बुद्धिविपरिवृत्तिरनुवादस्यापेक्षिता, न पाठ-प्रत्यासत्तिः । तथा सत्यत्यन्तसन्निधानादुत्तमप्रयाजस्यैवाभिक्रमणमङ्गं स्यात्, न समिदादीनाम् । तथा 'बर्हिषि हवींष्यासादयती'ति यस्यैव हविषः कियानपि हि

पाठतः सन्निधिविशेषोऽस्ति, तस्यैव बर्हिष्यासादनं स्यात्, नान्येषाम्। बुद्धिविपरिवृत्तिश्च सर्वहोमानामविशिष्टा, प्रकृतत्वादेव। अतो बर्हिर्हविःशब्दस्येव जुहोतिशब्दस्यापि सङ्कोचायोगात्सर्वहोमाङ्गमभिक्रमणम्—इति।

अत्राभिधीयते—भवेदेवं प्रयाजानां नास्ति प्रकरणं यदि।
तेषां वचनसंयुक्ता ये गुणा विहिताः पुरा॥ २२॥
पश्चाच्च ये विधास्यन्ते तैः संदष्टमिदं श्रुतम्।
'अभिक्रामं जुहोती'ति न ततोऽन्यत्र गच्छति॥ २३॥

प्रयाजान् विधाय 'समानयत उपभृतः' इत्यादिगुणं विधाय, अभिक्रामं-जुहोतीत्युक्त्वा 'यो वै प्रयाजानां मिथुनं वेद, स समिधो बह्वीरिव यजती' त्यादि, तत् प्रयाजानिष्ट्वा हवींष्यभिघारयती' ति प्रयाजपरामर्शदर्शनान्नूनमेतावता प्रदेशेन प्रयाजाः समाप्यन्त इत्यवगमात्, तन्मध्यपतितमभिक्रमणं तदतिक्रमेण नान्यत्र गच्छति, यद्यपि विद्यते चाङ्गभावनानामप्यविज्ञातप्रकारत्वात्कथमित्याकाङ्क्षा, तथाऽपि—

न विद्यते तु संदंशो यत्र वाचनिकैर्गुणैः।
तत्राङ्गानां कथंभावः सन्नप्यविनियोजकः॥ २४॥
निष्फलत्वेन सर्वेषां न विशेषोऽवगम्यते।
कः शेषः ? कस्य शेषित्वमतः सर्वं प्रधानगम्॥ २५॥
अव्यवस्थाप्रसक्तिश्च योक्ता सैवं निराकृता।
सन्दंशे सति सन्दष्टं तदङ्गमितरत्पुनः॥ २६॥
सर्वं प्रधानगामीति नाव्यवस्था प्रसज्यते।
यस्त्वाह साधिकाराणामितिकर्तव्यता स्थिता॥ २७॥
नान्येषामिति, तस्यापि प्रतिज्ञामात्रमेव तत्।
अविज्ञातप्रकारत्वादुभयेषां हि सा भवेत्॥ २८॥

तान्यपि ह्यनुष्ठेयानि, न चेदनुष्ठानमेव न स्यात्, एतावांस्तु विशेषः-यदेषामन्यार्थमनुष्ठानम्, साधिकाराणां तु स्वनिष्ठमिति। न चैतावता विशेषः, अन्यार्थस्याऽप्यविज्ञातप्रकारस्यानुष्ठानासंभवात्। 'प्रयाजैरपूर्वं कृत्वा प्रधानस्योपकुर्यादि'त्युक्ते, यो नाम प्रयाजैरपूर्वं कर्तुं न जानाति, तस्य भवत्येव कथममीभिरपूर्वं कर्तव्यमिति प्रकारविशेषापेक्षा, सत्यामपि तस्यां सन्दंशपतितं यदङ्गं न स्यात्, ततोऽविशेषात्सर्वं फलवदङ्गं स्यात्। प्रकाराकाङ्क्षा तु वाचनिकैर्गुणैः,

अर्थापत्तिलभ्येन च स्वरूपनिष्पादनेन, आचमनादिभिश्च दर्विहोमवत्पूर्यते, अभिक्रमणं तु सन्दंशपतितत्वादवान्तरप्रकरणोद्भूतेः प्रयाजाङ्गम्।

एकदेशिनां त्ववान्तरप्रकरणाभावात्सर्वं सन्निधिबाधेन प्रकरणाविशेषात्सर्वार्थं स्यादित्यास्तां तावत्।

इति दशममभिक्रमणाधिकरणम्।

---

उपवीताधिकरणम् ॥ ११ ॥

संदिग्धे तु व्यवायाद् वाक्यभेदः स्यात् ॥ २१ ॥

दर्शपूर्णमासयोः सामिधेनीर्विधाय, तासां च 'त्रिः प्रथमामन्वाहे'त्यादिवचनैर्गुणान् विधाय, ततो निविदो नाम मन्त्रा 'देवेद्धोमन्विद्ध' इत्यादयः विहिताः, ततः काम्याः सामिधेनीकल्पा विहिताः, तदनन्तरं यज्ञोपवीतमाम्नातम्—'उपव्ययते देवलक्ष्ममेव तत् कुरुते' तै० सं० २–५–११–१ इति। ततः पुनरपि च सामिधेनीनामेव वाचनिका गुणा विधास्यन्ते 'अन्तरानूच्यं सदेवत्वाये'त्यादयः। तदत्रोपवीतं प्रति संशयः—सामिधेन्यङ्गम्, उत दर्शपूर्णमासाङ्गमिति, तदर्थञ्च च किं सामिधेनीनां वाचनिकगुणोद्भूतमवान्तरप्रकरणमुपवीतविधावनुवर्तते ? अथवा विच्छिन्नमिदं निविद्भिः—इति।

अनुवृत्तौ तदङ्गत्वं विच्छिन्ने दर्शशेषता।
किं प्राप्तमुभयत्रापि कीर्तनादनुवर्तते ॥ २९ ॥

पुरस्तादुपवीतस्य परस्ताच्चापि कीर्तनम्।
विद्यते सामिधेनीनामतः प्रकरणास्तिता ॥ ३० ॥

निविदस्तु पूषाद्यनुमन्त्रवत्परप्रकरणपठिता इत्यवगन्तव्यम्।

अथवा—निविदामपि तादर्थ्यात् तत्कथंभावप्रसङ्गतेः।
न चाङ्गैर्व्यवधीयन्ते प्रधानानि कथंचन ॥ ३१ ॥

काम्येष्वप्याश्रयत्वेन तासामप्यनुवर्तनम्।
उपवीतमतस्तासामङ्गं प्रकरणाद्भवेत् ॥ ३२ ॥

एवं प्राप्ते वदामोऽत्र निविद्भिर्व्यवधानतः ।
विच्छिन्ना सामिधेनीनां प्रक्रिया नानुवर्तते ॥ ३३ ॥

यस्तु—सान्निधानस्यैवासम्बन्धिभिः पदैर्व्यवधानं न प्रकरणस्येति मन्यते, तस्य सर्वप्रकरणानुवृत्तेः सर्वे धर्माः सर्वेषामुपदेशेनैव स्युः, अतो विश्वजिदादीनामपि क्रत्वर्थत्वं स्यात् ।

यत्तु—निविदामप्यवान्तरप्रकरणेन सामिधेन्यङ्गत्वादव्यवधायकत्वमित्युक्तम्। तदयुक्तम्, लिङ्गेन हि प्रकरणं बाधित्वा निविदोऽग्निसमिन्धनाङ्गं भवन्ति, न चाग्निः सामिधेन्यङ्गं भवति, येन तद्द्वारेण निविदोऽपि तदङ्गं स्युः। किन्तु सामिधेन्य एवाग्न्यङ्गम्, निविदोऽपि, न तासां मिथः सम्बन्धः। तथाच वक्ष्यति "गुणानां च परार्थत्वादसम्बन्धः" ३ १-२२ इति। तेनासम्बन्धिभिर्निविद्भिर्दर्शपूर्णमासाङ्गं विच्छिन्नं सामिधेनीनां प्रकरणं नोपवीतं गृह्णाति ।

नन्वेवं निविदङ्गमुपवीतं स्यात्, न तासां प्रकरणमस्ति, अभितः कीर्तनाभावात्। सन्निधिमात्रमपि नास्ति, काम्यैर्व्यवधानात्, तर्हि काम्यानामेवाङ्गं स्यात्, अव्यवधानात्। फलावच्छेदेन च (फलवत्त्वेन) प्रकरणसद्भावात्। न तेषां विकृतित्वात्, इह हि न नित्यसामिधेन्याश्रयेण गुणमात्रं फलाय विधीयते, विच्छिन्नप्रक्रियाणां तासामाश्रयत्वानुपपत्तेः, वाक्येन चाश्रयसम्बन्धे वाक्यभेदात्, किं त्वनुवचनान्तराणि संख्याविशिष्टानि फले विधीयन्ते, तानि च संख्यायुक्तानुवचनत्वसामान्यात्, नित्यानुवचनप्रकृतीनि, ततश्च तासामृचाम्, अन्येषां च तद्धर्माणां प्राप्तिः, अनु-शब्देन च यस्तत्र 'नमः प्रवक्त्रे' इति निगदानन्तरभावः सामिधेन्यङ्गत्वेनोक्तः, सोऽप्यत्रातिदिश्यते, स च निगदः क्रतुप्रयुक्तत्वान्न बहिःप्रयोगे लभ्यते, ततस्तद्वशेनानुवचनान्तराणामपि क्रतुमध्यप्रयोगसिद्धिः, एतैरेव चाग्निसमिन्धनस्य प्रसङ्गात्सिद्धेर्नित्यानुवचननिवृत्तिः, तेनैतेषामनुवचनानाम् क्लृप्तोपकारप्राकृतधर्मशरिपूरितानां कथंभावापेक्षाभावान्नास्ति प्रकरणम्, पाठसन्निधानमात्रं तु स्यात्, तच्च दुर्बलं प्रकरणादिति, दर्शपूर्णमासाङ्गमेवोपवीतम्।

ये तु पश्चात्तना गुणाः, ते दूरस्थानुवादेनैव द्वादशोपसत्त्ववद्विधातुम् शक्या इति, न तद्वशेनैकान्ततः प्रकरणानुवृत्तिर्विज्ञायते, यतः परप्रकरणे पाठो निर्विदां स्यात्।

यद्वा 'तिष्ठन्नन्वाह अन्तरानूच्य'मित्यादिष्वनुचनमात्रं श्रूयते, तत्र यदि सामिधेन्यनुवचनं प्रकृतं स्यात्, ततस्तदेवावगम्येत, तदभावात्त्वनुवचनमात्रमनु-

वाक्यादिसाधारणमिति, न सामिधेन्यनुवृत्तिरवधार्यते। यदपि 'देवा वै सामिधेनीरनूच्ये' तै० सं० २-५-११-३त्यन्ते वचनम्, तदप्याघारार्थवादत्वान्न सामिधेन्यनुवृत्तिं सूचयति। तस्माद्दर्शपूर्णमासाङ्गमुपवीतम्,

प्रभाकरमतस्यानुवादः।

एकदेशिनां त्ववान्तरप्रकरणाभावात्सन्निधेश्च प्रकरणाद्दुर्बलत्वादसत्यपि विच्छेदे सामिधेनीनां दर्शपूर्णमासाङ्गत्वमुपवीतस्य सिध्यतीति, व्यर्थमिदमधिकरणम् स्यात्। कश्चित्त्वाह उपव्ययत इत्येकं पदमन्विताभिधानाय कर्तारमपेक्षमाणं सन्निहितेन कर्त्राऽन्वीयत इति। तदयुक्तम्। प्रत्ययार्थेनापूर्वेण धातोरन्विताभिधानसिद्धेः, अवश्यं चानेन प्रत्ययेन सत्यपि सामिधेनीनां सन्निधानेऽधिकारापूर्वमभिधातव्यम्। सामिधेनीनां सन्निपातित्वेनापूर्वशून्यत्वात्। अतः पदश्रुत्यैव तदङ्गमुपवीतं भवतीति, किमर्थमिदमधिकरणम्? अपि चैवं पूर्वाधिकरणपूर्वपक्षेऽपि विच्छिन्नमप्यभिक्रमणमेकपदत्वात्सन्निहितेनैव प्रयाजकर्त्राऽन्वीयते इति तदधिकरणवैयर्थ्यं स्यात्। 'नन्वभिक्राममि'त्यस्यानाख्यातत्वात् सिद्धवत्प्रतीतेर्न कर्त्राकाङ्क्षा, किंतु शेषिभूतस्तत्र कर्ताऽपेक्षितः। न च शेषिणाऽन्विताभिधानमिति, मैवम्, अवघातादिषु शेषिणाऽन्विताभिधानाभ्युपगमात्, अपि च सर्वाण्येव कार्यार्थानि पदानि कार्येण शेषिणाऽन्वितमर्थमभिदधतीति यत्किञ्चिदेतत्।

अपि च यदि न शेषिणाऽन्विताभिधानम्, केन तर्ह्यन्वितमभिक्रमणमभिधातव्यम्, न ह्यनन्वितस्याभिधानं सम्भवति, गुणभूतस्तु कर्ता अनपेक्षितत्वात्, न तेनान्विताभिधानं सम्भवतीति त्वयोक्तम्, सम्भवे वा सन्निहितेनैव प्रयाजकर्त्राऽन्विताभिधानाद् व्यर्थमेकवाक्यत्वप्रतिपादनम्, प्रधानविधिनाऽभिक्रमणमन्वितमधीयत इति चेत्। न। तस्यापि शेषित्वात् उपवीतस्यापि तत्सम्भवान्न सन्निहितेनापि सामिधेनीकर्त्राऽन्वयः स्यात्। अथानभिहितमभिक्रमणं ग्राहको गृह्णीयात्, उपवीतमपि गृह्णीयात्। यदपि शेषिभूतः कर्ता अपेक्षितः, नानुस्ठातृभूत इति। तदपि विपरीतम्, अविहितस्य शेष्यपेक्षाभावात्, कर्त्रपेक्षातु क्रियास्वाभाव्यादेव स्यादित्यास्तां तावत्।

इति एकादशमुपवीताधिकरणम्

## वारणवैकङ्कतादिपात्राणां कृत्स्नयागाङ्गताधिकरणम् ॥ १२ ॥

## गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात् ॥ २२ ॥

आधानप्रकरणे वारण-वैकङ्कतानि यज्ञसंयुक्तानि पात्राणि श्रूयन्ते 'वारणो-यज्ञावचरः, वैकङ्कतो यज्ञाचरः मै.सं.१-६-७ इति। पवमानेष्टयोऽप्याधानप्रकरण एव प्रदेशान्तरे श्रुताः। तत्र पात्रेषु संदेहः-किं पवमानेष्टयङ्गम्? उत यज्ञमात्राङ्गमिति। तदर्थं च किं पवमानहवींष्याधानाङ्गम्? उत तान्यप्याधानेन समप्रधानान्य-ग्न्यर्थानि-इति। यद्यङ्गम्, ततो यज्ञसंयोगात्साक्षादाधाने असंभवन्त्यपि पात्राण्या-नर्थक्यतदङ्गन्यायेन पवमानेष्टिषु भवन्ति, अनङ्गत्वे तु कथं चिदपि यज्ञसंयुक्तानां प्रकृताधाननिवेशासंभवात्, इष्टीनां च स्ववमप्रकृततया अनारभ्यवादरूपेण सर्वयज्ञेषु संभवन्ति। तत्राधानस्य द्वितीयासंयुक्ताग्निसंस्कारार्थतया फलवत्त्वाद्-फलानि पवमानहवींषि प्रकरणात् तदङ्गम्। अत्रोच्यते 'यदाहवनीये जुहोती'ति वाक्यादेषामप्यग्न्यर्थता। नन्वनारभ्यवादोऽयं सर्वहोमाङ्गमाहवनीयं विधत्ते न त्वाहवनीयाङ्गत्वं पवमानहविषाम्।

### प्राभाकरमतस्यानुवादः

अत्र कश्चिदाह-अनारभ्यवादेन प्रकृतावाहवनीयोऽङ्गत्वेन विहितः पवमा-नेष्टिष्वतिदेशेन प्राप्तः। स च पवमानहविर्वेलायामनिष्पन्नत्वान्नाङ्गं संभवती-त्यङ्गत्वे निवृत्ते, यस्तस्य प्रकृतौ दृष्टः साक्षात्सम्बन्धांशः, स इह संभवे, न बाधनीयः, अवश्यं च पवमानहविषामाधानाङ्गत्ववादिनाऽप्यग्निनिष्पादकत्वम-भ्युपगन्तव्यम्। तच्च प्राकृतसंबन्धावाधाय साक्षादेवास्तु, किमाधानप्रणाड्या समाश्रीयत इति, सिध्यत्यग्न्यर्थत्वम्,

### तस्य निरासः

तदिदमसारम्-यत्तावदुक्तमङ्गत्वं निवृत्तमिति, तत्स्वसिद्धान्तविस्मरणात्, न हि चोदकावगतमङ्गत्वं निवर्तते। यद्यपि चानिष्पन्नत्वान्न साधयति, तथाऽप्य-साधयत एवाङ्गत्वमवघातस्येव कृष्णलचराववतिष्ठते। तेन साक्षात्सम्बन्धस्यै-वाङ्गत्वेनैव प्रकृतिवदुपपन्नत्वान्न तत्सिद्ध्यर्थं साध्यत्वमङ्गीकर्तव्यम्। अपि चार्थिकः प्रकृतौ साक्षात्सम्बन्धः, अङ्गत्वमेव शास्त्रार्थः। न चार्थिकं चोदकः-

प्रतिदिशति, यद्बलेन साध्यता स्यात्। प्रतिदिश्यतां वा सम्बन्धः, स तु येन केनापि प्रकारेण सिध्यतीति, साध्यत्वविशेषः कुतो लभ्यते।

यत्तु-साध्यत्वमाधानाङ्गत्ववादिनाऽप्यभ्युपगन्तव्यमिति। सत्यमभ्युपगन्तव्यम्, अस्ति हि तस्य प्रकरणं प्रमाणम्, भवतस्तु किं प्रमाणम्? प्रकरणमेवेति चेत्? न। तथा सत्याधानाङ्गत्वद्वारेणैवाग्नीनां साध्यत्वं स्यात्। यदि ह्यविशेषितम् साध्यत्वं प्रकरणात्सिध्येत्, ततोऽतिदेशवशेन साक्षात्तदित्याश्रीयेत, क्रत्वर्थत्वमेव तु प्रकरणादवगम्यते, नाविशिष्टं साध्यत्वम्, तेन यदि प्रकरणमङ्गीक्रियेत, आधानाङ्गतैव स्यात्। नो चेत्, साध्यत्वमेव न स्यात्। विश्वजिदादिवत्तु फलं कल्पयित्वा अग्नीनामंगत्वमेव स्यात्। अस्तु वाऽतिदेशावगतसाक्षात्सम्बन्धवशादेव साध्यत्वम्, तत्तूपदेशात्मकप्रकरणावगतक्रत्वर्थत्वविरोधाद्बाधितव्यम्।

अपि च करणत्वेऽपीष्टीनां न भवति साक्षादिष्टिसाध्यत्वमग्नीनाम्, ता हि सकलप्राकृताङ्गाहितोपकारसचिवा अग्नीन् साधयन्ति, तेन सर्वाङ्गानुष्ठानादवस्थितमुत्पत्त्यपूर्वं द्वारभूतमङ्गीकर्तव्यम्, तत्प्रणाड्याऽग्नीनां साध्यत्वम्, न साक्षात्।

अपि च न प्रकृतावाहवनीयस्य साक्षात्सम्बन्धः, अङ्गभूतेन हि प्रक्षेपेण आहवनीयस्य सम्बन्धः, न साक्षाद् यागेन। तदिहापि प्रकृतिवदतिदेशात्प्रणाड्यैव सम्बन्धः स्यात्। तस्मान्नैवमग्न्यर्थता सिध्यतीति, अन्यदुत्तरं वाच्यम्।

तदुच्यते—अयमभिप्रायो भाष्यकारस्य—

अनारभ्यविधानेन सत्यं नाग्न्यर्थता भवेत्।
तत्तुल्यं वाक्यमस्त्यन्यत्पवमानेष्टिसन्निधौ॥ ३४॥

तेन चाग्नेरनिष्पन्नस्यैव साधनत्वेन विधानासंभवात्, तस्यैव निष्पादयितव्यस्य फलवतः साधनत्वेनाफलानि पवमानहवींषि विधीयन्ते, सप्तमी च लक्षणया साध्यत्वमेव प्रतिपादयति 'तप्ते पयसि दध्यानयती'तिवत्। तस्माद्वाक्येन आधानवत्पवमानहविषामग्न्यर्थत्वान्नाधानाङ्गत्वम्, अतः सर्वयज्ञार्थानि पात्राणि-इति,

## वार्तिकमतम्।

आचार्यस्त्वसत्यपि पवमानहविषामग्न्यर्थत्वे, पात्राणां वाक्येन सर्वयज्ञार्थता सिध्यतीति, वाक्यद्वयकल्पनाक्लेशं न ममृषे। 'व्रीहीनवहन्ती'त्यादिषु यथाश्रुतव्रीहिमात्रार्थत्वेऽवघातस्यानर्थक्यात्, युक्तः प्रकरणानुप्रवेशः, तद्बलेन

च व्रीहिशब्दस्य साधनरूपलक्षणाश्रयणम्। इह तु यथाश्रुतयज्ञार्थत्वेऽपि, दीक्षणीयार्थस्येव वाङ्नियमस्यानर्थक्याभावान्न लक्षणाश्रयणेन प्रकरणानुप्रवेशकल्पना न्याय्या। यदि च पवमानेष्टिसन्निधौ पात्राणि यज्ञार्थानि श्रयेरन्, ततोऽनुवादस्य सति संभवे सन्निहितगामित्वात्सप्तदशारत्नित्वमिव वाजपेयस्य प्रकृतिवच्छन्दसन्निधापिते यूपे, कृष्णलहोमवच्च सौर्ये प्रकृतिवच्छन्दसंनिधापितेषु प्रयाजेषु पवमानेष्ट्यनुवादेन विधानात्, तास्वेव पात्राणि स्युः, न तु तासामिह सन्निधानमस्ति, तस्मात्प्रकरणात्पूषाद्यनुमन्त्रणमन्त्रवदुत्कृष्टानि पात्राणि सर्वार्थानीति, नार्थोऽधिकरणेन।

## वार्तिकमतेन सूत्रार्थवर्णनम्।

सूत्रं तु पूर्वाधिकरण एव पदोत्तरत्वेन व्याख्येयम्, निविद्भिर्व्यवायात्सामिधेनीवाक्यस्योपवीतवाक्यस्य च भेदः स्यादित्युक्तम्। ननु निविदां सामिधेन्यङ्गत्वाद्व्यवधायकत्वं स्यादिति ये वदन्ति, तेषामुत्तरम्' 'गुणानां च परार्थत्वादि'ति निविदोऽपि लिङ्गेनाग्निसमिन्धने गुणभूताः, सामिधेन्योऽपि। अतो न तासाम् मिथः सम्बन्धः।

इति द्वादशं पात्राणांकृत्स्नयागाङ्गताधिकरणम्।



## वार्त्रघ्न्यधिकरणम् ॥ १३ ॥

## मिथश्चानर्थसम्बन्धः ॥ २३ ॥

दर्शपूर्णमासयोराग्नेयः सौम्यश्च द्वावाज्यभागौ विहितौ। तयोः क्रमेणानुवाक्याचतुष्टयमाम्नातम्-आग्नेयी सौमीत्येकं युगलम्, पुनराग्नेयी सौमी चेत्यपरम्। तत्र प्रथमद्वितीये वार्त्रघ्न्यौ, तृतीया चतुर्थी च वृधन्वत्यौ तत्रापरं वचनं 'वार्त्रघ्नी-पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायामि। 'तै. सं. २–५–२–५ ति। संशयः—किमाज्यभागयोः क्रमप्राप्ता मन्त्रास्ताभ्यामाच्छिद्य वचनेन प्रधानाङ्गतया विधीयन्ते? उताज्यभागयोरेवाव्यवस्थया प्राप्तयोर्युगलयोर्व्यवस्थामात्रमिति। तदर्थमस्मिन्वचने पौर्णमास्यमावास्याशब्दौ कर्मवचनौ, उत कालवचनाविति।

तत्र—कालस्यास्मरणीयत्वान्न मन्त्रेण प्रयोजनम्।
नापि प्रकरणं तस्य तेन नासाविहोच्यते ॥ ३५ ॥
कर्मणः प्रकृतत्वेन मन्त्रापेक्षितयापि च।
तत् पौर्णमास्यमावास्याशब्दाभ्यामभिधीयते ॥ ३६ ॥

सप्तमी च 'पूर्वेद्युरमावास्यायां वेदिमि'तिवत्प्रधानेऽप्यविरुद्धा, तस्माद्वाक्येन क्रमं बाधित्वा प्रधानार्था मन्त्राः—इति।

नैवं यद्यपि कर्मैव शब्दाभ्यां प्रतिपाद्यते।
तथाऽपि सप्तमीश्रुत्या न प्रधानत्वसंभवः ॥ ३७ ॥

'पूर्वेद्युरमावास्यायामि'ति तु लक्षणा, न चेह तथा, मुख्यार्थसंभवात्। न चेह सौम्यस्य मन्त्रस्य प्रधानेषु सामर्थ्यमस्ति, सोमस्य प्रधानदेवताया अभावात्। अग्नीषोमीयेऽप्यग्निसहितस्य देवतात्वम्, न केवलस्य, अमावास्यायां तु नास्त्येव सोमः, न च वचनादयथार्थत्वम्, लिङ्गं हि वाक्याद्बलीयः, वाक्याद्धि कर्मणः लक्षणाश्रयणात्, न श्रुतेः।

अथापि विधिवाक्यत्वान्मन्त्ररूपं बाधेत, यद्यबाधेन नोपपद्येत, तत्तु व्यवस्थामात्रमपेक्षितमल्पं च विदधत्सुतरामबाधेनैव वर्तते—पौर्णमासीगतयोः आज्यभागयोर्वृत्रघ्न्यौ, अमावास्यागतयोर्वृधन्वत्याविति। यद्वा कालद्वारेण कर्मणि शब्दप्रवृत्तेः काले मुख्य इति, तद्द्वारेण व्यवस्था विधीयते इति, आज्यभागयोरेव मन्त्राः।

इति त्रयोदशं वार्त्रघ्न्यधिकरणम्



मुष्ठीकरणादीनां कृत्स्नप्राकरणिकाङ्गताधिकरणम् ॥ १४ ॥

आनन्तर्यमचोदना ॥ २४ ॥ वाक्यानां च समाप्तत्वात् ॥२५॥

दर्शपूर्णमासयोराम्नायते 'हस्तावनेनिक्ते, उलपराजिं स्तृणाती' ति। तथा ज्योतिष्टोमे 'मुष्टीकरोति, वाचं यच्छति, दीक्षितमावेदयती 'ति। तत्र हस्ता-

वनेजनं हस्तसंस्कारार्थम्, मुष्टीकरणवाग्यमने च मनःप्रणिधानार्थे। तेन तत् त्रयमपि लिङ्गात्करिष्यमाणकर्माङ्गं सत्किमनन्तरयोरुलपराजिस्तरण-दीक्षितावेदनयोरङ्गम्? उत सर्वाङ्गमिति संशयः। तत्रानन्तर्यात्, एकवाक्यत्वात्, अवान्तरप्रकरणाद्वा तन्मात्राङ्गत्वे प्राप्ते—

अभिधीयते—लिङ्गप्रकरणाभ्यां हि सर्वार्थत्वं प्रतीयते।
क्रमश्च दुर्बलस्ताभ्यामतः सर्वार्थता भवेत्॥ ३८॥

न चाख्यातद्वयस्य यच्छब्दाद्युपबन्धरहितस्यैकवाक्यत्वं संभवति। येन वाक्येनैव तादर्थ्यं स्यात्, न च श्रुत्यादिविहिताङ्गसंदंशोऽस्ति, येनावान्तरप्रकरणं स्यात्। तस्मात्सर्वार्थता स्यात्।

इति चतुर्दशं हस्तावनेजनाधिकरणम्।



## आग्नेयस्य चतुर्धाकरणाधिकरणम्॥ १५॥

**शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत॥ २६॥ व्यवस्था वाऽर्थसंयोगाल्लिङ्गस्यार्थेन सम्बन्धाल्लक्षणार्था गुणश्रुतिः॥ २७॥**

दर्शपूर्णमासयोराग्नेयाग्नीषोमीयैन्द्राग्नाः पुरोडाशाः। 'तत्रआग्नेयं चतुर्धा करोती'ति चतुर्धाकरणं किं सर्वेषाम्, उताग्नेयस्यैवेति भवति विचारः।

तत्राग्निसम्बन्धामात्रेण भवेद् द्रव्योपलक्षणम्।
सम्बन्धश्चाविशिष्टोऽतः सर्वेषामुपलक्षणम्॥ ३९॥

अग्निस्तावदत्र चतुर्धाकरणविषयद्रव्योपलक्षणमात्रम्। न स्वयं कार्योपयोगी। तेन नासौ यथाश्रुत एव ग्रहीतव्यः, येन देवतात्मभूतेनैवोपलक्षणं स्यात्, किं तु यावता विना न शक्नोति द्रव्यं लक्षयितुं तावन्मात्रमादर्तव्यम्। सम्बन्धमात्रेण चासौ शक्नोति तल्लक्षयितुम्। सम्बन्धश्चाग्नेरग्नीषोमीयेऽपि विद्यते। तस्मात्तस्याग्नेयशब्देन लक्षितत्वात्स्यात् चतुर्धाकरणम्।

अथवा देवतात्वमेवास्ति, यद्धि द्वाभ्यां दीयते, दीयत एव तदेकस्मा अपि। यद्वा अग्नेरिदमिति सम्बन्धमात्रेणाग्नेयशब्दो भवत्येव। 'सर्वत्राग्निकलिभ्यां ढग् वक्तव्यः' इति स्मरणात्। तस्मात्सर्वत्र चतुर्धाकरणमिति प्राप्ते—

ब्रूमः—केवलाद्देवतावाची तद्धिताऽग्नेः समुच्चरन्।
नान्ययुक्ताग्निदेवत्यं प्रतिपादयितुं क्षमः॥ ४०॥

देवताभूतस्तावदिहासावग्निशब्दस्तद्धितेनोपलक्षणमुपादीयते, संभवति चास्य यथाश्रुत्यैवोपलक्षणत्वम्, केवलाग्नेयस्यापि सद्भावात्। अतो न शब्दानवगतेन सम्बन्धमात्रेणोपलक्षणत्वं युक्तम्, विना कारणेन श्रुतिबाधप्रसङ्गात्, अग्नीषोमीयादौ तु समासादुत्पन्नस्तद्धितो द्वयोः सापेक्षयोर्देवतात्वमाह। तेन तत्रान्यसापेक्षस्याग्नेर्देवतात्वम्, न च सापेक्षस्य तद्धिते सामर्थ्यमस्ति, तेनाग्नेयशब्दो न शक्नोत्यग्नीषोमीयादिकमभिवदितुम्, यद्यपि च सम्बन्धमात्रेऽविरुद्धस्तद्धितऽस्तथाप्यत्र देवतार्थतैवाश्रयितव्या, लक्षणार्थत्वात्, प्रसिद्धसम्बन्धं लक्षणम् भवति, प्रसिद्धिश्च विधिवाक्यादेवावाप्तया। विधिवाक्ये चाग्नेर्देवतासंबन्ध एव पुरोडाशेनावगतः, न सम्बन्धमात्रम् तस्माद्देवतात्वमेवोपलक्षणम्, तच्चाग्नीषोमीयादौ नास्तीत्याग्नेयस्यैव चतुर्द्धाकरणम्।

यदपि शतपथब्राह्मणे 'तं चतुर्धा कृत्वा पुरोडाशं बर्हिषदं करोती' ति सामान्यवचनम, तदप्यनेनैव विशेषवचनेनोपसंह्रियत इति, तस्यैव चतुर्धाकरणम् युक्तमिति।

इति पञ्चदशमाग्नेयचतुर्धाधिकरणम्

इति पार्थसारथिमिश्रविरचितायाम्

शास्त्रदीपिकायां तृतीयाध्यायस्य प्रथमः पादः॥ १॥



# अथ तृतीयाध्याये द्वितीयः पादः

## लिंगाधिकरणम् ॥ १ ॥

**अर्थाभिधानसंयोगान्मत्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात् ॥ १ ॥ संस्कारकत्वादचोदितेन स्यात् ॥ २ ॥**

पूर्वपादे श्रुतिविनियोगः प्राधान्येन चिन्तितः । अधुना मन्त्रलिङ्गविनियोगश्चिन्त्यते । विनियोजकत्वञ्च लिङ्गस्य मन्त्राधिकरणे सिद्धम्, अर्थप्रकाशनेनोपकुर्वन्तीत्यभिधानात् । तद्विशेषस्त्विदानीं चिन्त्यते, लिङ्गम्--सामर्थ्यम् । तच्च मुख्य इव गौणे च कथञ्चिद्विद्यते । तदिह संशयः–किं मुख्य एवार्थे मन्त्राणाम् विनियोगः ? किं वा गौणेऽपी ? ति । कः पुनर्मुख्यः ? को वा गौणः ? यः शब्दादेवाऽवगम्यते, स मुख्यः । यथाऽग्निशब्दाद् ज्वलनः, बर्हिःशब्दाच्च कुशादयः, यस्तु शब्दाभिहितार्थगुणसम्बन्धात्तत्सदृशोऽर्थः प्रतीयते, असौ गौणः । यथाग्निशब्दान्माणवकः, स हि ज्वलनगुणपैङ्गल्यादिगुणयोगाद् गम्यते, तथा बर्हिः शब्देन तृणान्तरमुलपादि । ननु प्रयोग-प्रतीत्यविशेषादुभयत्र वाचकत्वं कस्मान्न भवति ? नाविशेषः, विशेषप्रतीतेः, अग्निरिव माणवक इति सादृश्याप्रत्ययाद् 'गुणादेव च प्रयोगप्रतीत्युपपत्तेरनेकार्थत्वमन्याय्यम् । परगुणाः परत्र न सभवन्तीति चेत् ? न । प्रत्यभिज्ञानात् । येऽपि प्रतिद्रव्यं गुणभेदमातिष्ठन्ते, तेऽपि सामान्यात्मनैक्यमिच्छन्त्येव, तेनोपपन्नो गौणमुख्यविभाग इति, युक्ता चिन्ता ।

तत्र —अर्थानां स्मरणार्हत्वान्मन्त्राणां चापि शक्तितः ।
प्रतिप्रधानमावृत्तेर्गुणानामुभयार्थता ॥ ४१ ॥

उभयेषामपि तावदर्थानामनुष्ठेयत्वात्स्मरणमपेक्षितम्, मन्त्राश्चार्थम् प्रति गुणभूताः समर्थाश्चोभयत्रापि यथाकथंचित्स्मृतिमाधातुम् । साक्षादभिधानस्यापि स्मरणमेव फलम् . नाधिकम् । तच्च गौणसामर्थ्यस्याप्यविशिष्टम् । प्रतिप्रधानं च गुणवृत्तिर्न्याय्या । तस्मादुभयत्र विनियोग इति प्राप्ते—

अभिधीयते—गौणे सदपि सामर्थ्यं न प्रमाणान्तराद्विना ।
आविर्भवति मुख्ये तु शब्दादेवाविरस्ति तत् ॥ ४२ ॥
तात्पर्यं तु स्वतो मुख्ये गौणार्थपरता पुनः ।
प्रमाणन्तरविज्ञेया तदभावान्न सिध्यति ॥ ४३ ॥

न ह्यग्निरित्येतावता प्रमाणान्तरमन्तरेण गौणे सामर्थ्यम्, तात्पर्यं वा कथंचिदपि लौकिकाः प्रतिपद्यन्ते। मुख्ये तु श्रवणादेव शब्दस्योभयमवगच्छन्ति, न चेह प्रमाणान्तरमस्ति, येन मन्त्राणां गौणे सामर्थ्यम्, तात्पर्यं वाऽभिव्यज्येत। न चानाविर्भूते सामर्थ्ये, तात्पर्ये च शब्दार्थः प्रतीयते। तेन गौणोऽर्थो मन्त्रान्न प्रतीयत एव। कथमप्रतीयमाने विनियोगः स्यात्, मुख्यस्त्वर्थः शब्दादेवावगम्यत इति, युक्तस्तत्र विनियोगः।

यस्य तु मुख्योऽर्थः प्रकरणे नास्ति, तस्योत्कर्षः। यथा पूषाद्यनुमन्त्रणमन्त्राणाम्। यस्य तूत्कर्षोऽपि न संभवति, तस्य जपमात्रेणोपयोगः, न तु गौणत्वम्, अत्यन्ताप्रामाणिकत्वात्। अपि च प्रथमावगतमुख्यविनियोगेनैव कृतार्थत्वान्मन्त्रस्य न तद्वशेन गौणे विनियोगः। अर्थोऽपि गौणो ध्यानाद्युपायान्तरेणापि स्मृतिसिद्धेः नात्माभिधायिनं मन्त्रमपेक्षते। अतोऽप्रमाणकस्तत्र विनियोगः। मुख्यविनियोगस्तु मन्त्राकाङ्क्षावशाद्भवतीति, तत्रैव विनियोगः।

इति प्रथमं लिंगाधिकरणम्।

---

ऐन्द्रयधिकरणम्॥ २॥

**वचनात्त्वयथार्थमैन्द्री स्यात्॥ ३॥ गुणाद्वाप्यभिधानं स्यात् संबन्धस्याशास्त्रहेतुत्वात्॥ ४॥**

अपवाद आरभ्यते। अग्नौ श्रूयते 'निवेशनः संगमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इति। तत्र संशयः—किमनेन मुख्यस्येन्द्रस्य प्रकाशनम् कर्तव्यम्, ? उत गौणस्य गार्हपत्यस्येति?

तत्र—पूर्वाधिकरणन्यायान्मुख्यस्येति प्रतीयते।
विनियोज्यानुसारेण विनियोगस्तु वर्ण्यते॥ ४४॥
न खल्विन्द्राभिधानस्य मन्त्रस्याग्निप्रकाशने।
शक्तिरस्ति न चाशक्तोऽशक्यार्थे विनियुज्यते॥ ४५॥

तेन मन्त्रानुसारेण विनियोगार्थवर्णना।
इन्द्रो हि गार्हपत्येन गौण्या वृत्त्याऽभिधीयते ॥ ४६ ॥

यज्ञसाधनसाधर्म्याद् यद्वा गृहपतेर्यतः।
तेनायं गार्हपत्यः स्यादिन्द्रोऽवयवयोगतः ॥ ४७ ॥

द्वितीया वा सप्तम्यर्थं लक्षयति—गार्हपत्ये स्थित्वोपतिष्ठते—इति

यद्वा उपतिष्ठत इति द्वे क्रिये विद्येते—समीपस्थानम्, आत्मनेपदानुमितम् चाभिधानम्। तत्रैन्द्रमन्त्रकरणकेऽभिधाने गार्हपत्यस्य कर्मत्वं संभवतीति समीपस्थानविशेषणं गार्हपत्यो भवति—गार्हपत्यमुपेत्याभिधत्ते—इति। तस्मान्मुख्ये एव विनियोगोऽत्रापीति प्राप्ते—

अभिधीयते—अग्नौ वचनसामर्थ्याद्विनियोगः प्रतीयते।
न चात्यन्तासमर्थत्वं गौणसामर्थ्यसंभवात् ॥ ४८ ॥

यत्र मानान्तरं नास्ति तत्र गौणो न गम्यते।
प्रमाणान्तरसद्भावे गौणे शब्दः प्रवर्तते ॥ ४९ ॥

पूर्वाधिकरणेऽप्येतद्वर्णितं विद्यतेऽत्र च।
विस्पष्टं वचनं तेन गार्हपत्यार्थता स्फुटा ॥ ५० ॥

अवश्यं कल्पनीयं हि मन्त्रस्य ब्राह्मणस्य वा।
गौणत्वं तच्च मन्त्रस्य प्राप्तार्थस्यैव युज्यते ॥ ५१ ॥

अप्राप्तार्थे विधौ नैव गौणत्वमुपपत्तिमत्।
न चावयवयोगेन वृत्तौ रूढ्याऽग्निवेदनात् ॥ ५२ ॥

अभिधानक्रियायाश्च प्रधानत्वात्तदन्वयः।
गार्हपत्यस्य नान्यार्थसमीपस्थितिगामिता ॥ ५३ ॥

तदिहास्ति तावद् गार्हपत्ये विनियोग इति स्थितम्। सति च तस्मिन्, लिङ्गादिन्द्रार्थताऽपि भवति, नेति बलाबलाधिकरणे चिन्तयिष्यते।

इति द्वितीयमैन्द्र्यधिकरणम्।



## हविष्कृदाह्वानाधिकरणम् ॥ ३ ॥

**तथाह्वानमपीतिं चेत् ॥५॥ न कालविधिश्चोदितत्वात् ॥६॥ गुणाभावात् ॥७॥ लिङ्गाच्च ॥८॥ विधिर्वोपश्चोपदेशे स्यात् ॥९॥**

दर्शपूर्णमासयोराम्नायते "हविष्कृदेहीति त्रिरवघ्नन्नाह्वयती" तै० ब्रा० ३-२-५-७ ति। तत्र संशयः—किमयं हविष्कृदेहीति मन्त्रो गौणेऽवघाते प्रयोक्तव्यः? किं वा मुख्ये हविष्कृदाह्वाने? इति। तदर्थमिदं विचार्यते किमस्मिन्वचने? अवघ्नन्नित्यवघातमुद्दिश्य मन्त्रो विधीयते—हविष्कृदेहीत्यवघ्नन्निति, किं वा मन्त्रस्याह्वानेन संबन्धः, अवहन्तिस्तु काललक्षणार्थो हविष्कृदेहीति त्रिराह्वयत्यवघातकाले-इति।

तत्र—पूर्वाधिकरणन्यायाद्विधौ युक्ता न लक्षणा।
मन्त्रस्य त्वयथार्थत्वं वचनान्नैव दुष्यति॥ ५४॥

त्रिरिति तर्हि कथं विधीयते इति चेत्? प्राप्तावघातोद्देशेन मन्त्रस्य, त्रिरभ्यासस्य च विधौ वाक्यभेदात्, पाठप्राप्तानुवादत्वाददोषः। मन्त्रसमाम्नाये हि मन्त्रं त्रिरभ्यस्तमेव केचिदामनन्ति। आह्वयतिरपि 'एही'ति शब्दोच्चारणसाम्यात् गौणः, तस्मादवघाताङ्गं मन्त्र इति प्राप्ते—

अभिधीयते—त्रिरभ्यासो न पाठेन नित्यप्राप्तो यतः क्वचित्।
द्विः पठ्यते सकृच्चापि तस्मान्नैवमनूद्यते॥ ५५॥
न पाक्षिकानुवादत्वं नित्यान्वयविरोधतः।
तस्मादत्र त्रिरभ्यासो विधातव्यस्तथा सति॥ ५६॥
मन्त्रस्य न विधिः शक्यो वाक्यभेदप्रसङ्गतः।
आह्वानेन तु मन्त्रस्य योगो हन्तेस्तु लक्षणा॥ ५७॥

नन्वेवमप्याह्वानमनूद्य त्रिरभ्यासः, हन्तिकालश्च विधीयत इति वाक्यभेदः स्यात्। न। अर्थप्राप्तत्वात्। अवघातकाल एव सहायाह्वानमर्थप्राप्तम्, अतोऽनुवादमात्रमवहन्तिः, अनुवादत्वादेव लक्षणाऽपि न दोषः, तवापि चाविशिष्टं ब्राह्मणे जघन्यवृत्त्याश्रयणम्, आह्वयतेर्गौणत्वात्, अपि च नात्रैन्द्र्येतिवच्छ्रौतो विनियोगः, किंन्त्वितिकरणावमृष्टस्य मन्त्रस्य, अवघातस्य च समभि-

व्याहारात्संबन्धमात्रं गम्यते। तत्र सति संभवेऽङ्गाङ्गिभावः स्यात्। स तु वाक्यभेदान्मन्त्रलिङ्गविरोधाच्च न संभवतीति, एककालतैव संबन्ध इति गम्यते, न खलु वेहीति परप्रेषणरूपस्य मध्यमपुरुषस्य हविष्कृदिति च संबोधनरूपस्याचेतनेऽवघाते सामर्थ्यमस्ति। तस्मात्, त्रिरावृत्तिमात्रविधानादाह्वानाङ्गम् मन्त्रः नायथार्थोऽवघाते।

इति तृतीयं हविष्कृदाह्वानाधिकरणम्।

---

## उत्थानविसर्जनाधिकरणम ॥ ४ ॥

### तथोत्थानविसर्जने ॥ १० ॥

उत्तिष्ठन्नन्वाह, अग्नीदग्नीन्विहरे' आ. प. श्रौ. १२-१७-२१ ति। 'व्रतम् कृणुतेति वाचं विसृजती' तै. सं. ६-१-४ ति। अत्रापि पूर्ववत्संशयपूर्वोत्तरपक्षाः, वाक्यभेदस्त्विहाङ्गाङ्गित्वपक्षेऽपि नास्तीति. तदेव युक्तमिति विशेषाशङ्का। श्रुतिविनियोगाभावात्तु मन्त्रलिङ्गविरोधादत्रापि कालार्थ एव संयोगः, कालश्चेह विधीयते, न पूर्ववदनूद्यते इति विशेषः।

इति चतुर्थमुत्थानविसर्जनाधिकरणम्।

---

## सूक्तवाकाधिकरणम् ॥ ५ ॥

### सूक्तवाके च कालविधिः परार्थत्वात् ॥ ११ ॥ उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥ १२ ॥ स देवतार्थस्तत्संयोगात् ॥१३॥ प्रतिपत्तिरिति चेत्स्विष्टकृद्वदुभयसंस्कारः स्यात् ॥ १४ ॥

दर्शपूर्णमासयोः श्रूयते 'सूक्तवाकेन प्रस्तरं प्रहरती'ति। तत्र संशयः किम् प्रस्तरप्रहरणस्य सूक्तवाकस्य च कालार्थः संयोगः, अथवाङ्गाङ्गिभावः—इति।

तत्र द्वयोः कृतार्थत्वान्नाङ्गाङ्गित्वं प्रकल्पते ।
कालार्थस्तेन संयोगस्तयोर्दर्शादिवद्भवेत् ॥ ५७ ॥

यथा 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'त्युभयोः कृतार्थत्वात्कालार्थः संयोगः, तथेहापि सूक्तवाकस्येष्टदेवताभिधानेन कृतार्थत्वात्, प्रहरणस्य च नानाकर्मोपयुक्तप्रस्तरप्रतिपादनेन प्रयोजनवत्त्वात्, अङ्गाङ्गित्वापेक्षाभावात्कालार्थः संयोगः, तत्रापि निर्ज्ञातकालत्वात्सूक्तवाकः प्रस्तरप्रहरणस्य कालं लक्षयति। तृतीया चेत्थंभूतलक्षणे भविष्यति। न हि कथंचिदपि देवताभिधायिनः सूक्तवाकस्य प्रहरणाङ्गता संभवति, प्रहरणे देवताभावात्। अतः कालार्थ एव संयोगः। एवं प्राप्ते—

ब्रूमः—श्रुत्या प्रहरणाङ्गत्वं सूक्तवाकस्य गम्यते ।
तेन तद्देवतायोगादेष होमो भविष्यति ॥ ५८ ॥

तृतीयाश्रुत्या सूक्तवाकस्य करणत्वं गम्यमानं न शक्यमुत्स्रष्टुम्। न चेत्थंभूतलक्षणे तृतीयेयम्, कारकविभक्तेर्बलीयस्त्वात। किं बलीयस्त्वम्? सर्वो हि संबन्धः क्रियागर्भ एव। तेन सूक्तवाकप्रहरणयोर्लक्षणक्रियागर्भोऽयं संबन्धः। न चेह लक्षणक्रियोपात्ता, तामनुपात्तामपेक्ष्यायं सम्बन्धः प्रत्येतव्य इति विप्रकृष्यते, क्रियाकारकसम्बन्धस्तु नान्यापेक्ष इति बलीयस्त्वम्। तेन करणमेव सूक्तवाकः। यद्यपीष्टदेवताप्रकाशनेनासौ कृतार्थः, तथाऽपि विनियुज्यते वचनात्। किं हि वचनम् न कुर्यात्। कथं पुनर्देवताभिधायिनः प्रहरणाङ्गता? श्रुतिविनियुक्तमन्त्राङ्गत्वबलादेव तदभिधेयाभिरिष्टदेवताभिः संयोगः प्रहरणस्य कल्प्यते। तेनायं प्रहरतिरिष्टदेवतासंस्कारार्थो होमो भविष्यति। तेनोपपन्नमिष्टदेवताप्रकाशनं कुर्वत एव सूक्तवाकस्य प्रहरणाङ्गत्वम्।

इति पञ्चमं सूक्तवाकाधिकरणम्।

---

## सूक्तवाकस्य विभज्य विनियोगाधिकरणम् ॥ ६ ॥

**कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥ १५ ॥ यथार्थं वा शेषभूतसंस्कारात् ॥ १६ ॥ वचनादिति चेत् ॥ १७ ॥ प्रकरणाविभागादुभे प्रति कृत्स्नशब्दः ॥ १८ ॥**

प्रहरणाङ्गं सूक्तवाक इति स्थितम्। इदानीमिदं संदिह्यते—किं कृत्स्नः-सूक्तवाकः पौर्णमस्याम्, अमावास्यायां च प्रयोक्तव्यः ? उतेष्टदेवतानुरोधेन विभज्य प्रयोगः—इति। तत्र सूक्तवाकशब्दस्य समस्तानुवाकवचनत्वेनाध्येतॄणां प्रसिद्धेः आग्नेयादिभावनानां षण्णामप्यन्योन्यनिरपेक्षाणामेव कथंभावात्मकप्रकरणवत्त्वात् एकैकस्य कर्मणः सकलः सूक्तवाकोऽङ्गं प्रयाजादिवत्, तत्र सत्यप्येवमेककालवर्तिनां त्रयाणां तन्त्रेण प्रयाजादिवदुपकरोतीति, न भेदेन प्रयोक्ष्यते। समुदायद्वये तु कालभेदात्सकलस्यैवावृत्त्या भवितव्यम्। नन्विष्टदेवताप्रकाशनार्थो मन्त्रोऽयम् प्रहरणमपीष्टदेवतासंस्कारार्थमित्युक्तम्, तत्रामावास्यादेवतापदानि पौर्णमास्यां न प्रयोगार्हाणि, प्रयोजनाभावात्। इतराण्यपीतरत्रेति विभाग एव प्राप्नोति। नैवम्, वचनाद्धि सकलप्रयोगो गम्यते। तत्राविद्यमानार्थान्यपि पदान्यदृष्टाय प्रयोक्ष्यन्ते वचनादिति प्राप्ते—

सिद्धान्तः।

उच्यते—विभज्य प्रयोगः प्रयोजनवशादित्युक्तो हेतुः, न हीन्द्राग्न्यादिशब्दानां पौर्णमास्यां प्रयोजनम्। नाप्यग्नीषोमादिशब्दानामितरत्र प्रयोजनम्। यत्तु वचनादित्युक्तम्, तत्र सूक्तवाकशब्दस्यावयवव्युत्पत्त्या इष्टदेवताप्रकाशकमन्त्रवचनत्वात् सूक्तं वक्तीति सूक्तवाकः, तेन यस्मिन्प्रयोगे यावत्यो देवता इष्टाः, एका वा बह्यो वा प्राकृत्यः, वैकृत्यो वा, तत्र तावद्देवतापदप्रयोगादेव संपूर्णः सूक्तवाकः। तदतिरिक्तानिष्टदेवतापदप्रयोगे प्रत्युत सूक्तवाकत्वं हित्वा दुरुक्तवाक एव स्यात्, तस्मादिष्टदेवतानुरोधेन निष्कर्षः।

इति षष्टं सूक्तवाकस्य विभज्य विनियोगाधिकरणम्।

---

## लिंगक्रमसमाख्यानाधिकरणम् ॥ ७ ॥

### लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम् ॥ १९ ॥

"ऐन्द्राग्नमेकादशकपालं निर्वपेदि'त्यारभ्यैन्द्राग्न्यादिलिङ्गा इष्टयः समाम्नाताः। तेनैव लिङ्गक्रमेण काम्ययाज्यानुवाक्याकाण्डमित्येवं समाख्यातम् मन्त्रकाण्डसमाम्नानम् 'इन्द्राग्नी रोचनादिवः' इत्यादि। तदिह मन्त्रकाण्डे संशयः-किं यत्र यत्र सामर्थ्यमस्ति, तत्र तत्र सर्वत्र विनियोक्तव्या मन्त्राः क्रमसमाख्ये बाधित्वा ? उत तद्वशेन काम्येष्टिष्वेवेति। तदर्थं च किं लिङ्गमपि श्रुत्यादि-

वन्निरपेक्षमेव विनियोजकम्? उत क्रतुसंबन्धबोधकप्रमाणमन्यदप्यपेक्ष्य व्यापार-विशेषमात्रे लिङ्गस्य प्रामाण्यमिति।

तत्र—लिङ्गस्याप्यनपेक्षस्य मन्यते विनियोक्तृताम्।
तद्बलीयः क्रमाख्याभ्यामिति सर्वार्थता भवेत्॥ ५९॥

स्वाध्यायविध्यध्यापितस्य तावन्मन्त्रस्यावश्यं प्रयोजनेन भवितव्यम्। तत्र मन्त्रस्वरूपमेव दृष्ट्वाऽस्यार्थस्य प्रकाशकोऽयम्, अतोऽत्र विनियोक्तव्य इति बुद्धि-रुत्पद्यते, नच निष्प्रयोजनस्य प्रकाशनमर्थवदिति, तद्द्वारेण तत्सम्बन्धिकर्मा-पूर्वार्थत्वमपि तत एव गम्यते, किमत्र प्रमाणान्तरेण। तच्च क्रमसमाख्याभ्याम् प्रबलमिति, तद्भावेन लिङ्गात्सर्वार्थतेति प्राप्ते—

ब्रूमः—सत्यं प्रयोजनापेक्षा मन्त्रस्यास्ति तथाऽपि तु।
नैव सामर्थ्यमात्रेण विनियोगोऽस्य संभवी॥ ६०॥

न ह्यपेक्षितमपि प्रयोजनं प्रमाणमन्तरेण लब्धुं शक्यम्। न च सामर्थ्यमात्रेण प्रयोजनं किञ्चित् समर्थ्यते, अग्न्यादिस्वरूपमात्रप्रतिपादनं सामर्थ्यादवगम्यते। न च तावन्मात्रप्रकाशने फलमस्ति, कर्मापूर्वसाधनरूपप्रकाशनार्थता तु न कर्मसम्बन्धप्रमाणमन्यदन्तरेण सामर्थ्यमात्रात्सिध्यति। 'पूषा प्रपिष्टभागः' इत्यत्र तु भागशब्दस्य त्यागवचनत्वात्क्रतुसम्बन्धसिद्धिरिति वक्ष्यामः, न चाग्निसूर्यादीनां स्रुवादिवत्क्रत्वव्यभिचारः, येन क्रतुरुपस्थाप्येत। लोकेऽपि तत्सद्भावात्, इन्द्रादीनामपि मन्त्रार्थवादेतिहासादिभिः कर्मणोऽन्यत्रापि प्रतीतेः। तस्मात्क्रतुसम्बन्धप्रमाणमन्यदपेक्षितव्यम्। न च मन्त्रकाण्डस्य क्रमसमाख्याभ्या-मन्यत्प्रमाणमस्ति। ते च काम्येष्टिष्वेवेति, तत्रैव विनियोगः, न कर्मान्तरेषु।

न च कर्मान्तरेषु स्मरणापेक्षयैषां मन्त्राणां तत्र विनियोगः, तेषामुपाया-न्तरेणापि स्मृतिसिद्धेरेकान्ततो मन्त्रानपेक्षणात्।

यत्र त्वेकान्ततः, तत्र भवत्येव सामर्थ्यमात्रादपि तादर्थ्यम्, यथा—अर्थज्ञा-नस्यानुष्ठानाङ्गत्वम्, न हि तद्विनाऽनुष्ठानं सिध्यति। यथा चात्मज्ञानस्य सांपरा-यिकफलकर्मानुष्ठानौपयिकत्वम्। इह त्वेकान्ताभावान्न कर्मान्तरेषु विनियोगः। क्रमसमाख्याबलात्तु काम्येष्टिष्वेव यथाक्रमम्, यथासमाख्यञ्च याज्यानुवा-क्यात्वेन विनियोगः संभवताम्, असंभवतामपि तास्वेव सामिधेन्यादौ क्रमसहितेन लिङ्गेन विनियोगः।

इति सप्तमं लिगक्रमसमाख्यानाधिकरणम्।

आग्नेय्यधिकरणम् ॥ ८ ॥

**अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात् ॥ २० ॥ तदाख्यो वा प्रकरणोपपत्तिभ्याम् ॥ २१ ॥ अनर्थकश्चोपदेशः स्यादसम्बन्धात्फलवता ॥ २२ ॥ सर्वेषां चोपदिष्टत्वात् ॥ २३ ॥**

ज्योतिष्टोमे काश्चिदाग्नेय्य ऋचो 'अग्न आयाहि वीतये" इत्यादयः विशेषरूपेणासंयुक्ताः पठिताः। स्तोत्रादौ च वाक्यान्तरेण विनियुक्ताः। प्रदेशान्तरे "चाग्नेय्याऽऽग्नीधमुपतिष्ठत" इति श्रुतम्। तत्र विचारः—किं प्रकृताभिः, अप्रकृताभिवाऽऽग्नेयीभिरिदमुपस्थानं कर्तव्यम्, उत प्रकृताभिरेवेति।

तत्राग्नेयीति शब्देन सर्वासामभिधानतः।
अविशेषो न काचिद्धि प्रकृतग्रहणे प्रमा ॥ ६१ ॥

प्रकरणाद्विशेषोऽवगम्यत इति चेत्। न। प्रकरणस्याविशेषकत्वात्। यदि वाग्नेयीसंस्कारार्थमिदमुपस्थानं स्यात्, ततोऽपूर्वासम्बन्धिनः संस्कारायोगात्तत्साधनभूताः प्रकृता गृह्येरन्। उपादीयते त्विहाग्नेयी, तृतीयानिर्देशात्। अतः शब्दार्थमात्रस्यैवाङ्गत्वोपपत्तेर्न प्रकृतनियमः। प्रकृतनियमः सन्निधानादिति चेत्। न। तदभावात्। प्रदेशान्तरे हि स्तोत्रादावाग्नेय्यो विहिताः, न तूपस्थानविधौ कस्याश्चिदाग्नेय्याः सन्निधिरस्ति, यतस्तद्विषयोऽयमाग्नेयीशब्दः स्यात्। अस्तु वा सन्निधानम्, तथाऽपि स्तोत्रादिकार्यान्तरार्थत्वान्निराकाङ्क्षा नात्र सम्बन्धुमर्हति। न ह्यन्यार्थेन सन्निहितेनान्यो विशेष्यते। यथाऽश्वेन गच्छति श्वेतेन पटेन प्रावृतः, इति पटसम्बन्धेन निराकाङ्क्षेण सन्निहितेनापि श्वेतगुणेनाश्वो न विशेष्यते, तथेहापि। न चाऽग्नेयीशब्दस्याप्यस्ति विशेषापेक्षा, यथाश्रुताग्नेयीशब्दस्याश्वमात्रस्येव वाक्यार्थसमवायोपपत्तेः। तेनोभयोर्निराकाङ्क्षत्वात्सत्यपि सन्निधौ न मिथः सम्बन्धः। अपेक्षितसन्निधिर्हि सम्बन्धकारणम्। न सन्निधिमात्रम्। एवं सत्यपि यदि विशिष्येत श्रुतिजनिताविशेषप्रत्ययबाधाच्छ्रुतिरेव बाधिता स्यात्।

शंका

ननु यौगिकत्वादाग्नेयीशब्दः सन्निहितामेव व्यक्तिमवलम्बते। नैवम्। अवयवार्थसमन्वितव्यक्तिमात्रवचना यौगिकाः, न सन्निहितवचनाः। प्रमाणान्तरेण तु विशेष्यमाणास्तत्रैव व्याप्रियन्ते। यथा 'वैश्वदेव्यामिक्षेति, तद्धितः सन्निहितामामिक्षामेवाभिधत्ते, न ह्यत्र विशेषकमस्ति, सतोऽपि सन्निधेरन्यार्थत्वेन-

अविशेषकत्वात् । न चात्र सोमस्यैवैन्द्रवायवत्वमृगनुवादेनाग्नेयीत्वं विधीयते । येनानुवादस्य सन्निहितगामित्वात्सन्निहिता ऋचः प्रतीयेरन्, आग्नेयीनां तु सतीनामुपस्थानं प्रत्युपादानात्, तस्मात्सत्यपि सन्निधावविशेषः । न च सन्निधिरप्यस्ति, प्रदेशान्तरगतत्वादित्युक्तम् । तस्मादाग्नेयीमात्रग्रहणमिति प्राप्ते—

अभिधीयते—प्रकृता एव गृह्येरन् प्रसिद्धक्रतुसङ्गमाः ।
तासां कार्यविशेषो हि सुखायोत्रोपदिश्यते ।। ६२ ।।

आग्नीध्रोपस्थानस्य हि द्वे रूपे—आग्नीध्रोपस्थानता, ज्योतिष्टोमापूर्वसाधनौपयिकव्यापारता च, द्वयमपि शास्त्रेणैवावगन्तव्यम् । अन्यतरेणाप्यन्यतरस्य सिद्ध्यभावात्, न हि ज्योतिष्टोमगतो यो व्यापारः, स आग्नीध्रोपस्थानात्मक एवेति नियमः समस्ति, नाप्याग्नीध्रविषयमुपस्थानं ज्योतिष्टोमगतव्यापारः एवेत्येषोऽपि नियमः समस्ति । ज्योतिष्टोमानौपयिकस्यापि स्पर्शादिवदभिधानम्, तस्याग्नीध्रविषयस्य संभवात् । तेनैकेन शास्त्रसिद्धेनान्यतरस्यार्थापत्त्या, अनुमानेन वा सिद्ध्यभावाद् द्वे अपि रूपे शास्त्रतोऽवगन्तव्ये । तद्यद्यप्रकृताभिरुपस्थानं विधीयेत, ततस्तस्योपस्थानमेव श्रुतेर्लभ्यते, न तु ज्योतिष्टोमव्यापारत्वम्, अश्रुतत्वात् । न च कर्मानौपयिकेनोपस्थानमात्रेण फलमस्तीत्यनर्थकं वाक्यम् स्यात्, फलं वा कल्प्येत ।

### अवघातदृष्टान्तेन प्रत्यवस्थानम् ।

नन्ववघातादिवदुपस्थानस्य प्रकरणात् क्रतुव्यापारता सिद्ध्यति । सत्यं सिध्यति । न तु श्रुतिमकल्पयित्वा, प्रकरणस्य स्वतः प्रामाण्याभावात्, न चाकल्पनयोपपत्तौ कल्पना युक्ता । तथा विधेरपि गौरवं स्यात् । श्रुतिसिद्धमुपस्थानरूपत्वम्, प्रकरणकल्पितञ्च क्रतूपकारव्यापारत्वमुभयमपि ह्यनेनैव विधिना विधातव्यम्—आग्नेय्या क्रतुं प्रत्याग्नीध्रोपस्थानरूपं व्यापारं कुर्यादिति । न हि प्रकरणं विधायकम्, श्रुतिवत्सम्बन्धप्रमाणत्वात् । यथा 'व्रीहीनवहन्ती'ति श्रुतिसमर्पितव्रीह्यवघातसम्बन्धम्, प्रकरणकल्पितं क्रत्वपूर्वसाधनावघातसम्बन्धं च विधिरेवावहन्तीति विधत्ते । तद्वदिहापि प्रकरणकल्पितम्, क्रतुसम्बन्धमयमेव विधिर्विदध्यात्, श्रुत्युक्तञ्चोपस्थानरूपमिति गौरवं स्यात् ।

### दृष्टान्तस्य वैषम्यम् ।

तदिदमवघातादिषु गत्यभावादङ्गीकृतम् । इह तु प्रकृतग्रहणेन गतौ सत्याम् न गौरवाश्रयणमवकल्पते । तथा हि प्रकृतानां प्रागेव क्रतुगतो व्यापारः कर्तव्यत्वेनावधारितः, तस्यावधारितव्यापारस्याग्नीध्रोपस्थानात्मकविशेषरूपमेवात्र-

विधीयते—य आग्नेय्या क्रतौ व्यापारः कर्तव्यः, स आग्नीध्रोपस्थानरूप इति। तेन प्रागेव कल्पितं विहितं चाग्नेय्याः क्रतुव्यापारमनूद्य विशेषमात्रं श्रुत्युपात्तमिह विधीयते। न त्विह क्रतुव्यापारूपं कल्प्यते, नापि विधीयत इति लाघवात्प्रकृतग्रहणमेव युक्तम्।

दृष्टान्तान्तरस्याश्रयणेन शंका-समाधाने।

नन्वेव'मग्निमुपनिधाय स्तुवीते' तां. ब्रा. २१–२–९ त्यत्रापि प्रसिद्धक्रतुसम्बन्धानामाहवनीयादीनामेवोपधानं स्यात् न लौकिकाग्नेः, नैष दोषः। देशविशेषनिबद्धा ह्याहवनीयादयो नाहत्यवचनमन्तरेणान्यत्र नेतव्याः, श्रूयते हि तेषामायतनाद्बहिर्गमने दोषः, प्रायश्चित्तञ्च। 'वि वा एष इन्द्रियेण वीर्येण, ऋध्यते, यस्याहिताग्नेरग्निरपक्षायती' तै. सं. २–२–७ त्यादि। तस्माल्लौकिकग्रहणम्, इह तु प्रकृतानामेव लाघवादित्युक्तम्। ननु प्रकृतानां कार्यविशेषोऽपि स्तोत्रादिर्ज्ञात एव, सत्यम्, सामान्यरूपमपि तावत्प्रकरणपाठमात्रज्ञातं तन्मात्रेण नः प्रयोजनम्, विशेषरूपन्तु वाक्यान्तरेण विहितं। विशेषान्तरेणानपेक्षितत्वादनादृत्य सामान्यरूपमपेक्षितं गृह्यते। तस्मात्प्रकृताभिरुपस्थानम्। पूर्वम् लिङ्गस्य सामान्यसम्बन्धापेक्षितत्वमुक्तम्, तत्प्रसङ्गाच्छ्रुतेरपि सति संभवे सामान्यसम्बन्धमन्यतः सिद्धमपेक्ष्य विशेषमात्रपरत्वं संभवतीति प्रतिपाद्यते इति, लिङ्गाधिकारे श्रुतिविनियोगश्चिन्तितः।

इत्यष्टममाग्नेय्यधिकरणम्।

---

[ भक्षपेटिका ]

भक्षाधिकरणम् ॥ १ ॥

**लिङ्गसमाख्याभ्यां भक्षतार्थताऽनुवाकस्य ॥ २४ ॥ तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात् ॥ २५ ॥**

भक्षमन्त्रः श्रूयते 'भक्षे हि मा विशे'त्यादिः। तस्य कश्चिदंशो भक्षणं प्रतिपादयति। ग्रहणावेक्षणसम्यक्जरणप्रकाशऽश्चाकाऽन्येंशाः। तत्र संशयः- किं सर्वोऽयम्-

भक्षणे विनियोक्तव्यः ? उत ग्रहणादिष्वपि यथासामर्थ्यं विभज्य विनियोगः—इति। तदर्थं च किमर्थप्राप्तेषु मन्त्रस्य लिङ्गं विनियोजकम्, न वा ? इति।

तत्र—सर्वस्य भक्षणाङ्गत्वं ग्रहणादेरचोदनात्।
अक्रत्वर्थो न मन्त्रस्य द्वारीभवितुमर्हति॥
भक्षानुवाकसंज्ञा च भक्षणाङ्गत्वबोधिनी।
सामर्थ्यं चास्ति मन्त्रस्य द्वारीभवितुमर्हति॥

यद्यपि च 'अवख्येषमि'त्येवमादेरवेक्षणादौ मुख्यं सामर्थ्यं क्लृप्तम्, तद्विशेषितभक्षणप्रतिपादने तु लक्षणया तदेकवाक्यत्ववशेन कल्प्यं दुर्बलञ्च वाक्यं लिङ्गात्, तथाऽपि मुख्यस्य ग्रहणादेरर्थप्राप्तस्याचोदितत्वेनाऽक्रत्वर्थत्वात्, तादर्थ्ये मन्त्रस्य क्रत्वपूर्वानुपयोगितयाऽनर्थक्यापत्तेरसंभवति लिङ्गविनियोगे सवित्रादिपदानामिव लक्षणया वाक्यवशेन प्रागूर्ध्वकालवर्तिग्रहणादिविशिष्टचोदितभक्षणार्थता युक्ता। गृहीत्वा, अवेक्ष्य, सम्यग्जरणाय भक्षयामीति। एवं चानन्यविषयत्वाद्भक्षानुवाकसमाख्याऽप्युपपन्नतरा भवति। तस्मात्सर्वानुवाको भक्षाङ्गमेकं वाक्यमिति प्राप्ते—

ब्रूमः—ग्रहणादौ विभागेन विनियोगस्य लिङ्गतः।
वाक्यसंज्ञे हि नेशाते कर्तुं लिङ्गस्य बाधनम्॥ ६३॥
ग्रहणादि च शास्त्रेण साक्षाद्यद्यप्यचोदितम्।
तथाऽपि चोदितार्थेन कर्तव्यत्वात् प्रकाशते॥ ६४॥

न ह्यसति ग्रहणादौ चोदितो भक्षः शक्यते कर्तुमिति, अर्थात्तदपि कर्तव्यम्। भक्षचोदनयैव वा चोदितमित्यपि शक्यं वक्तुम्। तच्चास्मृतमशक्यमनुष्ठातुमिति, स्मारकापेक्षत्वाद् भक्षद्वारेण च क्रतूपयोगित्वाच्छक्नोति स्मारकं मन्त्रं ग्रहीतुम्। एवं संभवति लैङ्गिके विभज्य विनियोगे, वाक्यसमाख्याभ्यामेकवाक्यत्वापादनेन भक्षार्थता सर्वस्य न युज्यते। समाख्या च भक्षणे सम्बन्धमात्रं प्रतिपादयन्ती सम्बन्धस्य साक्षाद्वा, ग्रहणादिद्वारेण वोभयथाऽप्युपपत्तेर्नानुपपन्ना, सम्यग्जरणपर्यन्तं भक्षणं स्वरसतो लोकसिद्धम्। तादृशमेव च द्रवद्रव्यस्य भक्षणमिति सम्यग्जरणान्तमेव सोमप्रतिपत्त्यर्थतया विधीयते, अतो जरणमपि कर्तव्यम्, तच्चासनविशेषादिव्यापारसाध्यमिति, युक्तस्तत्र मन्त्रविनियोगः। तस्माद्विभज्यविनियोगः।

इति नवमं भक्षाधिकरणम्।

---

मन्द्राभिभूत्यधिकरणम् ॥ १० ॥

**गुणभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात् ॥ २६ ॥**

किं 'मन्द्राभिभूतिरि'त्यादि 'तृप्यत्वि'त्यन्तं तृप्तौ विनियोक्तव्यम्, उत वसुमङ्गणाद्येकं वाक्यं 'वाक् तृप्यत्वि'ति भक्षयामीत्येकं भक्षणमेव तृप्तिविशिष्टम् प्रकाशयत्विति। पूर्ववल्लिङ्गात् तृप्तिप्रकाशने प्राप्ते–

अभिधीयते–तृप्तिर्भक्षानुनिष्पन्ना न यापारान्तरार्थिनी।
तेन स्मृत्यनपेक्षत्वान्न मन्त्रोऽत्र प्रयुज्यते ॥ ६५ ॥

न हि तृप्तिं प्रकाश्य किञ्चित्कर्तव्यम्, तत्रादृष्टार्थं तत्प्रकाशनं स्यात्। तृप्तिविशिष्टभक्षणप्रकाशने तूत्साहजननाद्दृष्टार्थता, तस्माल्लिङ्गासंभवाद्वाक्येन भक्षणार्थत्वम्।

इति दशमं मन्द्राभिभूत्यधिकरणम्।

---

इन्द्रपीताधिकरणम् ॥ ११ ॥

**लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम् ॥ २७ ॥**

**यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति ॥ २८ ॥**

भक्षमन्त्र एवोदाहरणम्। तत्रेन्द्रपीतस्येति श्रूयते। सन्ति चैन्द्राण्यनैन्द्राणि च ज्योतिष्टोमे प्रदानानि। तत्र संशयः–किमैन्द्रेष्वेवायं मन्त्रः, अनैन्द्राणाममन्त्रकं भक्षणम्, उत तेष्वप्यूहेन मन्त्रः, अथवा सर्वत्र यथाऽऽम्नातमेव मन्त्र इति,। तदर्थं च किमैन्द्राणामनैन्द्राणां च प्रकृतिविकारभावोऽस्ति, न वेति। तथेदमपरमपि चिन्त्यम्–इन्द्रपीतस्येति तत्पुरुषः–सोमविशेषणम्–इन्द्रेण पीतस्य सत इति, किं वा बहुव्रीहिः–सवनविशेषणम्-इन्द्रेण यस्मिन्पीतः सोमः, तस्य प्रातः–सवनस्य–इति।

तत्र तत्पुरुषे स्वार्थलाभः स्यादुत्तरे पदे।
बहुव्रीहौ द्वयोरन्यपरत्वाद्दुर्बलत्वधीः ॥ ६६ ॥
ऐन्द्रानैन्द्राप्रदानानि ह्यंशा एकस्य कर्मणः।
प्रकृतिविकृतिश्चेष्टा न चात्मेवात्मनः क्वचित् ॥ ६७ ॥

तेन समासबलीयस्त्वेन तत्पुरुषाश्रयणाद्यथाम्नातमन्त्रस्यानैन्द्रेष्वसामर्थ्यात्, समाने च कर्मणि प्रकृतिविकारभावासंभवेनोहायोगादनैन्द्राणाममन्त्रकम् भक्षणमित्येकः पक्षः।

अपरस्तु-सत्यपि कर्मैकत्वे प्रदानानां भिन्नत्वात्, अविरुद्धः प्रकृतिविकारभावः। मानग्रहणमन्त्राच्च। ऐन्द्रप्रदानविषयः सोमः 'इन्द्राय वसुमते सोमं गृह्णामी' त्यादयो मन्त्राः नानैन्द्रप्रदानेषु समर्थाः, भवति चाङ्गवशेन प्रधानस्य विषयव्यवस्था, यथाऽऽहवनीयादिवशेनाग्निहोत्रादेराहिताग्निविषयत्वम्, अतो यत्र मन्त्रः, तत्र मान-ग्रहणे, यत्र ते, तत्र सोमः यत्र सोमः, तत्राभिषवादयः, भक्षः, तन्मन्त्रश्च। प्रदानान्तराणि त्वधर्मकाणि चोदकेनैतान्धर्मान् गृह्णन्ति। तत्र देवताविशिष्टभक्षप्रकाशकत्वेनोपकृतवतो भक्षमन्त्रस्य कार्यवशेन विकृतिमागतस्य यथादेवतं विकारो विज्ञायते, तस्मादनैन्द्रेष्वप्यूहेन मन्त्रवद्भक्षणम्। एवमूहे अवस्थितमधिकरणमपरिसमाप्त कृत्वा, अन्तरा प्रसङ्गादूहविषयश्चिन्त्यते।

इत्येकादशमिन्द्रपीताधिकरणम्।

---

## अभ्युन्नीताधिकरणम् ॥ १२ ॥

**पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥ २९ ॥ अपनयाद्वा पूर्वस्याऽनुपलक्षणम् ॥ ३० ॥ ग्रहणाद्वाऽपनयः स्यात् ॥ ३१ ॥**

सवनमुखीयेषु चमसेषु ऐन्द्रेषु सर्वेषु हुतेषु, ये होत्रकाणां मैत्रावरुणादीनाम् चमसाः, तेष्वभक्षितेषु सशेषेष्वेव पुनः सोमोऽभ्युन्नीय देवतान्तरेभ्यः मित्रावरुणादिभ्यो हुत्वा भक्ष्यते। तस्मिन् भक्ष्यमाणे भवति संशयः–किं पूर्वकृतप्रदानदेवताभूत इन्द्रोऽप्युपलक्षणीयः इन्द्रमित्रावरुणपीतस्येति ? किं वा ने ? ति। तदर्थं च किमैन्द्रोऽपि शेषो देवतान्तरसम्बन्धी जातः, न वे ? ति। तत्रोन्नयनकाले देवतान्तरसङ्कल्पो न क्रियते, यदि क्रियेत तत उन्नीयमानस्यैव देवतान्तरसम्बन्धः, न पूर्वस्थितस्य शेषस्येति, तस्य पूर्वदेवतासम्बन्धो नापेयात्। उन्नयनमात्रं तु तदा क्रियते। देवतानिर्देशस्तु प्रदानकाले, तदा च पूर्वशेषस्याभ्युन्नीयमानस्य चोभयस्य चमसस्थत्वेन देवतान्तरसम्बन्धात्पूर्वदेवतापेतसंबन्धत्वान्नोपलक्षणीया इति प्राप्ते–

ब्रूमः-यद्यप्युन्नयनकाले न देवतासङ्कल्पः, तथाऽप्युन्नयनं तावत्करिष्यमाणयागार्थमित्यसंदिग्धम्। अतश्चाभ्युन्नीतस्य करिष्यमाणयागार्थताऽवगता, न पूर्वशेषस्य, प्रमाणाभावात्। यश्च करिष्यमाणयागार्थस्तस्यैव तदीयदेवतासंबन्धः, नान्यस्य। तस्मात्पूर्वशेषस्य देवतासंबन्धानपायात्स्यात् साऽप्युपलक्षणीया।

इति द्वादशमभ्युन्नीताधिकरणम्।

[ अन्तरार्गिण्यां प्रथमाधिकरणम् ]

---

पात्नीवताधिकरणम् ॥ १३ ॥

पात्नीवते तु पूर्ववत् ॥३२॥ ग्रहणाद्वाऽपनीतं स्यात् ॥ ३३ ॥

द्विदेवत्यानामैन्द्रवायवादीनां शेषा आदित्यस्थालीमागत्य, ततोऽप्याग्रयणस्थालीमागच्छन्ति, पात्नीवतश्चाग्रयणाद्गृह्यते। तस्मिन् भक्ष्यमाणे भवति संशयः-किमैन्द्रवाय्वादयोऽप्युपलक्षणीयाः? उत पत्निवानेवे? ति। तदर्थं च किं द्विदैवत्यशेषोपीन्द्रवाय्वादिभ्योऽपनीय पत्नीवते गृहीतः, किं वा न वेति। तत्राग्रयणपात्रस्य पत्नी। तत्त्वम् नान्यस्य तत्संसृष्टस्यापि। तस्माद्द्विदेवत्यशेषस्या पात्नीवतस्य पूर्वदेवतासंबन्धानपायादिन्द्रवाय्वादीनामप्युपलक्षणम्।

नैतदेवम। न ह्यत्राग्रयणं पात्नीवतं श्रूयते। 'पात्नीवतमाग्रयणाद्गृह्णाती'त्युपादानमात्रमाग्रहणम, अतो यत्ततोऽपेतम्, तत्पात्नीवतम्। आग्रयणांशवच्चानाग्रयणमपि तत्संसृष्टं द्विदेवत्यं ततोऽपेतमिति पात्नीवतमेव। अतः पूर्वदेवतासंबन्धापेतः स भूतपूर्वत्वादुपलक्ष्येत। न च प्रकृतौ भूतपूर्वोपलक्षणं कृतमित्यनुपलक्षणमिन्द्रवाय्वादीनाम्।

इति त्रयोदशं पात्नीवताधिकरणम्।

[ अन्तरार्गिण्यां द्वितीयाधिकरणम् ]

---

त्वष्ट्रधिकरणम् ॥ १४ ॥

## त्वष्टारं तूपलक्षयेत्पानात् ॥३४॥ अतुल्यत्वात्तु नैवं स्यात् ॥३५॥

तस्मिन्नेव पात्नीवते आध्वर्यवो होममन्त्रः 'अग्नाइ पत्नीवान्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहे' तै० सं० १-४-२७ ति। तत्र संशयः-किं त्वष्टाऽपि देवता, सोऽप्युपलक्षयितव्यः ? उत न देवता, नोपलक्षयित य इति। मन्त्रवर्णेनाग्नेः पत्नीवतस्त्वष्ट्रा सह पानं गम्यते। न च तदुपपद्यते। यदि त्वष्टा न पिबेत्। न चादेवतायाः पानं संभवतीति त्वष्टाऽपि देवतोपलक्षयितव्य इति प्राप्ते—

ब्रूमः शब्दतस्तावदग्नेरेव पानं गम्यते त्वष्टुः सह भावमात्रम्, न च सहभावस्तत्क्रियासंबन्धाव्यभिचारी। विनापि तेन दर्शनात्—

'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी। ति

यद्यपि च पानं स्यात्। तथापि देवतात्वमप्रमाणकम्, न हि देवता पिबति उद्देशमात्रलक्षणत्वात्तस्याः, विस्पष्टं च चोदनायां तद्धितेन निरपेक्षस्य पत्नीवतो देवतात्वं गम्यमानं न मान्त्रवर्णिक्या देवताया बाधविकल्पसमुच्चयान् सहते अतो नोपलक्षणीयस्त्वष्टा।

इति चतुर्दशं त्वष्ट्रधिकरणम्।

[ अन्तरागर्भिण्यां तृतीयमधिकरणम्। ]

---

त्रिंशदधिकरणम् ॥ १५ ॥

## त्रिंशच्च परार्थत्वात् ॥ ३५ ॥

तस्मिन्नेव पात्नीवते याज्यामन्त्रः—

'एभिरग्नेस्सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः।

पत्नीवतस्त्रिंशतं त्रींश्च देवननुष्वधमावहमादयस्वे' ॥ ति,

तत्र संशयः—किं त्रयस्त्रिंशदुपलक्षयितव्या ? उत नेति। पूर्वत्राग्नेरेव पानं त्वष्टुस्तु सहत्वमात्रमित्यदेवतात्वमित्युक्तम्। इह तु विपरीतम्, अग्नेर्मादयितृत्वादितरे माद्यन्तीति गम्यते। अतस्तेषामेव देवतात्वम्, चोदनया च पत्नीवन्मात्रस्य देवतात्वमुक्तम्। न तद्विशेषस्य तत्र यथाग्नेः पत्नीवन्निति मन्त्रगतसामाना-

धिकरण्यादग्नेः पत्नीवत्त्वेन देवतात्वम् एवं त्रयस्त्रिंशतोऽपि देवतानां पत्नीवतः त्रिंशतं त्रींश्च देवानिति सामानाधिकरण्यात् असति च प्रमाणान्तरे द्विवचन-बहुवचनान्तानां वृत्तिर्नेष्यते। अस्ति चेह प्रमाणम्, मन्त्रगतसामानाधिकरण्यम्। अतः पत्नींवन्तोदेवता अस्येति चोदनार्थो भविष्यति। तस्मात् त्रयस्त्रिंशदुप-लक्षणीया इति प्राप्ते—

ब्रूमः यत एवाग्नेर्मादयितृत्वम्। अत एव तस्यैव देवतात्वं मन्त्रवर्णाद्गम्यते। नह्यसौ यजमानस्य द्रव्येण त्रयस्त्रिंशतं मादयितुं शक्नुयात्, न यदि यजमानोऽग्नये दद्यात्, अतोऽग्नेरेव यजमानसंकल्पविषयत्वाद्देवतात्वम्, इतरे त्वग्निदत्तेन कामं माद्यन्तु, न तु यजमानस्तेभ्यो ददातीत्यदेवतात्वम्। एवं च यद्यपि पत्नी-वन्तस्ते भवेयु तथाऽपि तेषां मन्त्रवर्णाद्देवतात्वमनवगतमिति प्रमाणान्तराभावान्न चोदनायां बहुवचनान्तेन विग्रह इति, एक एवाग्निः पत्नीवानिह देवतेति तस्यैवोपलक्षणम्।

इति पञ्चदशं त्रिंशदधिकरम्।

[ अन्तरागभिण्यां चतुर्थाधिकरणम् ]

---

अनुवषट्काराधिकरणम्॥ १६॥

अनुवषट्कारश्च कर्तृवत्॥ ३६॥

अनुवषट्कारदेवताया अग्नेरसंदिग्धं देवतात्वमित्युपलक्षणं मन्यते। प्रकृतौ त्वसौ विद्यमानाऽपि नोपलक्षिता, प्रधानदेवतैव त्विन्द्र उपलक्षितः, विकृतावपि तत्कार्यापन्ना प्रधानदेवतैवोपलक्षणीया, नानुवषट्कारदेवतेति।

इति षोडशमनुवषट्काराधिकरणम्।

---

अनैन्द्राणाममन्त्रकभक्षणाधिकरणम्॥ १७॥

छन्दःप्रतिषेधस्तु सर्वगामित्वात्॥ ३७॥

एवमूहं विचार्य, अधुना स्थितादुत्तरमुच्यते। नास्त्यूहः, समानविधान-त्वात्प्रदाननाम्। न ह्यैन्द्रप्रदानविषयः सोमः। स हि 'सोमेन यजेते'ति कर्मोत्पत्तौ श्रुतः कर्माङ्गम्, न प्रदानविशेषस्य। तदेव सर्वप्रदानेष्वभ्यस्यत इति, सर्वाणि

समानविधानानि, मान ग्रहणमन्त्रौ तु लिङ्गादैन्द्रप्रदानविषयौ कामं भवेताम्, न तु सोमः, स ह्युत्पत्तावेव श्रुत्या कर्मणा संबद्धो नाभ्यासविशेषविषयः शक्यः कर्तुम्, अतः समानविधानत्वादनूहः। भक्षमन्त्रस्तु लिङ्गादैन्द्रेष्वेवेति, अनैन्द्राणाम-मन्त्रकम्—भक्षणमिति। एवं प्रथमपक्ष एव स्थितमधिकरणम्। एवं स्थिते पुनः कृत्वाचिन्ता।



ऐन्द्राग्नभक्षस्यामन्त्रकताधिकरणम् ॥ १८ ॥

**ऐन्द्राग्ने तु लिङ्गभावात्स्यात् ॥ ३९ ॥ एकस्मिन्वा देवतान्त-राद्विभागवत् ॥ ४० ॥**

यदाऽनैन्द्राणाममन्त्रकं भक्षणम्, तदा यत्रान्यसहित इन्द्रो देवता। यथैन्द्रा-ग्नादिषु। तत्र मन्त्रो भवति, नेति विचारः। तदर्थं च किमत्र देवताव्यापारः पानमुपलक्षणम्? उत यजमानव्यापारो दानमिति। तत्र पीतस्येति पानश्रवणात्त-देवोपलक्षणम्। मिश्रोद्देशेनापि दत्तः सोमोंऽशतः प्रत्येकमुभाभ्यां पीयते। न पानेऽन्योन्यनिरपेक्षत्वात् द्वाभ्यामपि पीत इन्द्रपीत इति शक्यं वक्तुं डित्थमातृवत्

तस्मान्मन्त्रवदेव स्यादैन्द्राग्नादिषु भक्षणम्।
स्यादेवं यदि पानं स्यात् तत्तु नास्तीति वक्ष्यते ॥ ६८ ॥

तेन देवताधिकरणन्यायेन पानाभावात्पिबतिरत्र दानलक्षणार्थः, दानं च मिश्रविषयम्, नान्यतरेण व्यपदेष्टुं शक्यमिति, चतुर्धाकरणवदैन्द्राग्नादिषु मन्त्राभावः।

इत्यष्टादशमैन्द्राग्नभक्षणस्यामन्त्रकताधिकरणम्।



भक्षमन्त्रस्य गायत्रान्यच्छन्दस्केऽपि विनियोगाधिकरणम् ॥ १८ ॥

**छन्दश्च देवतावत् ॥ ४१ ॥ सर्वेषु वाऽभावादेकच्छन्दसः ॥४२॥**

तत्रैव मन्त्रे 'गायत्रछन्दस' इति श्रूयते—तत्र विचारः। किं यत्र प्रदाने गायत्र-मेव छन्दः,तत्र स्यात्, उत यत्र छन्दोऽन्तरमपीति। पूर्ववत्केवलछन्दोविषयत्वम् मन्वानस्योत्तरं केवलगायत्रच्छन्दःप्रदानं न विद्यते। सर्वत्र बहुमन्त्रसमवायेन

छन्दोऽन्तराणामवश्यभावात्। अतः सापेक्षत्वेऽप्यत्र नित्यसापेक्षत्वात्समासोपपत्तिः, न चात्र सापेक्षत्वमपि। सर्वमन्त्राणामन्योन्यनिरपेक्षाणामेव कर्मसंबन्धात्। अतः सत्यपि छन्दोऽन्तरे गायत्रच्छन्दसस्तदनपेक्षत्वात्पूर्वाधिकरणपूर्वपक्षवत्समासाविधानान्नानाछन्दस्कोऽपि भवति मन्त्रः।

इत्येकोनविंशं भक्षमन्त्रस्य गायत्रान्यच्छन्दस्केऽपि विनियोगाधिकरणम्।

---

एकादशाधिकरणोक्तस्य उपसंहाराधिकरणम् ॥ २० ॥

( इन्द्रपीताधिकरणसिद्धान्तः )

सर्वेषां वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात्सवनाधिकारो हि ॥४३॥

स्थितादुत्तरम्—यदि तत्पुरुषोऽयं स्यात्स्यादनैन्द्रेष्वमन्त्रकम्।
भक्षणं लक्षणादोषान्नायं तत्पुरुषो मतः ॥ ६९ ॥

तत्पुरुषत्वे हि संबुध्यन्तेन सोमशब्देन ते इति प्रत्यक्षविषयेण युष्मच्छब्देन च निर्दिष्टस्य हुतशिष्टस्य पात्रस्थस्य सोमस्य भक्षणार्थमुद्धृतस्यैन्द्रपीतशब्द इन्द्राय दत्तस्येत्येवं विशेषणं स्यात्। न चासाविन्द्राय दत्तः। पूर्वसङ्कल्पितो हि हुताहुतसमुदायस्तस्मै दत्तः, तदवयवस्त्वयमुपचारादेवाभिधीयेत, न चासौ युक्तः, तस्माद्बहुव्रीहिः। इन्द्रेण यस्मिन्सवने पीतः सोमः, तस्य सवनस्य सम्बन्धी यः सोमास्तस्य भक्षयामीति। सर्वे च सोमाः एवंविधसवनसम्बन्धिन इति सर्वेषां यथाम्नातमन्त्रकं भक्षणम्।

एकादशाधिकरणोक्तस्योपसंहारा ( इन्द्रपीताधिकरणसिद्धान्तः ) धिकरणम्

इति शास्त्रदीपिकायां ततीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

# अथ तृतीयेऽध्याये तृतीयः पादः ।

## उपक्रमाधिकरणम् ॥ १ ॥

**श्रुतेर्जाताधिकारः स्यात् ॥ १ ॥ वेदो वा प्रायदर्शनात् ॥ २ ॥ लिङ्गाच्च ॥ ३ ॥ धर्मोपदेशाच्च न हि द्रव्येण सम्बन्धः ॥ ४ ॥ त्रयीविद्याख्या च तद्विदि ॥ ५ ॥ व्यतिक्रमे यथाश्रुतीति चेत् ॥ ६ ॥ न सर्वस्मिन्निवेशात् ॥ ७ ॥ वेदसंयोगान्न प्रकरणेन बाध्यते ॥ ८ ॥**

पूर्वयोः पादयोः श्रुतिलिङ्गविनियोगौ चिन्तितौ। इदानीं वाक्यविनियोगश्चिन्त्यते। 'प्रजापतिरकामयत प्रजाःसृजेये'ति, 'स तपोऽतप्यत, तस्मात्तेपानात् यो देवा असृज्यन्ताग्निर्वायुरादित्यः, ते तपोऽतप्यन्त, तेभ्यस्तेपानेभ्यस्त्रयः वेदा असृज्यन्ताग्नेः ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद 'इत्युपक्रम्य श्रूयते ज्योतिष्टोमे तस्मा 'दुच्चै ऋचा क्रियते" उपांशु यजुषा 'उच्चैः साम्ने' ऐ. ब्रा. ५–५–७ ति' तत्र संशयः-किमुच्चैष्ट्वादय ऋगादिजातानां धर्माः। मन्त्राणामित्यर्थः। ऋचा मन्त्रेणोच्चैरिति। किं वा वेदधर्माः ऋग्वेदेनोच्चैरिति, उपक्रमे च वेदश्रवणादुपसंहारे च ऋगादिश्रवणात्संशयः। वेदशब्दो हि मन्त्रब्राह्मणसमुदायात्मनो ग्रन्थविशेषस्य वक्ता, नैकस्य मन्त्रवाक्यस्य, ब्राह्मणस्य वा वाचकः, प्रयोगाभावात्। न ह्येकम्, द्वे त्रीणि वाक्यान्यधीत्य—

'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्'।

इत्येतच्छास्त्रार्थमनुष्ठितं मन्यन्ते। तस्मात्समुदायो वेदः, न तु वेदयतीति व्युत्पत्त्या एकैकमेव वाक्यं वेद इति, मूर्खप्रलपितमेतदनुसर्तव्यम्। ऋगादिशब्दास्तु मन्त्रवचनाः स्थापिताः। तेनोपक्रमोसंहारयोर्विप्रतिपत्तेः, एकवाक्यत्वाच्चोभयोरेकविषयत्वेऽवश्यंभाविनि किमुपसंहारस्थविध्युद्देशवशादुपक्रमस्थार्थवादगतो वेदशब्दो वेदैकदेशमन्त्रपरः भवतु, किं वोपक्रमगतार्थवादवशादुपसंहारस्थमृगादिपदमृगादिप्रायवेदपरं भवत्विति संशयः।

तत्र—गुणत्वादनुवादनुवादत्वादर्थवादस्य लक्षणा।
मुख्यस्यापि प्रधानत्वादप्राप्तविषयत्वतः ॥ ७० ॥

विध्युद्देशो जघन्योऽपि स्वार्थहानिं न गच्छति।
मुख्याऽपि दीक्षणीया हि लभतेन स्वधर्मताम् ॥ ७१ ॥
जघन्यस्यापि सोमस्य प्रधानत्वात् स्वधर्मता।
वक्ष्यते तद्वदत्रापि विध्युद्देशस्य सा भवेत् ॥ ७२ ॥

प्रधानत्वादप्राप्तविषयत्वाच्च विध्युद्देशे यथाश्रुतादन्यथात्वमप्रमाणकम्, अर्थवादस्तु प्रमाणान्तरप्राप्तार्थत्वात् तद्वशेन लक्षणयाऽपि नीयमानो न दुष्यतीति, जाताधिकाराऽऽह्वेषट्वादय इति प्राप्ते—

ब्रूमः—लब्धात्मनः प्रधानस्य बलीयस्त्वं गुणाद् भवेत्।
विध्युद्देशस्त्वलब्धात्मा लब्धात्मानं न बाधते ॥ ७३ ॥

'य इष्ट्या, पशुना, सोमेन वा यजेते'ति वचनात्तु सोमस्यापि कालो लब्धात्मा युक्तं यद्दीक्षणीयाकालं बाधते, विध्युद्देशस्त्विह मन्त्रविषयत्वेन अलब्धात्मा कथमिवार्थवादं बाधते। तथा हि वेदशब्दः प्रक्रमगतोऽसंजातप्रतिपक्षत्वाद्यथाश्रुतार्थपर एव तावदवधार्यते, तस्मिंश्चावधारिते सत्युपसंहारगतमृगादिपदमुपसंजातप्रतिपक्षविज्ञानत्वाद्यथाश्रुतार्थं सत्तदेकवाक्यतामप्रतिपद्यमानम् तदनुगुणवेदपरतयैवात्मानं लभते। नान्यथा, येन बाधकं स्यात्, उपक्रम एव वेदानां किंचिद्विधास्यत इत्यवगतं किं तद्विधेयमित्येतावदनवगतमपेक्षितञ्च। अतः विध्युद्देशगतोऽपि ऋगादिशब्दोऽवगतविषयत्वादनुवाद इति लक्षणां सहते। तस्मात् वेदधर्मः। ऋग्वेदेन यत्क्रियते विधीयते, तदुच्चैरिति। तदिहोपक्रमोपसंहारैकवाक्यतया वेदधर्मत्वमवधारितमिति वाक्यविनियोगः।

### प्राभाकरमतस्य निरासः

एकदेशिनां त्वेकैकमेव वाक्यं वेदशब्दवाच्यमित्यभ्युपगमादुपसंहारवशेन मन्त्रवाक्यपरोऽपि वेदशब्दो व्याख्यायमानः श्रुत्यर्थात् न च्यवते इति, सिद्धान्तो दुर्लभः स्यात्। अत्र यदुच्यते विधेयतया न विधायकवद्वेदकत्वमिति तदयुक्तम्, यद्यपि हि विनियोगापेक्षं मन्त्रवाक्यं न विधायकवदनपेक्षवेदकम् तथाऽपि तावद्वेदयति तावच्च वेदशब्दप्रवृत्तौ निमित्तम् इत्यविशेषः। यथा 'शुक्लमानये'ति यत्स्वभावशुक्लमुदकं यच्च पाकापेक्षं पार्थिवं तत्रोभत्राप्यविशेषेण शुक्लशब्द प्रवर्तते तथावेद-शब्दोऽपि। न हि विधिवाक्यमपि निरपेक्षं वेदयति पदार्थव्युत्पत्तिन्यायविचारादिसापेक्षत्वात्, तस्मात्साधारणे। वेदशब्दः कांस्यभोजिवदुपसंहारवशान्मन्त्रपरः स्यादित्यधिकरणविरोधः स्यादित्यास्तां तावत्।

इति प्रथममुपक्रमाधिकरणम्।



## गुणमुख्यव्यतिक्रमाधिकरणम् ॥ २ ॥

### गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ ९ ॥

याजुर्वैदिकमाधानम्, तस्य सामवेदे 'वारवन्तीयं गायती' मै० सं० १-६-७ त्यङ्गविधिः। तत्र वारवन्तीयस्य किं सामवैदिकः स्वरः उत याजुर्वैदिक इति-संदेहे प्रधानविधिनिबन्धनस्य स्वरस्य प्रधानैकवाक्यतापेक्षित्वेन विलम्बितत्वात् स्ववेदनिबन्धन एव स्वरोऽनपेक्षतया शीघ्रं प्रतीयमानो युक्त इति प्राप्ते—

प्रधानधर्मत्वादुपांशुत्वमेव बलीयः। साङ्गं ह्याधानं विधिना विधीयते। अतस्तादृशस्यैव याजुर्वैदिकत्वाद् उपांशुत्वं धर्मः। न चाङ्गेष्वक्रियमाणम् तत्साङ्गस्य कृतं भवति। तेनाङ्गस्थोऽप्यसौ प्रधानार्थो धर्म इति विलम्बितप्रतीतिरपि बलीयान्, इतरथा प्रधानस्यैव वैगुण्यापत्तेः। अतोऽङ्गधर्ममुच्चैष्ट्वं बाधित्वा प्रधान-धर्म उपांशुत्वं स्यादिति सिद्धान्तितम्।

एवं त्व"ङ्गगुणविरोधे च तादर्थ्या"दित्यनेन गतप्रायं स्यात्। न चोदहरणमपि युक्तम्, 'वारवन्तीयं गायती'त्यस्याङ्गविधेरपि याजुर्वैदिकत्वादि-त्यन्यथा व्याख्यातम्। यस्य मन्त्रस्य वेदान्तरे समाम्नानम् उत्पत्तिः, वेदान्तरे च विनियोगविधिः, तस्य किमुत्पत्तिवेदनिबन्धनः स्वरः? अथवा विनियोग-वेदनिबन्धन इति संशयः।

तत्र—उत्पत्तेः पूर्वभावित्वात्तन्निबन्धन एव हि।
स्वरः प्रथमभावित्वाद्युक्तो नान्यो विलम्बितः॥ ७४ ॥

नैतदेवम्—न खल्वाम्नानमात्रेण मन्त्रस्य स्यात्प्रयोज्यता।
तेन क्रियत इत्येवमतो वक्तुं न शक्यते॥ ७५ ॥
तेन तु क्रियते मन्त्रो यत्र वेदे विधीयते।
विध्यायत्तं ह्यनुष्ठानं तत्र चापेक्षितः स्वरः॥ ७६ ॥

प्रयोज्यतयाऽवधारितस्य मन्त्रस्य स्वरापेक्षा भवति, न स्वरूपावगतिमात्रेण। तस्माद्वारवन्तीयादेः सामवेदेनाक्रियमाणत्वात्, अनपेक्षितत्वाच्च न तन्निबन्धन-मुच्चैष्ट्वम्, यजुर्वेदेन तु क्रियमाणत्वात्, स्वरापेक्षणाच्च तदीयमुपांशुत्वमेव स्यात्।

इति वार्तिकमतेन गुणमुख्यव्यतिक्रमाधिकरणम्।

## ज्योतिष्टोमस्य याजुर्वैदिकताधिकरणम् ॥ ३ ॥

### भूयस्त्वेनोभयश्रुति ॥ १० ॥

यजुर्वेदे, सामवेदे च ज्योतिष्टोमः समाम्नातः। तस्य कतरवेदस्वरः स्यादिति विचारः। यत्र विधीयते, तदीय एव स्वरः, न यत्र गुणार्थं श्रवणम्। अतः कास्य विधिरिति। अनियमे प्राप्ते—

ब्रूमः यजुर्वेदे द्रव्यदेवतमस्य श्रूयते, तेन च व्यवच्छिन्नं कर्मस्वरूपम् गम्यमानं सुखेन विधीयते। वेदान्तरे तु नामयुक्तं क्रियामात्रं श्रूयत इति, न विध्यवगतिः समाप्यते,। अतो यजुर्वेदेनासौ क्रियत इत्युपांशुधर्मता।

इति ज्योतिष्टोमस्य याजुर्वैदिकत्वाधिकरणम्।

## प्रकरणाधिकरणम् ॥ ४ ॥

### असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात् ॥ ११ ॥

श्रुति-लिङ्ग-वाक्यैरुक्तो विनियोगः। अधुनाऽधिकरणत्रयेण प्रकरण-स्थान-समाख्याभिर्विनियोगोऽभिधीयते,। दर्शपूर्णमासयोः श्रूयते 'समिधो यजति, तनूनपातं यजती' श० ब्रा -२–६–१–१त्यादि। तद्दर्शपूर्णमासाङ्गम्, न वेति–संशयः। यदि प्रकरणं नाम प्रमाणं भवेत्, ततोऽङ्गम्, इतरथा नाङ्गमिति,। तत्र प्रकरणगताज्ञान-संशय-विपर्ययाणामन्यतमेन पूर्वः पक्षः। यावदन्यन्न कथ्यते, तावदज्ञानं भवति, सदपि वाऽवसराभावान्नोक्तं स्यादिति संशयः, अथवा नैवाक्षरश्रवण-सामर्थ्यानुसरण-पदान्तरसमभिव्याहारात्मकेभ्यः श्रुति-लिङ्ग-वाक्येभ्योऽन्यः शब्दप्रमाणप्रकारोऽस्ति, तस्मान्न प्रकरणं प्रमाणमिति विपर्ययः,।

तथाहि—स्वर्गकामस्य दर्शपूर्णमासौ कर्तव्याविति निरपेक्षं समाप्तम्, वाक्यम्,। तथा 'समिधो यजती'त्याद्यपि। नन्विदं फलाभावात्साकाङ्क्षम्, सत्यम् साकाङ्क्षम्, सा त्वाकाङ्क्षा 'स स्वर्गः स्यादिति वा, फलमात्रेयो निर्देशादि'ति वा दर्शपूर्णमासफलानुषङ्गेण वा निवर्तते, न क्रत्वङ्गत्वम्, क्रतारनाकाङ्क्षात्वादिति प्राप्ते—

ब्रूमः-क्रतोरप्यस्ति कथमितीतिकर्तव्यताकाङ्क्षा, तथा प्रयाजादेः प्रयोजनाकाङ्क्षेत्युभयोः साकाङ्क्षयोः सन्निहितयोरप्रत्यक्षमप्येकवाक्यत्वं फलान्तरकल्प-

नाल्लधीयः, तथोभयोर्निराकाङ्क्षत्वम्, फलान्तरकल्पने त्वितिकर्तव्यताकाङ्क्षा क्रतोरनिवृत्तैव स्यात्। अस्ति चासावाकाङ्क्षा। यदि यागं कुर्यादिति वाक्यार्थः स्यात्। यागक्रियाया निर्ज्ञातप्रकारत्वात्स्यान्निराकाङ्क्षत्वम्, यागेन स्वर्गं कुर्यादिति तु वाक्यार्थः। तत्र न ज्ञायते केन प्रकारेण यागेन स्वर्गः कर्तव्यः इति, तेनास्ति प्रकाराकाङ्क्षा। ननु यागानुष्ठानमेव प्रकारः, अनुष्ठितो ह्यसौ फलं साधयति।

### साधनानुग्रहाकांक्षेति वार्तिकमतम्।

किमत्र न ज्ञायते? यदि मतं न यागः फलं साधयत्यननुगृहीतः, सर्वसाधनानामनुग्रहापेक्षादर्शनात्, चक्षुरादीनामालोकानुग्रहवत्। अतः किमस्यानुग्राहकमित्यपेक्षायां प्रयाजविधिः—इति।

### तस्य निरासः।

तदयुक्तम्। अननुगृहीतस्यापि केवलस्य कर्मणः संयोगविभागारम्भकत्वदर्शनात्, कश्चायमनुग्रहो नाम? सामर्थ्योद्बोध इति चेत्? कोऽयमुद्बोधो नाम? कार्यारम्भाभिमुख्यमिति चेत्, नैवम्। समर्थमेव कर्म प्रागनुष्ठानादलब्धात्मकत्वात्कार्यारम्भानभिमुखम्, अनुष्ठानात्तु लब्धात्मकत्वाद्भवत्येव कार्याभिमुखमिति काऽत्राऽन्यापेक्षा। सहायापेक्षणमनुग्रहापेक्षणमिति चेत्। न। असहायेनापि कर्मणा संयोगविभागोत्पत्तिदर्शनात्, अपि चाग्नेयादीनि परस्परं सहायीभवन्तु, किमन्यदपेक्षन्ते।

### स्वमतेनेतिकर्तव्यतावर्णनम्।

तस्माद्वक्तव्यमेतत्केयमितिकर्तव्यताकाङ्क्षा नामेति? तदभिधीयते-प्रकाराकाङ्क्षेयम्। इतिशब्दः प्रकारवचनः। कर्तव्यताप्रकारः। क्रियाप्रकार इति यावत्। सामान्यस्य भेदको विशेषः प्रकार इति तद्विदः। किं पुनरिह सामान्यात्मनाऽवगतं विशेषरूपमपेक्षते? क्रिया भावनेति यावत्। यागेन स्वर्गम् कुर्यादित्यस्यायमर्थः,—यथा व्यापृते यागात्स्वर्गो भवति, तथा यागं प्रति व्याप्रियेतेति। तत्र न ज्ञायते कोऽसौ व्यापारविशेषः, येन यागात्स्वर्गो भवतीति। सेयं जिज्ञासेतिकर्तव्यताकाङ्क्षेत्युच्यते।

### कृतिर्व्यापारसामान्यमिति कथनम्।

ननु यागानुष्ठानमेवासौ व्यापारः? किमत्र न ज्ञायते। यथा क्रियानुष्ठानमेव संयोगविभागसंपादनम्। तन्न। न हि मृत्पिण्डसंपादनमेव घटसंपादनम्।

अतो नायमेकान्ततो यत्स्वरूपसंपादनमेव कार्यसंपादनमिति। नन्वत्र यागानुष्ठानमेव कार्यसंपादनमिति। नन्वत्र यागानुष्ठानमेव शब्देनोच्यते। मैवम्। न ह्येवम् शब्दोऽस्ति यागानुष्ठामेव व्यापारः—इति।

### प्राभाकरमतनिरासः।

ननु यजेतेति यागविषयैव कृतिः शब्देनोच्यते, किमिदं विषयत्वम्? साध्यत्वमिति चेत्। न। स्वर्गो ह्यत्र साध्यतया संबध्यते. न यागः। न ह्येवम् संभवति स्वर्गं कुर्याद्यागमिति। अथ यागविषयया कृत्या स्वर्गं कुर्यादिति, स्यादेवं यदि कृत्या कुर्यादिति प्रत्ययेन कृतिद्वयमुपात्तं स्यात्। कुर्यादित्येतावत्प्रत्ययार्थः। कृत्या साधयेदिति तु कृत्यन्तरारोपेण व्याख्यातृणामर्थकथनमात्रम्, कुर्यादित्यस्मिंश्च स्वर्गस्य साध्यत्वात्, न यागस्य साध्यत्वम्। अथ विशेषणत्वं विषयत्वम्, सत्यं विशेषणमेव यागः, केन तु संबन्धेनेति निरूपयामः, न तावन्नीलोत्पलादिवत्ताद्रूप्येण, यागभावनयोर्भेदात् अतः कारकत्वेन सोमादिवद् यागस्य क्रियाविशेषणत्वम्, तत्र च साध्यत्वाभावात्साधनेनैव संबन्धः, तेन यागकरणिका स्वर्गकृतिरेव शब्दार्थः, न तु यागानुष्ठानम्। एवञ्च नाम्ना सामानाधिकरण्यं संभवति, नान्यथा।

### विशेषरूपेण समिदादीनामन्वय इति निरूपणम्।

अतः किंरूपेयं कृतिरित्यस्त्यपेक्षा, तत्र तदाकाङ्क्षानुवृत्तौ 'समिधो यजती'ति वचनादेवं ज्ञायते—अयमसौ व्यापारो येन यागात्स्वर्गो भवतीति, संभवति च समिदादिक्रियाणां यागविषयत्वमदृष्टद्वारम्। अवघातादीनान्तु तु दृष्टद्वारम्। अननुष्ठितश्च यागोऽसत्त्वान्न फलं साधयितुं क्षम इत्यर्थाद्यागानुष्ठानं गम्यते, न शब्दात्, तेनायं वाक्यार्थः। यागेन फलं कुर्यात् कथम्? केन प्रकारेण यागात्स्वर्गो भवतीति। तत्राह 'समिधो यजति' व्रीहीनवहन्ती'त्यादि। तदयमर्थो भवति समिदादिक्रियाणां यागविषयत्वमदृष्टद्वारम् अवघातादिभिश्च द्रव्यदेवतासंस्कारद्वारम्, द्रव्यदेवतेन च स्वरूपसंपादनेन यागे व्याप्रियेत, एवंभूतोऽसौ व्यापारः, येन यागात् स्वर्गो भवतीति यागः फलारम्भाभिमुखो भवति। कार्यारम्भाभिमुख्यकरणमेवोपकार इति समिदादेः क्रतूपकारः फलम्।

नन्वेवं समिदादिभिरदृष्टं कुर्यादित्यत्रापि क्रियाविशेषापरिज्ञानादाकाङ्क्षा स्यात्, कस्य वैतदनिष्टम्। अत एवावान्तरप्रकरणमिष्यते। नन्वेवं सौमिकधर्मातिदेशः स्यात्। भवन्मते वा पितृयज्ञस्य साधिकारस्य किमिति सौमिक-

धर्मातिदेशो न भवति, वाचनिककालबाधप्रसङ्ग इति चेत्। इहापि समानम्। अपि च सत्यप्याकाङ्क्षा वाचनिकेन ध्रौवाज्यादिद्रव्येण, तत्संस्कारैः,मान्त्रवर्णिक्या च देवतया वेदिबर्हिरग्नीध्मादिभिस्तत्संस्कारैश्चाऽङ्गप्रधानसाधारणै "रभिक्रामं-जुहोति" "समानत्र होतव्या" इत्यादिभिश्च वाचनिकैरङ्गैर्निवर्तत इति, न सौमिकधर्मातिदेशाद्याशङ्कनीयम्।सर्वे ह्यग्न्यन्वाधानादयः सन्निपातिनोऽङ्गप्रधान-साधारणाः। तेनोपांशुयाजवत्प्रयाजादयोऽपि कृत्स्नविधानाः, न च कृत्स्नविधा-नेष्वतिदेशोऽस्ति। सन्निपत्योपकारकसामग्री च कृत्स्नविधानतेत्यष्टमे वक्ष्यते, अत एव हि पितृयज्ञस्यापूर्वत्वम्,अन्यथा साधिकारत्वाद्दुर्वारः सोमधर्मातिदेशः स्यात्, तस्मादस्तीतिकर्तव्यताकाङ्क्षा, तदनुवृत्तिश्च प्रकरणम्।

अतः प्रधानवाक्यस्य प्रकाराकाङ्क्षतावशात्।
फलाकाङ्क्षं प्रयाजादि तदङ्गत्वं प्रपद्यते॥ ७७॥

इति चतुर्थं प्रकरणाधिकरणम्।

---

क्रमाधिकरणम्॥ ५॥

## क्रमश्च देशसामान्यात्॥ १२॥

दर्शपूर्णमासयोरुपांशुयाजक्रमे 'दब्धिर्नामासी' तै–१–६–२–४ ति मन्त्रः पठ्यते। स किमुपांशुयाजाङ्गम्, न वेति संशयः। श्रुति-वाक्ययोरुभयोरभावाल्लिङ्ग-प्रकरणयोश्चाग्नेयादिष्वविशेषादुपांशुयाजस्य विशेषाभावात्क्रमस्य चाप्रमाण-त्वादनङ्गमिति प्राप्ते—

उच्यते क्रमादुपांशुयाजस्येति, स्थानसामान्यात्। कर्मणाम्, मन्त्राणां च क्रमेण समाम्नातानां यस्य कर्मणः क्रमे यो मन्त्रः समाम्नातः, तस्मिन्नवगते स्थान-सामान्यात् तत्कर्मोपतिष्ठते, कर्मोपलब्धावपि मन्त्रः, तयोरेव समानस्थानाम्नानम् तन्नूनं सम्बन्धार्थमित्येवाकाङ्क्षा परिकल्प्यते। तेनैकवाक्यता परिकल्प्यते।

क्रमस्य द्वैविध्यम्।

एवम्–काम्येष्टीनां याज्यानुवाक्यानां च क्रम इति देशसामान्यमुच्यते, स च द्विविधः-पाठसादेश्यम्, अनुष्ठानसादेश्यं च। पाठसादेश्यमपि द्वेधा यथा-संख्याम्नानम्, सन्निध्याम्नानं च। यथासंख्यस्य दर्शितमुदाहरणम्, सन्निधि-

समाम्नानस्यापि सान्नाय्यापात्रशुन्धनक्रमा'च्छुन्धध्वमि'ति मन्त्रस्य तदङ्गत्वम्। अनुष्ठानसादेश्यात्पशुधर्माणामग्नीषोमीयाङ्गत्वं वक्ष्यते।

इति पञ्चमं क्रमाधिकरणम्।

समाख्याधिकरणम् ॥ ६ ॥

## आख्या चैवं तदर्थत्वात् ॥ १३ ॥

दर्शपूर्णमासादिष्वाध्वर्यवहौत्रौद्गात्रादिसमाख्याताः पदार्थाः किमध्वर्य्वादिभिरेव कर्तव्याः, उतानियमेनेति। श्रुत्यादिभिर्नियमाभावात्, समाख्यायाश्च पदार्थमात्रविषयत्वेनाविधायत्कत्वेनाप्रमाणत्वादनियम इति प्राप्ते—

उच्यते अनादिस्तावदपौरुषेयी समाख्या। तेनाध्वर्यवादिशब्दाः पदार्थानाम् वाचका इति तावत्प्रमाणम्, संबन्धनिमित्ता च समाख्या 'नासति संबन्धेऽवकल्पते इति, अस्ति नूनं कर्तॄणां पदार्थानां च कश्चित्संबन्ध इति निश्चिते, कर्तॄणाम् कार्यापेक्षत्वात्पदार्थानां च कर्त्रपेक्षत्वात्समाख्यया च मिथः पर्युपस्थापितानाम् योग्यतया क्रियाकर्तृसंम्बन्धमेव प्रयोगविधिर्विधत्त इति, सिद्धः समख्यया नियमः।

इति षष्ठं समाख्याधिकरणम्।

बलाबलाधिकरणम् ॥ ७ ॥

## श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्य-मर्थविप्रकर्षात् ॥ १४ ॥

इदानीं श्रुत्यादीनामेकविषयसमवायेन विरोधे सति बलाबलं विचार्यते, प्रथमं तावच्छ्रुतिलिङ्गयोश्चिन्त्यते। एवं श्रूयते—'ऐन्द्या गार्हपत्यमुपतिष्ठते' इति। तत्र संशयः-किमिन्द्रिस्यैवोपस्थानं कर्तव्यम्, उतेन्द्रस्य वा गार्हपत्यस्य वा? अथवा समुच्चयः? अथवा गार्हपत्यस्यैव? यदि लिङ्गं बलीयः, तेन इन्द्रोपस्थानम्। अथ तुल्यत्वम्, ततो विकल्पः। अथ तुल्यबलत्वेऽप्यविरोधः, ततः समुच्चयः। श्रुतिबलीयस्त्वे गार्हपत्यस्यैवेति। यः शब्दस्य श्रवणादेव विनियोगः प्रतीयते, सः श्रौत इत्यच्यते। श्रवणम्—श्रुतिः।

'गार्हपत्यमिति च ब्राह्मणगतद्वितीयान्तशब्दश्रवणादेव गार्हपत्यस्य प्राधान्यमुपस्थानं प्रति गम्यते, ऐन्द्र्याश्च तृतीयान्तायाः करणत्वमिति 'श्रौतोऽयम् विनियोगः, मन्त्रगतात्तु इन्द्रपदादिन्द्रस्वरूपमात्रं श्रुत्याऽवगम्यते, न तु मन्त्रम् प्रतीन्द्रस्य प्राधान्यम्, मन्त्रस्य वा करणत्वं केनचिच्छब्देनोच्यते, किं तु मन्त्रस्यैन्द्राभिधानसामर्थ्यमालोच्य नूनमनेन मन्त्रेणेन्द्र उपस्थेय इति श्रुतिः कल्प्यत इति, लैङ्गिकोऽयं विनियोगः।

श्रुतिलिंगयोर्विरोधे नेदमुदाहरणमित्याशंका

गृह्णीम एतदिन्द्रार्थत्वम्, लिङ्गादिति। न तु गार्हपत्यार्थत्वं मन्त्रस्य श्रौतम्। कथं? शेषशेषित्वमात्रं हि श्रुत्यैन्द्रगार्हपत्ययोरुक्तम्, अत्रान्योन्यविषयनियमस्त्वेकवाक्यतः। गार्हपत्यमिति हि शेषितामात्रं अनिर्द्धारितशेषविशेषं श्रुत्योक्तम्। ऐन्द्रीविषयं तदिति वाक्यादवगन्तव्यम्। तथैन्द्रययेत्यनवगतशेषिविशेषं शेषत्वं श्रुतम्। वाक्याद्गार्हपत्यविषयं भवति। यत्तु श्रुत्युपात्तं सामान्यरूपं न तल्लिङ्गेन विरुध्यते, संभवति हि गार्हपत्यस्य कांचिदाग्नेयीं प्रति प्राधान्यम्, ऐद्र्याश्चेन्द्रं प्रति शेषत्वम्। अन्योन्यान्वयस्तु वाक्यावगतो लिङ्गेन विरुध्यते, तेन लिङ्गवाक्ययोरेव विरोधः, न श्रुतिलिङ्गयोः।

तन्निरासः

अत्राभिधीयते—सत्यं वाक्यविरोधोऽस्ति श्रुतिश्चापि विरुध्यते।
सहिते हि विरुध्येते न तु लिङ्गेन केवले॥ ७८॥

यथैव श्रुतिमात्रमविरुद्धम्, एवं वाक्यमपि श्रुतिमनादृत्यालोच्यमानमविरुद्धमेव, यदि हि गार्हपत्यशब्द इन्द्रं लक्षयेत्। द्वितीया वा सप्तम्यर्थम्, ततः लिङ्गाविरोधेन गार्हपत्यपदमैन्द्र्ययोपतिष्ठत त्यनेनैकवाक्यतां गच्छति। यस्तु द्वितीयान्तगार्हपत्यशब्दश्रवणादेवार्थः प्रतीयते गार्हपत्यप्राधान्यम्, स लिङ्गेन विरुध्यते। 'अतो न केवलं वाक्यं न केवला श्रुतिर्लिङ्गेन विरुध्यते, वाक्यसहिता तु श्रुतिर्विरुध्यते। कथं पुनरेवमुभयविरोधः सन्नयं श्रुतिविरोध एव व्यवह्रियते? न वाक्यविरोधः? श्रुतेः प्राधान्यात्। विनियोगो हि प्रमेयः, स च साध्यसाधनरूपः, श्रुत्यैवोक्तः, वाक्यन्तु, प्रतियोगिविशेषसमर्पणेन श्रुतिमनुगृह्णद् गुणभूतम्, प्रधानेन च विरोधो लक्ष्यते, न गुणेन,

अयं चापरो विशेषो येन श्रुतेरेवात्र लिङ्गेन विरोधः, न वाक्यस्य, यस्य हि लिङ्गे बलीयसि बाधः, तल्लिङ्गेन विरुध्यते। न चात्र लिङ्गे बलीयसि वाक्यम् शक्यते बाधितुं, तद्बाधे हि पृथग्भूते गार्हपत्यैन्द्रीपदे न कञ्चिदर्थं प्रतिपादायतः,

पदमात्रस्याप्रामाण्यात्। तत्र श्रुतेरप्यत्यन्तबाधः, वाक्यस्य च। यत्र तु पृथग्भूतस्याप्यर्थप्रतिपादकत्वं न विहन्यते। यथा स्योनादिषु, तत्रैव वाक्यबाधः, नैवंजातीयकेषु, ततश्चासंभवति वाक्यस्य बाधे, श्रुतिरेव बाध्येतेति, श्रुतिलिङ्गयोरेवैष विरोध इति, युक्तो विचारः—किं बलीय इति।

तदर्थं च किं श्रुतिवल्लिङ्गाद्यपि स्वतः प्रमाणम्? उत श्रुतिकल्पनेनेति?।

तत्र स्वतः प्रमाणत्वं लिङ्गादेः श्रुतिवन्मतम्।
सामर्थ्यालोचनादेव तादर्थ्यं हि प्रतीयते ॥ ७९ ॥

गार्हपत्यार्थता श्रुत्येत्युभयोस्तुल्यकक्षता।
तेन द्वयोरुपस्थानं विकल्पेन भविष्यति ॥ ८० ॥

समुच्चयेन वा मन्त्रः प्रयुज्येत द्वयोरपि।
प्रतिप्रधानमावृत्तिर्गुणानां न विरुध्यते ॥ ८१ ॥

यद्यपि स्याद्बलीयस्त्वं श्रुतेर्लिङ्गात्तथापि तु।
अविरोधादबाधः स्यात् संभवी हि समुच्चयः ॥ ८२ ॥

यद्वा सामर्थ्यरूपत्वाल्लिङ्गं स्यात्प्रबलं श्रुतेः।
वस्तुशक्त्यनुसारी हि सर्वः शब्दः प्रवर्तते ॥ ८३ ॥

अत्राभिधीयते, सत्यं यद्यत्यन्तमशक्यता।
गार्हपत्ये तु सामर्थ्यं गौणं मन्त्रस्य विद्यते ॥ ८४ ॥

गुणाद्वाऽप्यभिधानं स्यादित्यत्रैव तद्धि साधितम्।
तत्र तावद्बलीयस्त्वं लिङ्गस्य न च तुल्यता ॥ ८५ ॥

विनियोगः श्रुतेः पश्चाल्लिङ्गस्याराद‌सौ स्थितः।
यावदेव हि मन्त्रार्थो मन्त्रेण प्रतिपाद्यते ॥ ८६ ॥

तावदेव श्रुतिर्मन्त्रं गार्हपत्यार्थतां नयेत्।
मन्त्रार्थं मन्त्रतो बुध्वा पश्चाच्छक्तिं निरूप्य च ॥ ८७ ॥

मन्त्राकाङ्क्षावशेनेन्द्रशेषत्वे श्रुतिकल्पना।
श्रुत्या प्रत्यक्षया पूर्वं गार्हपत्याङ्गतां गते ॥ ८८ ॥

निराकांक्षीकृते मन्त्रे निर्मूला श्रुतिकल्पना।
तेन शीघ्रप्रवर्तिन्या श्रुत्या लिङ्गस्य बाधनम् ॥ ८९ ॥

प्रत्यक्षे चानुमाने च यथा लोके बलाबलम्।
शीघ्रमन्थरवृत्तित्वात्तथेह श्रुतिलिङ्गयोः ॥ ९० ॥

अविरोधादबाधो यो वर्णितः स न युज्यते ।
लिङ्गस्य हि प्रमाणत्वं मन्त्राकाङ्क्षानिबन्धनम् ॥ ९१ ॥

तां च श्रुतिर्निकृन्तन्ती नाविरोधेन गच्छति ।
विरोधे च श्रुतिर्लिङ्गं बलीयस्त्वेन बाधते ॥ ९२ ॥

[ इति श्रुतिप्राबल्याधिकरणम् ]

## लिंगप्राबल्याधिकरणम्

लिङ्गवाक्यविरोधे—

'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि ।
तस्मिन्सीदाऽमृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' ।।तै०ब्रा० ३-७-५ इति।

तत्र संशयः—किं सकलोऽयं सदनकरणे, पुरोडाशप्रतिष्ठापने च विकल्पेन, समुच्चयेन वा प्रयोक्तव्यः, उत सकलो वा ? विभज्य वा ? अथवा विभज्यैव-'स्योनादिः कल्पयाम्यन्तः, सदनकरणे ? 'तस्मिन् सीदेति प्रतिष्ठापने' ? इति । तत्र यदि वाक्यं बलीयः, ततः सकलमेवोभयत्र, तुल्यबलत्वे सकलं वा, विभज्य वा, लिङ्गबलीयस्त्वे तु विभज्यैव—इति ।

तत्र—यावन्ति हि प्रयुज्यन्ते पदानि सति संभवे ।
तेषां स्यादेकवाक्यत्वं वाक्यभेदो न युज्यते ॥ ९३ ॥

'तस्मिन्सीदे'ति पूर्वोक्तसापेक्षत्वाच्च गम्यते ।
वाक्यैकत्वमतः सर्वमुभयत्र प्रयुज्यते ॥ ९४ ॥

यद्वा तुल्यबलत्वं स्यादुभयोर्लिङ्ग-वाक्ययोः ।
श्रुत्या प्रत्यक्षया लिङ्गं कल्प्यश्रुति निराकृतम् ॥ ९५ ॥

कल्प्यश्रुतित्वमिह तु समानमुभयोरपि ।
तेन तुल्यबलत्वं स्यादिति प्राप्तेऽभिधीयते ॥ ९६ ॥

सत्यं कल्प्या श्रुतिः किं तु लिङ्गादह्नाय कल्प्यते ।
वाक्येन प्रथमं लिङ्गं कल्पयित्वा ततः श्रुतिः ॥ ९७ ॥

कल्पनीयेत्यतो वाक्याच्छ्रुत्यर्थो विप्रकृष्यते ।
संनिकृष्टस्तु लिङ्गस्य तेनैतत्प्रबलं ततः ॥ ९८ ॥

'स्योनं ते सदनं कृणोमी'त्यस्य हि सदनकरणसामर्थ्यमनन्यापेक्षं स्वरूपतः एव प्रत्यक्षमवगम्यते, ततश्च तत्र श्रुतिमनुमाय शीघ्रं विनियुज्यते, पुरोडाशप्रतिष्ठापने त्वस्य न स्वरूपतः सामर्थ्यं गम्यते, 'तस्मिन् सीदे'त्यनेन प्रतिष्ठापनमुच्यते। तदेकवाक्यतापेक्षया पूर्वार्धस्यापि स्वार्थविशिष्टपुरोडाशप्रतिष्ठापनसामर्थ्यं लाक्षणिकं कल्पयित्वा, ततः श्रुतिकल्पनमिति, विप्रकर्षान्न तत्र विनियुज्यते। एवं तस्मिन्सीदेत्यस्यापि स्वार्थसामर्थ्यं क्लृप्तमिति, तत्रैव विनियोगेन सदनकरणे कल्प्यसामर्थ्यत्वात्। 'एवमर्थभेदेन नानावाक्यत्वोपगमान्नैकवाक्यतासम्भवः, तस्माद्विभज्य विनियोगः।

[ इति लिंगप्राबल्याधिकरणम् ]

---

## वाक्यप्राबल्याधिकरणम्

वाक्यप्रकरणयोर्विरोधे चिन्त्यते-दर्शपूर्णमासयोः सूक्तवाकनिगदः 'तत्राग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोक्राताम्, इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायोक्रातामि' तै० ब्रा० ३-५-१० त्यादि श्रुतम्। तत्राग्नीषोमादिदेवतापदं लिङ्गात्पर्वद्वयेऽपि निष्कृष्य प्रयोक्तव्यमिति स्थितम्। 'तदेकवाक्यभूतानीदं हविरजुषेतामित्यादीनि यानि। तानि ततो विच्छिद्य, अन्यत्रापि किं प्रकरणाविशेषात् प्रयुज्येरन् ? उत देवतापदेनैवाक्यतया तद्वदेव व्यवस्थितानि—इति।

### इदं हविरित्यादेः प्रकरणोदाहरणासंभवाशंका।

नन्वारादुपकारकाणामेव प्रकरणं विनियोजकम्, न सन्निपातिनाम्, "असंयुक्तं प्रकरणा"दित्युक्तम्। सन्निपातिनश्च सर्वे श्रुत्यादीनामन्यतमेन संयुक्ता भवन्ति, सन्निपाती च सूक्तवाकः, श्रुत्या प्रहरणसाधनत्वाल्लिङ्गेन च देवतास्मरणार्थत्वात्, तदन्तर्गता'श्चेदं हविरजुषेतामि'त्यादयः संयुक्तत्वात्, न प्रकरणं तेषां विनियोजकम्, सम्भवति च विनियोजकत्वे विरोधः, नासति। तस्मान्नात्र वाक्यप्रकरणयोर्विरोध इत्यनुदाहरणत्वम्।

### तन्निरासेनोदाहरणत्वसमर्थनम्।

स्यादेतदेवं यदि सन्निपातिनां प्रकरणं न विनियोजकं स्यात्। न तु तथा। अवघातादीनामपि प्रकरणादेव क्रतुभावनेतिकर्तव्यताभूतानां क्रत्वर्थत्वम्। असंयुक्तमिति तु न प्रकरणग्राह्यस्य विशेषणम्, किं तु पूर्वपक्षवादी श्रुत्यादीनामेव

विनियोजकत्वम्, तदसंयुक्तस्य नास्ति विनियोग इति मन्यते। तं प्रत्युच्यते— श्रुत्याद्यसंयुक्तमपि प्रकरणेन विनियुज्यत इति।

यद्वा प्रकरणविरोध्यर्थासंयोगभिप्रायमसंयुक्तग्रहणम्। तदप्येतदधिकरण-सिद्धबलाबलाबलाङ्गीकारेणोक्तम्। अतो युक्तमुदाहरणम्।

प्राभाकरमतोपन्यास-निरा-ौ

ये त्वाराद्रुपकारकेष्वेव प्रकरणस्य व्यापारः, सन्निपातिनां तु ग्राहक-ग्रहणाख्येन प्रमाणेन तार्तीयश्रुत्याद्यतिरिक्तेनापूर्वार्थत्वम्. द्वारैदमर्थ्यं तु श्रुत्यादि-भिः, औपादानिकं क्रत्वर्थत्वम्, प्रकरणस्य तु न कश्चिद् व्यापार इति मन्यन्ते, तेषामेवायं सूक्तवाकपदानां श्रुत्या प्रहरणविनियुक्तानां प्रकरणाविषयत्वान्नेदम् वाक्यप्रकरणविरोधोदाहरणं युक्तमित्युपालम्भः, नास्माकम्।

तत्र द्वयोरपि वाक्यप्रकरणयोः प्रमाणत्वात्, श्रुतिकल्पनाधीनत्वसाम्यात्, अन्यस्य च विप्रकर्षकारणस्याद्याप्यकथितत्वात्तुल्यबलतां मन्यन्ते।

यद्वा प्रधानाकाङ्क्षा प्रकरणम्, प्रधानार्थं च सर्वमिति, तन्निबन्धन एव विनियोगो बलीयानिति प्राप्ते—

अभिधीयते—येनैकवाक्यता तत्र सामर्थ्यं गम्यते मनाक्।

सामर्थ्याच्च श्रुतिः श्रुत्या विनियोगोऽपरत्र तु॥ ९९॥
पूर्वयोरेकवाक्यत्वं कल्प्यं स्यात्प्रक्रियावशात्।
ततो लिङ्गं श्रुतिः पश्चाद्विनियोगस्ततः परः॥ १००॥

'अग्नीषोमाविदं हविरजुषेतामि'त्यग्नीषोमपदस्येदं हविरित्यादेश्चैक-वाक्यत्वं क्लृप्तम्। एकवाक्यतयाऽग्नीषोमप्रकाशनसामर्थ्यम् 'इदं हविरि'त्यादेः शीघ्रं कल्प्यते, ततश्च श्रुतिः, तया विनियोग इति सन्निकर्षः, इन्द्राग्नीपदेन 'त्वत्र त्यस्य 'इदं हविरि'त्यादेरेकवाक्यत्वं न प्रत्यक्षतोऽवगम्यते, किन्तु प्रकरणात्तद्दर्श-पूर्णमासाभ्यामिदं हविरित्यादेरेकवाक्यता कल्प्यते—अनेन दर्शपूर्णमासयोरुप-कुर्यादिति, ततःकोऽस्योपकार? इति तदीयदेवतापदैकवाक्यतया तत्प्रकाशन-सामर्थ्यं चिरेण कल्पयित्वा, ततः श्रुतिकल्पनेन विनियोग इति विप्रकर्षाद्दुर्बलम् वाक्यात्प्रकरणम्।

[ इति वाक्यप्राबल्याधिकरणम् ]

## अथ प्रकरणप्राबल्याधिकरणम्

अथ स्थानप्रकरणयोर्विरोधे चिन्त्यते। राजसूये बहवः पश्विष्टिसोमयागाः सर्वे फलवन्तः समप्रधानाः। तत्राभिषेचनीयो नाम सोमयागः। तत्सन्निधौ विदेवनादयः समाम्नाताः। ते किं सर्वे राजसूयाङ्गम, उताभिषेचनीयस्यैवे? ति यदि सन्निधिर्बलवानभिषेचनीयाङ्गम्। अथ प्रकरणम्, ततोराजसूयस्यैवेति। तत्र सन्निधिविशेषादभिषेचनीयाङ्गत्वे प्राप्ते —

उच्यते प्रकरणाविशेषात्सर्वार्थता, नन्वभिषेचनीयस्यापि फलवत्त्वादस्त्येव प्रकरणम्, यद्यप्यस्ति, तथाऽप्यन्येषामप्यतीति तादर्थ्यमपि युक्तम्, यदि परमविशेषतः सर्वेषामाकाङ्क्षायामपि पाठसंनिधिविशेषामप्यस्तीदभिषेषादभिषेचनीयस्य विशेषतः आकाङ्क्षां कल्पयित्वा तादर्थ्यं स्यात्, ततश्च विप्रकर्षः, सर्वार्थता तु क्लृप्ताकाङ्क्षातः सुखं गम्यते, अभिषेचनीयाङ्गत्वं त्वाकाङ्क्षाकल्पनयेति। एतेनाग्नेयादीनाम् धर्मसाधारण्यं व्याख्यातम्। अपि च नास्त्यभिषेचनीस्य प्रकरणम्, प्राकृतेनेत्थंभावेन कथमाकाङ्क्षापूरणात्। नन्वन्येषामपीष्टिपशुसेमानां विकृतित्वान्नास्त्येव प्रकरणम्, सत्यं प्रातिस्विकेन रूपेण नास्ति, राजसूयात्मना त्वस्त्येव कथम्? श्रुत्यादिविहिताङ्गसन्दंशात् तद्वशेन न हि निवृत्ताऽप्याकाङ्क्षा पुनरुत्पत्स्यते पवित्रादारभ्य क्षत्रस्य धृतिं यावदङ्गविधिषु प्रायेण 'राजसूयाय ह्येना उत्पुनाति' 'राजसूयेनेजानः सर्वमायुरेती'ति राजसूयपरामर्शात्तावन्तं देशमनुवृत्तः 'राजसूयकथंभावः शक्नोति तन्मध्यपतितानि विदेवनादीनि ग्रहीतुम्। अतः प्रकरणाद्राजसूयार्था विदेवनादयः।

[ इति प्रकरणप्राबल्याधिकरणम् ]

---

क्रमसमाख्ययोर्विरोधे पौरोडाशिकसमाख्याते दर्शपूर्णमासकाण्डे सान्नाय्यपात्रशुन्धनक्रमे समाम्नातः 'शुन्धध्वमि'ति मन्त्र उदाहरणम्। स किं पुरोडाशपात्राङ्गं? उत सान्नाय्यपात्राङ्गम्, उतोभयाङ्गमिति विचारः, यदि समाख्या बलवती, पुरोडाशाङ्गम्। अथ तुल्यबलत्वम् तदोभयार्थता, क्रमबलवत्त्वे तु सान्नाय्यार्थता।

तत्र —विशेषाग्रहणात्तुल्यबलत्वमुभयोर्भवेत्।
सम्बन्धवाचिनीत्वेन समाख्या वा बलीयसी॥ १०१॥

नैतदेवं समाख्या हि न सम्बन्धाभिधायिनी।
यद्यपि त्वभिधात्री स्यात्प्रमाणं न तु तत्र सा ॥ १०२ ॥

न हि यौगिकैः शब्दैः सम्बन्धोऽभिधीयते। दण्डीति हि प्रकृत्या दण्डस्वरूपमुक्तम्, प्रत्ययेनापि पुरुषः। दण्डयुक्तस्तु पुरुषो न कस्यचिद्वाच्यः, तयोः समभिव्याहारादेव परस्परयोगो वाक्यार्थ इव पदार्थानां लभ्यमानोः नाभिधानं प्रयोजयति। तथा पाचकादिष्वपि।

'आह च—पाकं हि पचिरेवाह कर्तारं प्रत्ययोऽप्यकः।
पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचिदि ॥' ति ॥

एवं पौरोडाशिकशब्देऽपि प्रकृति-प्रत्ययाभ्यां पुरोडाशस्वरूपं काण्डस्वरूपं चोक्तम्। तयोश्च सम्बन्धोऽनभिहित एव कल्पयितव्यः। क्रमे तु देशसामान्यलक्षणः सम्बन्धः प्रत्यक्ष इति बलीयस्त्वम्। अथापि समाख्या सम्बन्धमभिदध्यात्, तथापि न सा तत्र प्रमाणम्, पदस्य पदार्थे प्रामाण्याभावात्। अतः सम्बन्धनिमित्तां समाख्यामुच्चरन्तीमुपलभ्य, नूनमस्त्यनयोः कश्चित्सम्बन्धः इति, सम्बन्धसामान्यं कल्प्यम्। ततोऽपेक्षा, तत एकवाक्यत्वम्, ततः सामर्थ्यम्, ततस्तु श्रुतिः, ततो विनियोगः। क्रमस्तु सम्बन्धमात्रस्य प्रत्यक्षप्रमितत्वात्ततः आरभ्य श्रुत्यर्थं गच्छन्नेकं पदमगतां समाख्यां जयति।

प्राप्तबाधाप्राप्तबाधभेदनिरूपणम्।

तदेवं श्रुत्यादीनाम् पूर्वपूर्वेणोत्तरोत्तरं श्रुत्यर्थं यावदगतमलब्धप्रामाण्याव स्थमेव मूलच्छेदान्निराक्रियते, सोऽयमप्राप्तबाधः।

यत्तु शास्त्रप्रदेशेषु, 'अथ यत् तत्र तत्रोच्यते इदमनेन बाध्यते' भा०पृ० ८५८ प्राकृतं वैकृतेन, सामान्यं विशेषेणेत्यादि, तद्बाधविषयं प्राप्तं बाध्यते? उताप्राप्तमिति। न तावत्तत्र श्रुतिलिङ्गादिवदप्राप्तबाधसम्भवः। तथा च तद्वदेव प्रापकस्य शास्त्रस्याभावोऽभ्युपगन्तव्यः, ततश्च तस्यैकत्वात् कुशेष्विवाङ्गान्तरेष्वपि चोदको न स्यात्, पदहोमवच्च होमान्तरेष्वप्याहवनीयो न स्यात्। अथ प्राप्तम्, तत्र श्रुत्यादिवैषम्यप्रसङ्गात्। एकरूपेण हि बाधेन भवितुं युक्तम्, न विचित्रेण, न च शक्यं शास्त्रप्राप्तं बाधितुम्।

उच्यते—प्राप्तस्यैव तेषु बाधः, नावश्यमेकरूपेणैव तेन भवितव्यम्, वैचित्र्यमेव प्रमाणबलेन युक्ततरं स्यात्, प्राप्तमपि शक्यमेव बाधितुमिति दशमाद्ये वक्ष्यते।

**प्रभाकरेण वार्तिकस्योपरि समुद्भावितस्य दूषणस्य परिहारः ।**

'अथ यत् तत्र तत्रे त्या'दिभाष्यस्य श्रुत्यादिविषयत्वम्,

[ स्थिते चाप्राप्तबाधत्वे प्राप्तबाधोऽपि नोत्तरमि' ]तं. वा. पृ. ८५९ ति।

वार्तिकेन दूषितम्। केचन चास्य दूषणस्य सामान्यतः प्राप्तिं मन्वानाः विशेषमपश्यन्तः स्मृतिप्रमोषनिमित्तं प्राप्तिज्ञानं व्यपदिशन्ति। विशेषावगमात्तेषाम् निवर्तत इति, अनेन कश्चिदपि परिहारलेशः । न हि विप्रकृष्टप्रमाणं सन्निकृष्ट-प्रमाणात्प्राक् प्राप्तं सद् व्यवहारमपि निवर्तयति । यतस्तन्निवर्तकता सन्निकृष्टस्य स्यात्। अतो नेदमुपदेशबाधविदामभिधानम्, किंत्वतद्विदामेव तु तादृशामी-दृशमभिधानमित्युपरम्यते ।

श्रुत्यादीनामङ्गः षण्णामेकार्थोपनिपातिनाम् ।
पूर्वं पूर्वं बलीयः स्याद्दुर्बलं चोत्तरोत्तरम् ॥ १०३ ॥

**इति सप्तमं बलाबलाधिकरणम् ।**



अहीनाधिकरणम् ॥ ८ ॥

## अहीनो वा प्रकरणात् गौणः ॥ १५ ॥

एवं विरोधे श्रुत्यादेर्बलाबलमुदीरितम् ।
अतः परं विरोधः क्व क्व नास्तीति विचार्यते ॥ १०४ ॥

प्रथमं तावत्प्रकरणस्य श्रुत्यादिभिः सह चिन्ता । ज्योतिष्टोमप्रकरणे 'तिस्रः एव साह्नस्योपसदः, द्वादशाहीनस्ये'ति श्रुतम् । तत्र साह्नशब्देन सहाह्ना समाप्य-मानत्वाज्ज्योतिष्टोमोऽभिधीयत इति । त्र्युपसत्त्वं तावत्तदङ्गम्, द्वादशोपसत्वमपि किं तस्यैवाङ्गम्, उत द्वादशाहादेरहर्गणस्येति संशयः । तदर्थं च किमहीनश्रुत्या प्रकरणं विरुध्यते, नेति ।

तत्र प्रकरणाज्ज्योतिष्टोमाङ्गत्वं प्रतीयते ।
तत्रैवाहीनशब्दोऽपि न हीन इति वर्तते ॥ १०५ ॥

खप्रत्ययान्तो ह्यहर्गणवचनः स्यात् । नञ्समासस्त्वयं प्रकरणाविरोधादङ्गी-क्रियते'। न हीयत इत्यहीनः, न ह्यसौ केनचित्क्रतुना हीयते, सर्वे क्रतवस्तम् प्रकृतित्वेनापेक्षमाणा न जहति, तेन श्रुत्यविरोधाज्ज्योतिष्टोमाङ्गत्वे प्राप्ते—

ब्रूमः—साह्नादर्थान्तरं तावदहीम इति गम्यते।
रूढिश्चेयं द्विरात्रादौ सा च योगाद्बलीयसी ॥ १०६ ॥
तत्रापि यौगिकत्वं चेन्न सत्रेष्वप्रयोगतः।
मध्योदात्तं पदं चेदमतः खप्रत्ययान्तता ॥ १०७ ॥

साह्नशब्देन ज्योतिष्टोमनभिधाय, पुनरहीन इत्युच्यमानं संज्ञाभेदादेव तावदर्थान्तरं गम्यते। रूढ्या च द्विरात्रादिवचनत्वान्न योगेन ज्योतिष्टोमे वर्तितुमर्हति। ननु द्विरात्रादावप्यह्नां समूह इत्येवं योगेनैव वृत्तिः। न,। सत्रेष्वप्रयोगात्। किं च नञ्समासत्वेऽव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वं स्यात्, मध्योदात्तं न्त्विदं पदम्। अतः खप्रत्ययान्तत्वम्। तथा सत्यापन्नादिषूपदेशिवद्वचनम् स्वरसिद्ध्यर्थमित्येवमीनादेशस्यैवोपदेशित्वात्प्रत्ययाद्युदात्तत्वेनेकारस्वरः सिद्धः भवति। तस्मादहीनश्रुतेरहर्गणवचनत्वात्तद्विषयमेव द्वादशोपसत्त्वं षष्ठीश्रुत्या गम्यते, तत्तु पृथग्विधीयते, वाक्यान्तरप्राप्तं वा त्र्युपसत्वस्तुत्यर्थमनूद्यते। सर्वथा तावद् 'द्वादशाहीनस्ये' त्येतदहर्गणविषयमिति सिद्धम्।

इत्यष्टममहानाधिकरणम्।

प्रतिपदाधिकरणम् ॥ ९ ॥

## द्वित्वबहुत्वयुक्तं वा चोदनात्तस्य ॥ १७ ॥

ज्योतिष्टोमे श्रूयते 'युवं हि स्थः स्वर्पती' ता. वा. ६-९-१३ ति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दव इति बहुभ्योः यजमानेभ्य इति'।तत्र-सन्देहः-किमेते प्रतिपदौ ज्योतिष्टोम स्य? उत द्विबहुयजमानकेषु कुलायाहीनादिषूत्कृष्टव्ये—इति ? तदर्थं च किं ज्योतिष्टोमे द्वौ बहवश्च यजमानाः सम्भवन्ति, उत नेति।

तत्र—हीनाङ्गस्यापि नित्यस्य प्रयोगो येन वक्ष्यते।
तेनैकत्वं विहाय द्वौ बहवो वा प्रयुञ्जीत ॥ १०८ ॥

यद्यपि नित्यवाक्येऽपि 'वसन्तो वसन्तो ज्योतिषा यजेते'त्याख्यातोपात्तगुणभूते पादेयकर्तृगतमेकत्वं विवक्षितम्। तथाऽपि नित्येऽशक्तिकृतांगत्यागाभ्युपगमात्, यद्येको न शक्नुयात्, तदाङ्गान्तरवदेकत्वं विहाय, द्वौ बहवो वा यजेरन्, तदाश्रयणेन प्रतिपद्विधानं प्रकृतावेवोपपन्नमिति नोत्कर्षः।

नैतदेवमशक्याङ्गमुपादेयं हि लुप्यते।
अनुपादेयमेकत्वं यजमानस्य कालवत् ॥ १०९ ॥

'सोमेन यजेते' 'वसन्त वसन्तो ज्योतिषा यजेते' त्युत्पत्ति–प्रयोगचोदनयोः श्रुतमेकत्वमपरित्यज्य, अङ्गान्तरस्यैव त्यागो युक्तः।

किञ्च यत्खलूपादेयमङ्गं यजमानस्य चोद्यते, तद्विषय एव यथाशक्त्युबन्धः, यत्त्वनुपादेयं कालवत्, न तत्रैवमुपबन्धः, तदपेक्षस्तु विधिस्तद्वन्तमधिकृत्य प्रवर्तते, अनुपादेयं च यजमानस्यात्मीयामेकत्वम्। अत एको यथा शक्नुयादित्युपबन्धादङ्गान्तरं दक्षिणापरिमाणादि परित्यज्यैक एव प्रवर्तत इति, प्रकृतौ द्वित्वबहुयोरभावात्, षष्ठीश्रुत्या तत्संसयुक्तयोः प्रतिपदोस्तद्वत्सु कुलायादिषूत्कर्षः, न च पत्न्यभिप्रायं द्वित्वबहुत्वं युक्तम्। यजमानशब्देन वेदे पुंस एव सर्वदाभिधानात्, पत्न्यास्तु पत्नीशब्देनैवाभिधानात्, बहुभ्य इति विरूपैकशेषस्य प्रमाणामन्तरेण दुरुपपादत्वात्।

अपि यजमानयोरिति यजमानशब्दस्य कर्तृवचनत्वात्कर्तृद्वित्वं प्रतीयते, न च पत्न्यभिप्रायेण कर्तृद्वित्वं सम्भवति, दम्पत्योर्हि व्यासक्तं कर्तृत्वमग्नीषोमयोरिव देवतात्वम्। अतस्तत्रैकवचनमेव स्यात्, यथा फलवाक्ये 'स्वर्गकामो यजेते'ति। अधिष्ठानाभिप्रायत्वे लक्षणा स्यात्। तस्मादुत्कर्षः।

इति नवमं प्रतिपदाधिकरणम्

जाघन्यधिकरणम् ॥ १० ॥

**जाघनी चैकदेशत्वात् ॥ २० ॥ चोदना वाऽपूर्वत्वात् ॥ २१ ॥ एकदेश इति चेत् ॥ २२ ॥ न प्रकृतेरशास्त्रनिष्पत्तेः ॥ २३ ॥**

दर्शपूर्णमासयोः पत्नीसंयाजान्प्रकृत्य श्रूयते "जाघन्या पत्नीः संयाजयन्ती" आप.श्रौ. ति। तत्र चिन्ता–किमिदं विधानं पशावुत्कृष्यते ? उत ने ति ? यदि जाघनीं कृतार्थामुद्दिश्य पत्नीसंयाजाः संस्कारा विधीयन्ते, ततो वाक्यवशेनोत्कर्षः। अथ पत्नीसंयाजानां जाघनी द्रव्यं विधीयते, ततोऽनुत्कर्षः, तत्राराद्उपकारकात्सामवायिकस्य गरीयस्त्वात्, जाघनीशब्दस्य चोत्तरार्धादिशब्दवदेकदेशवचनत्वात्, एकदेशद्रव्याणां च विद्यमानैकदेशसंयोगाद्यत्र परप्रयुक्तपश्वनुनिष्पन्ना जाघनी विद्यते, तत्र तस्याः संस्कारत्वेन पत्नीसंयाजविधानमिति प्राप्ते—

अभिधीयते—जाघनी हि गुणत्वेन तृतीयोक्त्याऽवगम्यते।
पत्नीसंयाजयागाश्च द्रव्यापेक्षा व्यवस्थिताः ॥ ११० ॥
तेनैतेषां गुणत्वेन जाघन्यत्र विधीयते।
न च सापेक्षवृत्तित्वमुत्तरार्धदिशब्दवद् ॥ १११ ॥

उत्तरार्धदिशब्दा हि परापेक्ष्यैव स्वार्थं बोधयन्तो युक्तं यत्परप्रयुक्तमेकदेशिनमपेक्षन्ते, जाघनीशब्दस्त्ववयवविशेषवचनो न किञ्चिदपेक्षते, अतः निर्मूला स्यादस्योत्कर्षकल्पनेति, दर्शपूर्णमासयोरेव निवेशः।

इति दशमं जाघन्यधिकरणम्।

सन्तर्दनाधिकरणम् ॥ ११ ॥

**सन्तर्दनं प्रकृतौ क्रयणवदनर्थलोपात् स्यात् ॥२४॥ उत्कर्षो वा ग्रहणाद्विशेषस्य ॥ २५ ॥ कर्तृतो वा विशेषस्य तन्निमित्तत्वात् ॥२६॥ क्रतुतो वाऽर्थवादानुपपत्तेः स्यात् ॥ २७ ॥ संस्थाश्च कर्तृवद्धारणार्थाविशेषात् ॥ २८ ॥ उक्थ्यादिषु वाऽर्थस्य विद्यमानत्वात् ॥ २९ ॥ अविशेषात्स्तुतिर्व्यर्थेति चेत् ॥ ३० ॥ स्यादनित्यत्वात् ॥ ३१ ॥**

ज्योतिष्टोमेऽधिषवणफलके प्रकृत्य 'न संतृणत्ति, असन्तृण्णे हि हनू' इत्यसन्तर्दनं विधाय, पुनः श्रुतम् 'अथो खलु दीर्घसोमे सन्तृद्यत् धृत्यै' तै.सं. ६-२-११ इति। तत्र संशयः किमिदं सन्तर्दनं प्रकृतावेव, अथोत्कृष्यत इति। यदि दीघसोमशब्दः प्रकृतावपि वर्तेत, ततोऽनुत्कर्षः। अथ न वर्तेत, ततो वाक्यादुत्कर्षः, यदोत्कर्षः, तदाऽपि किं द्विरात्रादिष्वेवोत्कर्षः? अथवा संस्थान्तरेषु द्विरात्रादिषु चाविशेषेणाग्निष्टोमाधिकमात्रे इति। तत्र प्रकृतेरपीष्टिपशुबन्धाद्यपेक्षया दीर्घसोमत्वोपपत्तेस्तत्रैव निवेशः। नन्वसन्तर्दनम् तत्र विहितम्, क्रयवद्विकल्पो भविष्यति। ननुच तत्र समुच्चय एव। सत्यम्, विधानविकल्पाभिप्रायमिदम्, न प्रयोगाभिप्रायमित्यदोषः। नैतद्युक्तम्। न हि विधेर्विकल्पः संभवति, वस्तुनि विकल्पासम्भवात्। तेन यद्यप्येककार्याणाम् सन्निपातिनां भेदाभावादेकमेव क्रयकर्म, तच्चैकेनैव विधीयते, अन्ये गुणविधयः, तत्र विशेषो न गृह्यते, सर्वत्र गुणश्रवणात्। तथाप्यज्ञानमेव शक्यं वक्तुम्, न विकल्पाभिधानम्। अपि चारुणावाक्येऽनेकगुणश्रवणात्, तत्रैव क्रयविधिः, इतरे गुणविधय इति विशेषग्रहणान्न विकल्पः।

अथवा भिन्नान्येव क्रयकर्माणि गुणाद्गम्यन्ते। न ह्येकेन विहिते, अन्ये गुणविधयः सम्भवन्ति, उत्पत्तिशिष्टगुणावरोधात्। प्रमाणबलाच्च सन्निपातिनामप्येककार्याणां भेद आपतन्न दण्डेन पराणुद्यते। तथा च गुणकर्मणामवघातादीनामेककार्याणां द्वितीये भेद उक्तः। तथा 'प्राकाशावध्वर्यवे ददाती'ति दानान्तरमेव प्राकृतकार्ये विधीयत इति वक्ष्यते। तथा 'शतं ब्राह्मणाः सोमम् भक्षयन्ती'त्यत्र भक्षान्तरविधावपि प्राकृतकार्यार्थता निबन्धनकारेणैवोक्ता। तस्मात् क्रयवद्विकल्प इति पूर्वपक्षेण दृष्टान्त इति व्याख्येयम्। अतः प्रकृतावेव निवेशः।

नैवम्। दीर्घशब्दो हि सोमस्य विशेषणम्, न चेष्ट्याद्यपेक्षया दीर्घत्वम्, सोमस्य विशेषणं भवति, अव्यभिचारात्। अतः सोमान्तरापेक्षमेव दीर्घत्वम्। न च प्रकृते तदस्तीत्युत्कर्षः,

अन्यः पक्षः—'दीर्घसोम' इति षष्ठीसमासोऽयं दीर्घस्य यजमानस्य सोमः, स च प्रकृतावपि संभवतीत्यनुत्कर्षः। नैवम्। समानाधिकरणसमासस्य बलीयस्त्वात्, 'धृत्या' इत्यर्थवादानुपपत्तेश्च। न हि यजमानदैर्घ्याद्धारणे कश्चिद्विशेषो भवति। तस्मात्कर्मापेक्षमेव दीर्घत्वमित्युत्कर्षः, स च द्विरात्रादिष्वेव, न संस्थासु। तत्रापि चोदकप्राप्तस्य दशमुष्टेस्सोमस्य तावत एवाभिषवात् 'धृत्या' इति च वाक्यशेषानुपपत्तेः। ननु तत्रापि प्रदानविवृद्ध्याऽर्थात्प्रदेयविवृद्ध्या भवितव्यम्। न। चोदकप्राप्तत्वात्सोमपरिमाणस्य। प्रदेयविवृद्धिस्तु तोयादिना संपादनीया, तस्माद् द्विरात्रादिष्वेवोत्कर्ष इति प्राप्ते—

अभिधीयते गृह्णीम एतदुत्कर्ष इति. न तु द्विरात्रादिष्वेव। किन्तु अग्निष्टोमाधिकमात्रे दीर्घशब्दोपपत्तेः। अविशेषेण संस्थासु द्विरात्रादिषु चोत्कर्षः। संस्थासु चास्त्यर्थात्प्रदेयविवृद्धिः, न च चोदकप्राप्तपरिमाणविरोधः, दीर्घपर्वसोमग्रहणेन दशमुष्टि-त्रिपर्वपरिमाणयोरविरोधात्। अपि च न दशमुष्टित्रिपर्वपरिमित एव प्रकृतौ सोमः, अवशिष्टानामंशूनामुपसमूहनवचनात्तत्र परिमाणाभावः। श्रूयते हि "यद्वैतावानेव सोमः स्याद्यावन्तं मिमीते, यजमानस्यैव स्यात्, तत्रापि सदस्यानाम्, प्रजाभ्यस्त्वेत्यवशिष्टानंशूनुपसमूहति, सदस्यानेवान्वाभजती' तै. ६-१-९-५ ति। तस्मादस्ति प्रदेयवृद्धिरर्थात्संस्थासु। सत्यां च 'धृत्या' इति वाक्यशेषोपपत्तिः, अतोऽविशेषेण संस्थासु द्विरात्रादिषु चोत्कर्षः। न तु संस्थास्वेवेति भ्रमितव्यम्। अविशेषादेव, न च प्रकरणाद्विशेषः संस्थानाम् प्रकरणाभावात्। अतो वाक्येनैव सम्बन्धः। तच्चाविशिष्टमिति, सर्वगामिता।

इति एकादशं सन्तर्दनाधिकरणम्।

प्रवर्ग्याधिकरणम् ॥ १२ ॥

सङ्ख्यायुक्तं क्रतोः प्रकरणात् स्यात् ॥ ३२ ॥ नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात् ॥ ३३ ॥

ज्योतिष्टोमेऽस्ति प्रवर्ग्यः–'पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ती' तै. आ. ८-६ति। तं प्रकृत्य श्रूयते–'न प्रथमयज्ञे प्रवृञ्ज्यादि'ति। तत्र संशयः—किं ज्योतिष्टोमाङ्गमयं प्रतिषेधः ? अथ प्रथमप्रयोगाङ्गमिति। यदि प्रथमयज्ञशब्दो ज्योतिष्टोमनाम, 'ततो वाक्यप्रकरणाभ्यां ज्योतिष्टोमाङ्गम्। अथ प्रयोगवचनः, ततो वाक्येन प्रकरणं बाधित्वा प्रयोगाङ्गतेति। तत्र यज्ञशब्दस्य यागवचनत्वात्प्रथमशब्दस्य च तद्विशेषणत्वाद्यागनामता, तत्रापि प्रकरणाज्ज्योतिष्टोमनामता, विस्पष्टञ्च वाक्यान्तरे सामानाधिकरण्यम् 'एष वाव प्रथमो यज्ञो यज्ञानाम् यज्ज्योतिष्टोमः' इति प्रवृत्तिनिमित्तस्य विद्यमानत्वात्, स हि प्रथमं प्रयुज्यते, 'य एतेनानिष्ट्वे'ति वचनात्। तस्मात्–

वाक्यात् प्रकरणाच्चायं क्रतोरङ्गं तदुच्यते।
वाक्यादेष प्रयोगाङ्गं प्रयोगः प्रथमो यतः ॥ ११२ ॥

प्रथमशब्देन हि यदप्रवृत्तपूर्वस्य कर्तुराद्यं प्रवर्तनम्, तदुच्यते। न तु क्रतुः कश्चित्। स तु प्रयोगविषयत्वाल्लक्षणया गम्यते। नन्वितरत्रापि यज्ञशब्देन लक्षणया प्रयोगे वर्तितव्यं स्यात्। नायं दोषः। जघन्यो हि यज्ञशब्दो लक्षणयाऽपि नीयमानो न दुष्यति, मुख्यस्तु प्रथमशब्दः श्रुतिवृत्तो ग्रहीतव्यः 'एव वाव प्रथमः' इति। 'य एतेनानिष्ट्वे'त्यस्यार्थवादत्वान्नाक्लृप्तशक्तिकल्पनया नामधेयत्वमवगमयितुमलम्। तस्मात् प्रयोगाङ्गम्,–प्रथमे–यज्ञप्रयोगे न प्रवृञ्ज्यादिति। 'यत्त्वग्निष्टोमे प्रवृणक्ती'ति वाक्यान्तरम्, तदनन्यार्थत्वात्प्रथमप्रयोगविषयमेव प्रतिषिद्धप्रतिप्रसवार्थम्, तेनाग्निष्टोमप्रथमप्रयोगे विकल्पः। स च व्यवस्थितः, वचनान्तरात्। तथा हि श्रूयते 'कामं तु योऽनूचानः स्यात्, तस्य प्रवृञ्ज्यादि'ति। तेनाग्निष्टोमप्रथमप्रयोगेऽनूचानस्य नित्यं प्रयोगः, अन्येषां नित्यमप्रयोगः, अतिरात्रप्रथमाहारे तु सर्वेषामेवाप्रयोगः, प्रतिप्रसवाभावात्।

इति द्वादशं प्रवर्ग्याधिकरणम्।

## पौष्णपेषणाधिकरणम् ॥ १३ ॥

**पौष्णं पेषणं विकृतौ प्रतीयेताऽचोदनात्प्रकृतौ ॥ ३४ ॥**

दर्शपूर्णमासयोः "पूषा प्रपिष्टभागः" तै. सं. २-५-६ इति पेषणं प्रकरणे पूषाभावाद्यत्र पूषा, तत्र वाक्यादुत्कृष्यत इति प्राप्तिसूत्रमेतत्।

इति त्रयोदशं पौष्णपेषणाधिकरणम्।

---

## पौष्णपेषणस्य चरावेव निवेशाधिकरणम् ॥ १४ ॥

**तत्सर्वार्थमविशेषात् ॥ ३५ ॥ चरौ वाऽर्थोक्तं, पुरोडाशेऽर्थविप्रतिषेधात् पशौ न स्यात् ॥ ३६ ॥ चरावपीति चेत् ॥ ३७ ॥ न षक्तिनामत्वात् ॥ ३८ ॥**

तत्पेषणं किं चरौ, पशौ, पुरोडाशे च विधीयते ? अथवा चरावेवेति संशयः।

अविशेषेण सर्वत्र स्यादिति प्राप्त उच्यते।
पुरोडाशेऽन्यतः सिद्धं पशावाकृतिनाशनम् ॥ ११३ ॥
पेषणं तेन न तयोर्विधातव्यं चरौ पुनः।
अविघातकमप्राप्तमिति तत्र विधीयते ॥ ११४ ॥

पुरोडाशे हि चोदकादेव सिद्धं पेषणमिति न विधातव्यम् ॥

नन्वन्यदिदं पेषणं श्रपणोत्तरकालं वचनबलाद्भविष्यति। न। अश्रवणात्। न हि पाकोत्तरकालमिदमन्यत्पेषणमिति वचनमस्ति। पेषणमात्रं श्रुतम्। तच्च प्राप्तम् न विधातव्यम्। ननु विधिबलादेवान्यत्स्यात्। न। तस्याप्राप्तपेषणे चरावर्थवत्त्वात्, ईदृश्यां च कल्पनायामसामर्थ्यात्। गौरवं चात्यन्ताप्राप्तपेषणान्तरविधौ स्यात्।

एवं पशावपि सान्नाय्यविकारेऽत्यन्ताप्राप्तम्। 'हृदयस्याग्रेऽवद्यती'ति विहितहृदयाद्याकृतिविनाशनं च। चरौ त्वविघातकम्, पिष्टकचरावपि पाकवेशद्येन चरुशब्दप्रयोगात्, चोदकप्राप्तं च तत्प्रयोजनाभावान्निवर्तमानं प्रतिप्रसूयत इति, लाघवात्तत्रैव पेषणम्।

इति चतुर्दशं पौष्णपेषणस्य चरावेव निवेशाधिकरणम्।

---

पौष्णपेषणस्यैकदेवत्ये निवेशाधिकरणम् ।

एकस्मिन्नेकसंयोगात् ॥ ३९ ॥ धर्मविप्रतिषेधाच्च ॥ ४० ॥
अपि वा सद्वितीये स्याद्देवतानिमित्तत्वात् ॥४१॥ लिङ्गदर्शनाच्च ।४२।
वचनात्सर्वपेषणं तं प्रति शास्त्रवत्त्वादर्थाभावाद्धिचरावपेषणं भवति ।४३।
एकस्मिन्वाऽर्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् ॥ ४४ ॥
हेतुमात्रमदन्तत्वम् ॥ ४५ ॥ वचनं परम् ॥ ४६ ॥

चरावेव पेषणमिति स्थितम्। तत्र संशयः-किं यत्रऽन्यसहितः पूषा देवता, तत्राप्येतत्पेषणम्? उत यत्रैव केवल इति? तदर्थं च किं देवताप्रयुक्तमिदम् पेषणम्? उत तद्दवत्ययागापूर्वप्रयुक्तमिति?

तत्र—यज्ञप्रकरणाभावाद्वाक्ये चाश्रवणादिदम् ।
पेषणं देवताधर्मो नापूर्वस्यान्यधर्मवत् ॥ ११५ ॥

अन्ये हि धर्माः श्रुत्यादिभिः, प्रकरणाद्वा यज्ञापूर्वसंयोगिनो गम्यमानाः युक्तं यत्तस्यैव फलवतोऽङ्गं भवन्ति, न निष्फलाया देवतायाः। पेषणं त्विदं न यज्ञाङ्गम्, प्रकरणाभावात्, । वाक्ये च पूषमात्रश्रवणात् अतस्तत्स्वरूपप्रयुक्तम्, स च द्विदेवत्येऽपि विद्यत इति ।

तत्रापि पेषणं स्यादिति प्राप्ते अभिधीयते—

देवता निष्फला नैव पेषणस्य प्रयोजिका।
उपादानं च यागस्य भागशब्देन विद्यते ॥ ११६ ॥
मुख्यार्थासंभवाद्यागलिलक्षयिषयाऽत्र हि ।
श्रूयते भागशब्दोऽयं नानुपादानमस्त्यतः ॥ ११७ ॥

स च यागो द्विदेवत्यो द्वयव्यासक्तत्वान्नैकेन पूष्णा वा शक्यते व्यपदेष्टुम्, ऐन्द्राग्नाविव ग्रहपुरोडाशौ आग्नेयेन्द्रपीतशब्दाभ्याम्, यद्यपि चात्र तद्धितसमासानन्तर्गतत्वात्पूष्णो न वृत्त्यसामर्थ्यम्, तथापि भागशब्दार्थस्यैव द्विदेवत्ये पूषविशिष्टस्याभावान्न तत्र पेषणम्, एकदेवत्ये तु तदिति सिद्धम्।

पौष्णपेषणस्यैकदेवत्ये निवेशाधिकरणम् ।

इति शास्त्रदीपिकायां तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

# अथ तृतीयेऽध्याये चतुर्थः पादः ।

## निवीताधिकरणम् ॥ १ ॥

निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात् ॥ १ ॥ अपदेशो वाऽर्थस्य विद्यमानत्वात् ॥ २ ॥ विधिस्त्वपूर्वत्वात्स्यात् ॥ ३ ॥ स प्रायात्कर्मधर्मः स्यात् ॥ ४ ॥ वाक्यशेषत्वात् ॥ ५ ॥ तत्प्रकरणे यत्तत्संयुक्तमविप्रतिषेधात् ॥ ६ ॥ तत्प्रधाने वा तुल्यवत्प्रसंख्यानावितरस्य तदर्थत्वात् ॥ ७ ॥ अर्थवादो वा प्रकरणात् ॥ ८ ॥ विधिना चैकवाक्यत्वात् ॥ ९ ॥

दर्शपूर्णमासयोः श्रूयते—'निवीतं मनुष्याणाम्, प्राचीनावीतं पितृणाम्, उपवीतं देवानाम् 'उपव्ययते' इति। निवीतं मनुष्याणामिति किमयं विधिः? उतार्थवादोऽयमुपवीतविधे रिति ? अर्थवादत्वमौदुम्बराधिकरणन्यायेन सिद्धम्, यदा विधिः, तदा विचार्यते 'क्त्वाचिन्तेयम्'। तत्र षष्ठीश्रुत्या शुद्धमनुष्यधर्म इत्येकः पूर्वः पक्षः, श्रुतिप्रकरणयोरविरोधात् क्रतुयुक्तपुरुषधर्मो लोहितोष्णीषादिवदित्यपरः। प्रकरणाच्छुद्धक्रतुधर्मः प्रयाजादिवत्, मनुष्यग्रहणं तु कर्तुः सम्बन्धानुवाद इत्यन्यः, अनुवादस्यानर्थक्यात्प्राचीनावीतोपवीत वैषम्यात्प्रकरणाविरोधाय प्रकरणे यन्मनुष्यप्रधानं कर्मान्वाहार्यदानादि, तस्य धर्म इत्यपरः, प्राचीनावीतोपवीतयोः स्वतन्त्रपितृदेवताप्रधानकर्मविषयत्वात्तद्वैषम्यान्निवीतमपि स्वतन्त्रं यन्मनुष्यप्रधानमातिथ्यादि कर्म, तद्धर्म इत्यपरः। सर्वेषामेतेषामशोभनत्त्वात्पुरुषार्थत्वे च फलकल्पनाद्विध्येकवाक्यत्वात्प्रकरणाविरोधाच्चार्थवादत्वमेव पूर्वोक्तं न्याय इति क्त्वाचिन्तोद्घाटनम्।

इति प्रथमं निवीताधिकरणम्।



उपवीताधिकरणम् ॥ २ ॥

**उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात् ॥ १० ॥ न वा प्रकरणात्तस्य दर्शनम् ॥ ११ ॥**

दर्शपूर्णमासयोरुपवीतं श्रुतम् 'उपव्ययते' इति। तत्र संशयः—किमिदं सर्वदेवकर्माङ्गम्, उत दर्शपूर्णमासाङ्गमिति ? तत्र 'मृताग्निहोत्रे प्राचीनावीती दोहयेद्, यज्ञोपवीती हि देवेभ्यो दोहयती'ति सिद्धवद्दैवाग्निहोत्रे यज्ञोपवीतानुवादलिङ्गं न प्रकरणं बाधित्वा सर्वार्थत्वमवगम्यते । न च दर्शपूर्णमासस्यैवायमनुवादः, विप्रकृष्टत्वात्, देवेभ्य इति च बहुवचनानुपपत्तेः। वैकल्पिकेन्द्रमहेन्द्रदेवत्यत्वात्सान्नाय्यस्य । अग्निहोत्रे त्वग्निसूर्यप्रजापत्यभिप्रायमुपपन्नं बहुवचनमिति तद्गतस्यैवायमनुवादः, स च दर्शपूर्णमासप्रकरणोल्लङ्घनेन सर्वार्थत्वे घटत इति प्राप्ते—

ब्रूमः—प्रकरणाद्दर्शपूर्णमासाङ्गम्। अग्निहोत्रगतं तु लिङ्गं यथाप्राप्ति वर्णयितव्यमिति, सन्निकृष्टाभावाद्विप्रकृष्टमपेक्ष्य प्रवर्तते। बहुवचनं तु प्रकृतिविकृतिदेवताभिप्रायमित्यविरुद्धम। सोऽयं लिङ्गप्रकरणविरोधाविरोधविचारः।

इति द्वितीयमुपवीताधिकरणम्।

---

उपवीतस्य सविधित्वाधिकरणम् ॥ ३ ॥

**विधिर्वा स्यादपूर्वत्वात् ॥ १२ ॥**

'उपव्ययते' इत्येतदुदाहरणम्, किमसौ विधिः ? उतानुवादः, इति। 'नित्योदकी नित्ययज्ञोपवीती'ति स्मृतिप्राप्तत्वादनुवाद इति प्राप्ते—

विधिरपूर्वत्वादित्याह पुरुषार्थतया हि स्मृतितः प्राप्तिः, अयं तु क्रत्वर्थतया विधिः, अप्राप्तत्वात्।

अथवैवमधिकरणम। 'उपव्ययते' इति स्मृतिप्राप्तानुवादः। स्मृतिश्च अविशेषेण स्थितेति, सर्वकर्मार्थतया प्राप्तमनूद्यत इति पूर्वः पक्षः।

संयोगभेदाद्विधिः, अतश्च प्रकरणाद्दर्शपूर्णमासाङ्गमिति सिद्धान्तः।

एवं वा—मृताग्निहोत्रे श्रूयते 'यज्ञोपवीती हि देवेभ्यो दोहयतीति। किमयम् दैवाग्निहोत्राङ्गतया यज्ञोपवीतस्य विधिः ? उत दर्शपूर्णमासादिषु प्राप्तस्य

प्राचीनावीतस्तुत्यर्थोऽनुवाद इति? तत्र 'प्राचीनावीती दोहयती'ति अग्निहोत्रस्य मृतावस्थायां वचनात् 'यज्ञोपवीती हि देवेभ्यो दोहयती'ति तस्यैव जीवदवस्थायामुपवीतं गम्यते। तच्चाप्राप्तमिति, अनुवादसरूपस्यापि हिशब्दपरित्यागेन विधित्वं गम्यते। स्थितं तावदपर्यवसितम्॥

इति तृतीयं उपवीतस्य सविधित्वाधिकरणम्।

उदक्त्वाधिकरणम्॥ ४॥

उदक्त्वं चापूर्वत्वात्॥ १३॥ सतो वा लिङ्गदर्शनम्॥ १४॥

तत्रैव श्रूयते—ये पुरोदञ्चो दर्भाः, तान् दक्षिणाग्रान् स्तृणीयादि'ति। ये पुरोदञ्च इति किं विधिः? उतानुवाद इति। प्राप्त्यभावात् यच्छब्दोपबद्धस्यापि व्यवहितकल्पनया वाक्यभेदेन च विधित्वं गम्यते। ये पुरा—जीवदवस्थायाम् दर्भाः, ते उदञ्चः कार्या इत्येकं वाक्यम्, तान् दक्षिणाग्रानिति च मृतावस्थायाम् वाक्यान्तरमिति प्राप्ते—

ब्रूमः यच्छब्दोपबन्धात्, विध्यभावात्, विध्यन्तरैकवाक्यत्वाच्चानुवादत्वम्। अस्ति च प्राप्तिः 'अग्रवन्त्युदगग्राणी' ति स्मृतेः, न चेदमेव स्मृतेः मूलम्। अस्याग्निहोत्रविषयत्वात्, स्मृतेश्च अविशेषेण सर्वविषयत्वादवश्यं मूलान्तरं कल्पनीयम्। तस्मिंश्च कल्पिते, तत एवाग्निहोत्रेऽपि प्राप्तेः, अयमनुवादः—इति।

स्थितादुत्तरम्—'यज्ञोपवीती हि देवेभ्योदोहयती'ति हिशब्दोपबन्धात् प्राचीनावीतविधिशेषत्वादनुवादत्वं तावद् गम्यते। तद्यदि कथं चिदपि प्राप्तिर्न स्यात्। ततो भङ्क्त्वा रूपं विधित्वमध्यवसीयेत, अस्ति च दर्शपूर्णमासादिषु प्राप्तिरिति, तदपेक्षत्वात्, अनुवादोपपत्तौ न रूपभङ्गो युक्तः, तस्मादनुवादः।

इति चतुर्थमुदक्त्वाधिकरणम्।

उपरिधारणाधिकरणम्॥ ५॥

विधिस्तु धारणेऽपूर्वत्वात्॥ १५॥

मृताग्निहोत्रे एवं श्रूयते 'अधस्तात्समिधं धारयन्ननुद्रवेत्, उपरि हि देवेभ्यो धारयती'ति। किमयं जीवदग्निहोत्रे विधिः? उताऽनुवाद इति।

पूर्वेण न्यायेनानुवादः, कुतश्च प्राप्तिः ? आचारात्। सर्वमभ्यर्हितं द्रव्यम् प्रच्छाद्यैव देशान्तरं नेतव्यमित्याचारात्प्राप्तम्। अतोऽग्निहोत्रद्रव्यमपि गार्हपत्यादाहवनीयमानीयमानमाच्छादयितव्यम्, तत्केनेति समिद्धारणविधानम् तन्नियमादृष्टार्थं भवति—समिधा प्रच्छादयेदिति। सा चोपरिधार्यमाणा प्रच्छादनक्षमा, नान्यथेति प्राप्तमुपरिधारणमनूद्यत इति प्राप्ते—

ब्रूमः विधिरपूर्वत्वात्, न ह्याचारादुपरिप्राप्तिः, आच्छादनासमर्थत्वात् 'स्रुग्दण्डे समिधमुपसंगृह्य' ति च श्रवणाद्दण्डप्रदेशेऽसौ धारयितव्येति। कुतोऽनया हविषः प्रच्छादनम्, अतोऽप्राप्तत्वात्, हिशब्दपरित्यागेन विधिः, अनुवादानुपपत्त्या हि विधिकल्पनम्।

इति पञ्चममुपरिधारणाधिकरणम्।

---

## दिग्विभागाधिकरणम् ॥ ६ ॥

### दिग्विभागश्च तद्वत्सम्बन्धस्यार्थहेतुत्वात् ॥ १६ ॥

'ज्योतिष्टोमे प्राचीनवंशं करोती' ति विधाय, श्रूयते 'प्राचीं देवा व्यभजन्त, दक्षिणां पितरः, प्रतीचीं मनुष्याः, उदीचीं रुद्राः' इति। तत्र प्रतीचीं मनुष्याः' इत्यत्र निवीताधिकरणवत्सर्वे पक्षा रचयितव्याः। का पुनर्विशेषाशङ्का ? सोच्यते 'निवीतं मनुष्याणामि'त्यत्र न स्तुतिरप्याञ्जस्येन गम्यत इति, दूरापास्तम् विधित्वम्। इह व्यभजन्तेति पुराकल्पेन पूर्वपुरुषाचरितत्वेन प्रशंसा गम्यते। तया च सुकल्पो विधिरिति। अतो विधित्वं युक्तमितीमामाशङ्कां निवर्तयितुमिदमधिकरणम्।

इति षष्टं दिग्विभागाधिकरणम्।

---

## परुषि दिताधिकरणम् ॥ ७ ॥

### परुषि दित-पूर्ण-घृत-विदग्धश्च तद्वत् ॥ १७ ॥

'यत्पुरुषि दितम्, तद्देवानाम्, यदन्तरा, तन्मनुष्याणामि'ति। तथा 'यत्पूर्णम् तन्मनुष्याणामि'ति, घृतं देवानाम्, मस्तु पितृणाम्, निष्पक्वं मनुष्याणामि''त्यत्र मनुष्यसंयुक्ता उदाहरणम्। तथा 'यो विदग्धः स नैर्ऋतः, योऽश्रृतः, स रौद्रः' इति।

अत्रापि विध्यर्थवादादिपक्षा निवीतवदेव सर्वे योज्याः। विशेषाशङ्का त्वेषा विधित्वेऽपि न फलकल्पनम्, लौकिकानामेव कृप्तफलानां लवनमानाभ्यञ्जनक्रियाणा'मन्तरा पूर्णंनिष्पक्कमि'ति विशेषनियममात्रविधानान्नियमादृष्टमात्रम्। न निवीतवदत्यन्ताप्राप्तविधानेनादृष्टक्रियाफलकल्पना इति। 'यो विदग्धः' इत्यपि प्रसिद्धयोरेव नैर्ऋत-रौद्रयोर्विदग्धत्वाशृतत्वगुणमात्रविधानाल्लाघवम्। अतः विधिरित्येतां शङ्कां निवर्तयितुमतिदेशः।

इति सप्तमं परुषि दिताधिकरणम्।

कर्त्रधिकरणम् ॥ ८ ॥

अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात् ॥१८॥ विधिर्वा संयोगान्तरात् ॥ १९ ॥

क्रतौ पुरुषे चार्थतः प्रसक्तं पदार्थं प्रतिषेधन्तः क्रतुप्रकरणगताः प्रतिषेधा इहोदाहरणम्। दर्शपूर्णमासयोर्हि 'नानृतं वदेदि'ति हि श्रूयते। तत्र संशयः— किमयं पुरुषधर्मो विधिः? उत क्रतुयुक्तपुरुषधर्मोऽनुवादः? किं वा शुद्धक्रतुधर्मोऽनुवादः? अथवा शुद्धक्रतुधर्मो विधिरिति। तदर्थञ्च प्रतिषिध्यमाना-क्रिया विचारयितव्या किमर्था सती प्रतिषिध्यते किं क्रत्वर्था? किं वा पुरुषार्थेयमिति। ततोऽपि पुनर्विचारतव्यं किमाख्यातं कर्तारमभिधत्ते, न वेति।

तत्र—प्रतीतेः स्मरणात्कर्तृविशेषैरपृथक्श्रुतेः।
कर्तृवाचित्वमाख्यातप्रत्ययस्यावसीयते॥ ११६ ॥

वदेदित्याख्यातात्कर्ताऽवगम्यते, यश्च यतोऽवगम्यते, स तस्यार्थः, तथा 'कर्तरि कृदित्यधिकृत्य' लः कर्मणि चे''ति चकारेण कर्तृवाचित्वं स्मृतम्। पचति देवदत्त इति च कर्तृविशेषवचनैर्देवदत्तादिपदैः सामानाधिकरण्यात् कर्तृवाचिता, स च प्रत्ययार्थत्वात्प्रकृत्यर्थं वदनं प्रति प्रधानभूत इति, वदनम् तावत्पुरुषार्थम। यदर्थं च वदनम्, तदर्थः प्रतिषेधोऽपि न्याय्यः। कुत एतत्? प्रतिषेधस्यानिष्टबोधकत्वात् इष्टविपरीतञ्चानिष्टम्. यत् यदा यस्येष्टम्, तद्विपरीतम। तदा तस्यानिष्टं भवति, तद्यदि प्रतिषेध्यभूतां वदनक्रियामनुवदन्वदेदिति शब्दः पुरुषार्थतया पुरुषेष्टसाधनतया तामुपस्थापयेत, ततः प्रतिषेधोऽपीष्टविपरीत-साधनतां बोधयन्ननुवादावस्थाप्रतिपन्नस्यैवेष्टस्य विपर्ययं फलत्वेनावलम्बते,

याजमानम्, तद्बलात्कर्मणामपि स एव कर्ता स्यात्। न। प्रयोजकत्वेनापि-कर्तृत्वसम्भवात्। अतोऽध्वर्युणैव क्रियमाणानां द्वन्द्वतां यजमानोऽध्वर्युः स्मारयिष्यतीत्यदोषः।

इति नवमं द्वादशद्वंद्वानामाध्वर्यवत्वाधिकरणम्।

---

होतुराध्वर्यवकरणानुष्ठातृत्वाधिकरणम् ॥ १० ॥

विप्रतिषेधे करणः; समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् ॥ २१ ॥

ज्योतिष्टोमेऽग्नीषोमीये पशौ युगपदध्वर्युणा, होत्रा च प्रयुक्तौ परिव्याण-करण·क्रियमाणानुवादिनौ 'परिवीरसि' 'युवा सुवासाः' इति मन्त्रौ चोदक-परम्परया कुण्डपायिनामयनसत्रे प्राप्तौ। तत्र ऋत्विक्समासः सम्नातः-यो होता, सोऽध्वर्युरिति। तत्रैको होता तौ प्रयोक्तुमशक्तः किं हौत्रं ब्रूयात्, उताध्वर्यवमिति संशये, अनियमः। अथवा होतुः सतोऽध्वर्युत्वविधानादपरित्यक्तस्वधर्मो होताऽध्वर्युधर्मैः सम्बन्धुमर्हति परिधिरिव स्वधर्माविरोधेन यूपधर्मैरिति। क्रियमाणानुवादिनमेव वदेत्। एवं प्राप्ते —

ब्रूमः — प्रत्यक्षवचनात्प्राप्तिर्होतुराध्वर्यवेषु हि।
हौत्रेषु चोदकाद् वाक्यं चोदकाद्बलवत्तरम् ॥ २१२ ॥

'यो होता. सोऽध्वर्यु रि'ति मुख्यत्वाच्छ्रुतिवृत्तो होता जघन्याध्वर्युलक्षितेषु कार्येषु प्रत्यक्षेण वाक्येन विधीयते, हौत्रेषु तु चोदकतः प्राप्तिरिति वाक्यबला-दाध्वर्यवमेव वदेत्, 'परिधौ पशुं नियुञ्जीते'ति नियोजनमात्रे परिधिर्वचनेन विधीयते, न यूपधर्मेष्विति वैषम्यम्।

### प्राभाकरमतनिरासः

यस्तु सत्रेषु होत्रादयो न सन्ति, तदभावाच्च न हौत्रादिषु चोदकतः प्राप्तिरित्याह। तस्य 'हौत्रेण होतुश्चोदकात्समवायः' इति भाष्यविरोधः, सत्रन्तु कुण्डपायिनामयनम्। वक्ष्यति हि 'सत्रे चोपायचोदनादि'ति। किञ्चैवं 'यो होता, सोऽध्वर्यु रि'ति वचनेन किं विधीयते ? न हि होताऽस्ति, योऽध्वर्युकार्ये विधीयते। अथ हौत्रमाध्वर्यवञ्चैकः कर्ता कुर्यादित्येतावद्विधीयते। तदोभयोरपि

प्रत्यक्षवचनादिष्टत्वेन तुल्यबलत्वादाध्वर्यवस्य बलीयस्त्वं न स्यादित्यधिकरणविरोधः। 'अतिदिष्टं प्रत्यक्षविधानसिद्धमिं' नि.भा. ४ पृ. ९४३ ति च निबन्धनग्रन्थतो विरुध्यत इत्यास्तां तावत्।

इति दशमं होतुराध्वर्यवकरणमन्त्रानुष्ठातृत्वाधिकरणम्।

---

प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वाधिकरणम् ॥ ११ ॥

प्रैषेषु च पराधिकारात् ॥ २२ ॥

'प्रोक्षणीरासादय, अग्नीदग्नीन् विहरे' त्यादयः प्रैषाः, प्रोक्षण्यासादनाग्निविहरणादयः प्रैषार्थाः किमध्वर्युणैकेन कर्तव्याः? उतान्य प्रेषितुः तदर्थानां कर्तेति संशये, समाख्यानादुभयत्राऽध्वर्युः, प्राप्तकालतायाञ्च लोड् भविष्यति, न प्रैषे समाख्याबलादिति प्राप्ते—

ब्रूमः—मध्यमपुरुषस्य, अग्नीदि'ति च संबोधनस्य चेतनान्तरविषयत्वादृतेऽनुपपत्तेः, प्राप्तकालताऽपि पुरुषान्तरं प्रति वक्तव्या, तद्वरं प्रैष एवायम्, प्रैषसमाख्यानात्। स चात्मनि न सम्भवतीति, लिङ्गेन समाख्यां बाधित्वा, अन्यः प्रेषिता,अन्यश्च प्रैषार्थकर्ता।

इत्येकादशं प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वाधिकरणम्।

---

प्रैषप्रैषार्थयोयथाक्र ममाध्वर्यवाग्नीध्रताधिकरणम् ॥ १२ ॥

अध्वर्युस्तु दर्शनात् ॥ २३ ॥ गौणो वाकर्मसामान्यात् ॥ २४ ॥

प्रेषितुरन्यः प्रैषार्थकर्तेति स्थितम्, स किमध्वर्युः प्रैषार्थकर्ता? अग्नीच्च प्रेषिता उत विपरीतमिति संशये, अर्थानां प्रधानभूतत्वाद्, भूयस्त्वाच्च न तत्राध्वर्युबाधो युक्तः। प्रैषस्य त्वेकत्वात् गुणत्वाच्चाध्वर्युं बाधित्वा, अग्नीत्कर्ता भवत्विति प्राप्ते—

उच्यते अध्वर्युः प्रेषिता स्यात्, एवं हि तेनैव प्रयोजकत्वेन प्रैषार्था अपि कृता भवन्तीति, न क्वचित्समाख्या बाधिता स्यात्। इतरथा प्रैषेऽत्यन्त-

बाधिता स्यात्, न चाबाधसम्भवे तद्युक्तम्। अतोऽध्वर्युः प्रैषम्, अग्नीत् प्रैषार्थान् कुर्यादिति।

इति द्वादशं प्रैषमन्त्राणामाध्वर्यवत्वाधिकरणम्।

---

करणमन्त्रफलस्य याजमानाधिकरणम्॥ १३॥

ऋत्विक्फलं करणेष्वर्थवत्त्वात्॥ २५॥ स्वामिनो वा तदर्थत्वात्॥ २६॥ लिङ्गदर्शनाच्च॥ २७॥

अकरणभूताः प्रत्यगाशिषो मन्त्रा लिङ्गाद्याजमाना इत्युक्तम्। ये तु करणमन्त्राः 'ममाग्ने वर्चोविहवेष्वि' त्यादयः, ते प्रत्यगाशिषोऽपि क्रियाकर्त्राध्वर्युणैव वक्तव्याः। न त्वन्येनोच्यमाना अध्वर्योः क्रियां प्रकाशयन्ति। न च मन्त्रवशेन प्रधानभूतायां क्रियायामध्वर्युबाधो युक्तः। तेन मन्त्रस्तावदाध्वर्यवा एव तद्गतञ्च वर्चःप्रभृति सूक्तवाकगतायुरादिवत्फलमिति स्थिते, किम् तत्फलमध्वर्योः, उत यजमानस्येति। ममेति लिङ्गादध्वर्योरिति प्राप्ते—

प्रधानवाक्यागतात्मनेपदश्रुत्या साङ्गप्रधानभावनाविषयाङ्गफलभावनानामपि यजमानगामित्वं युक्तमिति, तद्विरुद्धं लिङ्गं नर्त्विग्गामित्वं बोधयितुमलम्। अतः ममेति यजमानव्यतिरेकजनिता षष्ठी—मम यो यजमानः, तस्य वर्च इति, यजमान एव वोपचारान्ममेति निर्दिश्यते। अतस्तस्यैव फलम्।

इति त्रयोदशं करणमन्त्रफलस्य कमार्थफलस्यार्त्विग्धर्मताधिकरणम्।

---

करणमन्त्रेषु कर्मार्थफलस्य ऋत्विग्धर्मताधिकरणम्॥ १४॥

कर्मार्थं तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वं स्यात्॥ २८॥

यत्तु 'मा मा सन्ताप्तमि' तै० सं० १-१२-१—त्यसन्तापनादिकं फलम् कर्मानुष्ठानौपयिकं यजमानस्यात्मीयकर्माविघातार्थमृत्विग्गामित्वेनैवेष्टमिति, आत्मनेपदानुगुण्यादृत्विग्गामीति युक्तम्।

इति चतुर्दशं करणमन्त्राणांकर्मार्थफलस्यार्त्विग्धर्मताधिकरणम्।

---

भद्रमित्यस्योभयगामिताधिकरणम् ॥ १५ ॥

व्यपदेशाच्च ॥ २९ ॥

[1]यत्र व्यपदेशो भवति 'तन्नौः सहे' ति। तत्रापि द्विवचनस्यानुपपत्तेः ऋत्विग्गामित्वम्।

इति पञ्चदशं भद्रमित्यस्योभयगामिताधिकरणम्।

—:०:—

द्रव्यसंस्कारस्याङ्गप्रधानार्थताधिकरणम् ॥ १६ ॥

द्रव्यसंस्कारः प्रकरणाविशेषात्सर्वकर्मणाम् ॥ ३० ॥

बर्हिर्धर्माणामङ्गप्रधानार्थत्वं पूर्वमुक्तमुत्तरविवक्षया प्राप्यते। अथ वा पूर्वपक्षसूत्रमिदम्। तेन प्राकृतकार्यसाधनार्था बर्हिर्धर्माः, तस्माद्विकृतावपि यूपावटास्तरणबर्हिषि कर्तव्या इति प्राप्ते—

सिद्धान्तसूत्रम। प्रकृतौ यद्बर्हिः कार्यम्, तत्प्रयुक्ता बर्हिर्धर्माः कार्यद्वारेण विकृतिं गच्छन्ति, न स्वरूपतः। तेन प्राकृतकार्यसाधना एव धर्मा विकृतौ कर्तव्याः, न च यूपावटस्तरणं प्राकृतं बर्हिःकार्यम्। अतो न तत्साधने बर्हिर्धर्माः।

इति षोडशं द्रव्यसंस्कारस्याऽङ्गप्रधानार्थताधिकरणम्।



विधृतिपवित्रयोः परिभोजनीयबर्हिषा कर्तव्यताधिकरणम् ॥ १७ ॥

निर्देशात्तु विकृतावपूर्वस्यानधिकारः ॥ ३१ ॥ विरोधे च श्रुतिविशेषादव्यक्तशेषे ॥ ३२ ॥

इदानीं प्रकृतावपि नातीव सर्वार्थतेत्युच्यते। दर्शपूर्णमासयोर्विधृत्यर्थम्, पवित्रार्थं च यद्बर्हिः, तदपि धर्मवत्स्यात्। अविशेषादिति प्राप्ते—

ब्रूमः-धर्मवतः कृत्स्नस्य बर्हिषो यथाल्लूनस्य संनद्धस्यासादितस्यास्तरणे विनियोगान्नान्यत्र विनियोगः संभवतीति, बलादसंस्कृतादेव पवित्रादि कार्यम्।

इति सप्तदशं विधृतिपवित्रयोः परिभोजनीयबर्हिषा कर्तव्यताधिकरणम्।

—:०:—

१—किमत्रेति, भद्रमिति स प्राह, अध्वर्युराह नौ सह' इति मन्त्रः।

प्राकृतपुरोडाशादीनां शेषनिधानाधिकरणम् ॥ १८ ॥

अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥ ३३ ॥

ज्योतिष्टोमाधिकारे 'पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधाती' आप० श्रौ० १२-२-५६ ति आमिक्षामैत्रावरुणस्य धाना आश्विनस्य पात्रे इत्यादि किं सन्निहितात्सवनीयपुरोडाशादपनीय शकलः पात्रे निधातव्यः? उत पुरोडाशान्तरमुत्पाद्य तच्छकलस्य निधानमिति विचारे, पूर्ववद्यागार्थस्य निधाने विनियोगासम्भवादन्योत्पादनम्।

स्यादेवं यद्यन्यत्र विनियोगः स्यात्, यागार्थस्यैव तु शकलस्य संस्कारोऽयम्, द्वितीयानिर्देशात्। अतः प्रकृतैकदेशस्यायमपनयः। एवं पयस्यादिष्वपि। पयस्याद्यर्थं चेदमधिकरणम्। पुरोडाशशकलनिधानविधेरेकदेशद्रव्यत्वेनाप्रयोजकत्वस्य सिद्धत्वात्।

इत्यष्टादशं प्राकृतपुरोडाशादीनां निधानाधिकरणम्।



काम्येष्टिषु उपांशुत्वधर्मस्य प्रधानार्थताधिकरणम् ॥ १९ ॥

विकृतौ सर्वार्थः शेषः प्रकृतिवत् ॥ ३४ ॥ मुख्यार्थो वाऽङ्गस्य अचोदितत्वात् ॥ ३५ ॥

'यज्ञाथर्वणं वै काम्या इष्टयः, ता उपांशु कर्तव्याः' इति श्रुतमुपांशुत्वम्-किमङ्गप्रधानार्थम्, उत प्रधानार्थमिति संशयः।

तत्र—मन्त्रोच्चारणसद्भावात् द्वयोरङ्गप्रधानयोः।
तद्विशेष उपांशुत्वं बर्हिस्तद्धर्मवद् द्वयोः ॥ २१३ ॥
उच्यते बर्हिषां धर्मा वाक्यादङ्गप्रधानगाः।
उपांशुता च वाक्येन काम्यानामेव चोच्यते ॥ २१४ ॥

कामप्रयोजनानि प्रधानान्येव काम्यशब्देनोच्यन्ते इति, तेषामेवोपांशुत्वम्।

ननु यथा प्रवर्ग्यशब्दसंयुक्तस्यौच्चैद्ष्टवस्यावभृथशब्दसंयुक्तानामप्यपामङ्गप्रधानार्थतेष्यते, तथोपांशुत्वमपि स्यात्। विषम उपन्यासः। तत्र 'ह्युच्चैः-

प्रवर्ग्येण प्रचरन्ति, अप्स्ववभृथेन चरन्ती'ति तृतीयासंयोगात्प्रवर्ग्यावभृथकरणिकायां भावनायामुच्चैष्ट्वमापश्च विधीयन्ते, तदन्तर्गतानि चाङ्गानि युक्तम्-यदुच्चैष्ट्वमापश्चाङ्गं लभन्ते। अत्र तु 'काम्या उपांशु कर्तव्याः' इति कर्तव्यत्वनिर्देशात्प्रधानक्रियायामेवोपांशुत्वं विहितम्, न तत्करणिकायां फलक्रियायामिति विशेषः।

इत्येकोनविंशमुपांशुत्वधर्मस्य प्रधानार्थताधिकरणम्।

---

श्येनाङ्गानां नवनीताज्याधिकरणम् ॥ २० ॥

सन्निधानविशेषादसम्भवे तदङ्गानाम् ॥ ३६ ॥ आधानेऽपि तथेति चेत् ॥ ३७ ॥ नाऽप्रकरणत्वादङ्गस्यातन्निमित्तत्वात् ॥ ३८ ॥

श्येने श्रूयते 'दृतिनवनीतमाज्यं भवती'ति। तत् किं प्रधानार्थम्, उताङ्गार्थमिति-संशयः। तत्राज्यस्याप्रकृतत्वान्न तदनुवादेन दृतिनवनीतत्वं विधीयते, किन्तु दृतिनवनीतत्वविशिष्टमाज्यं विहितम्। प्रकरणात्प्रधानार्थं सोमप्रत्याम्नानेनेति प्राप्ते—

उच्यते—विशिष्टविधिगौरवादुपदेशतोऽप्रकृतस्याप्याज्यस्यातिदेशतः प्राप्तिसम्भवात्। तदनुवादेन दृतिनवनीतत्वं विधीयते—यदाज्यन्तद्दृतौ नवनीतम् प्रकृतिर्यस्य तत् [गुणः] स्यात्। अङ्गेषु चाज्यप्राप्तिरिति, तत्रैव दृतिनवनीतत्वम्।

इति विंशं श्येनांगानां नवनीताज्याधिकरणम्

---

सर्वेषामेव श्येनाङ्गानां नवनीताज्याधिकरणम् ॥ २१ ॥

तत्काले वा लिङ्गदर्शनात् ॥ ३९ ॥ सर्वेषां वाऽविशेषात् ॥ ४० ॥ न्ययोक्ते लिङ्गदर्शनम् ॥ ४१ ॥

स्थितमङ्गेषु दृतिनवनीतमिति। तत् किं सुत्याकालेष्वेवाङ्गेषु स्यात्? उत सर्वेष्विति संशये, सामान्यतो दृष्टात् सुत्याकालानां पशुसाहित्यं हि 'सह पशूनालभते' इति श्येनाङ्गत्वेन विहितं सुत्याकालं दृष्टमग्नीषोमीयानुबन्ध्यस्थानयोः पुरोडाशामिक्षाभ्यामनुग्रहवचनेन पशुशून्यत्वावगमात्तद्वद् दृतिनवनीतमपि श्येनवैशेषिकाङ्गत्वात्सुत्याकालमेव भवितुमर्हति—

मैवम्—न हि वाक्येन सर्वार्थं गम्यमानमनुमानेन व्यावर्तयितुं शक्यम्, अप्रयोजकश्च हेतुः। न हि पशुसाहित्यस्यैतदर्थत्वात्सुत्याकालता, किं तर्हि न्यायान्तरात् साहित्यमवश्यं कस्य चिदेकस्य स्थाने कर्तव्यम्, तत् प्रधानप्रत्यासत्तिलिप्सया सवनीयस्थाने कृतम्। न त्विहैवं किं चित्कारणमस्तीति, वाक्याविशेषात्सर्वार्थता।

इत्येकविंशं श्येनांगानां नवनीताज्यत्वाधिकरणम्।

---

## सवनीयानां मांसमयताधिकरणम् ॥ २२ ॥

**मांसं तु सवनीयानां चोदनाविशेषात् ॥ ४२ ॥ भक्तिरसन्निधावन्याय्येति चेत् ॥ ४३ ॥ स्यात्प्रकृतिलिङ्गाद्वैराजवत् ॥ ४४ ॥**

शाक्त्यानामयनं नाम सत्रं षट्त्रिंशदाब्दिकम्। तत्रे तच्छ्रूयते वाक्यम्-'संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स यान्मृगान्हन्ति, तेषां तरसाः सवनीयाः पुरोडाशा भवन्ती'ति! किमिदं तरसं सर्वपुरोडाशानाम्, उत सवनीयानामिति संशयः।

तत्र—न ह्युद्देश्यः पुरोडाशः सवनीयेन शक्यते।
विशेष्टुं तेन सर्वार्थं तरसं नवनीतवत् ॥ २१५ ॥

सवनीयपदन्त्ववयुत्याऽनुवादः। सृष्टिशब्दवद्वा लिङ्गसमवायेन सवनीयासवनीयेषु वर्तत इति प्राप्ते—

अभिधीयते—पुरोडाशं समुद्दिश्य तरसं चोद्यते यदि।
ततः स्यात्सर्वगामित्वमुद्देश्यस्याविशेषणात् ॥ २१६ ॥

उद्दिश्य सवनीयांस्तु मांसमत्र विधीयते।
पुरोडाशापुरोडाशसमवाये तु लक्षणा ॥ २१७ ॥

पुरोडाशपदे तद्धि जघन्यां लक्षणां व्रजेत्।
प्रकृतौ चास्य दृष्टा सा पुरोडाशानलंकुरु ॥ २१८ ॥

सवनीयपदं मुख्यं न मुख्यार्थं परित्यजेत्।
दृष्टा च प्रकृतौ नैव सवनीयस्य लक्षणा ॥ २१९ ॥

अन्यवायाच्च तेनैव युक्ता तरससङ्गतिः ।
तद्व्यवेतः पुरोडाश इति तेन न सङ्गतिः ॥ २२० ॥

सवनीयपदं खलु सन्निहितं तदतीत्य पदान्तरमेति न हि ।
तरसं नवनीतविधर्मतया सवनीयहविर्विकरोति ततः ॥ २२१ ॥

उक्तश्शेषस्तद्विनियोगस्यविधौमानं श्रुत्याद्यत्रविशेषेपरमानम्, पूर्वस्मात्स्याद्दुर्बलमत्रास्तिविरोधो नात्रेत्येवं शेषकथोक्ता संपूर्णा ॥ २२२ ॥

इति द्वाविंशं सवनीयहविषां मांसमयताधिकरणम् ।

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां तृतीयाध्यायस्याष्टमः पादः समाप्त ।

इति तृतीयोऽध्यायश्च समाप्तः ॥



# अथ चतुर्थाऽध्याये प्रथमः पादः ।

क्रत्वर्थप्रतिज्ञाधिकरणम् ॥ १ ॥

अथातः क्रत्वर्थ–पुरुषार्थयोर्जिज्ञासा ॥ १ ॥

प्रसिद्धे शेषशेषित्वे प्रयुक्तिरधुनोच्यते ।
शेषिणैव च शेषस्य प्रयुक्तिरिति हेतुता ॥ १ ॥

यद्यपि न सर्वः शेषी शेषस्य प्रयोजकः, तुषोपवापादेः कपालादिप्रयोजकत्वाभावात्, तथाऽपि शेषिण एव तावच्छेषाणां प्रयोक्तार इति, भवति शेषलक्षणस्य प्रयुक्तिलक्षणं प्रति हेतुतेति, ततः परमारम्भः ।

ननु विधिरेव प्रयोजकः, सर्वश्च विधिः स्वविषयस्य प्रयोजक एव, अप्रयोजकस्य विधित्वानुपपत्तेः, तदेकरसत्वाद्विधेः । अथ प्रधानविधिरेव प्रयोजकः, नाङ्गविधयः, अन्यतः सिद्धत्वात् । तुल्यमिदमामिक्षाविधेर्वाजिनविधेश्च, द्वयोरप्यङ्गविधित्वात् । ततः किमत्र चिन्त्यते ? उच्यते–सत्यम्, विधिरेव प्रयोजकः, प्रयोजनाय तु कस्मै किमनुष्ठापयति, कस्मै न, किं दध्यायनयविधिः

अमिक्षार्थतयैवाऽनयनमनुष्ठापयति ? उत वाजिनार्थतयाऽपि । एवं कपालादिष्वपि द्रष्टव्यम् । यदर्थञ्चानुष्ठापयति, तत्प्रयोजकमित्युच्यते । यत्तु साध्यमपि साधनमन्यतःसिद्धमुपजीवति, न स्वयमनुष्ठापयति, तदप्रयोजकमुच्यते ।

यद्वा—विधिः क्रियायामेव साक्षात्प्रयोजकः, विशेषणेषु त्वर्थात् । तद्यत्र परप्रयुक्तमेव विशेषणत्वेनाङ्गीक्रियते, यथैकहायनी क्रयप्रयुक्ता पदग्रहणस्य, पुरोडाशकापालञ्च पुरोडाशप्रयुक्तं तुषोपवापस्य, तत्र तुषोपवापादिविधेः परप्रयुक्तविशेषणोपजीवित्वात्तद्विषया प्रयुक्तिशक्तिर्लुप्यते । 'कपालेषु श्रपयति, एकहायन्या क्रीणाती'त्यादयस्तु विधयः स्वतन्त्रकपालैकहायन्यादिग्राहित्वात् भवन्ति प्रयोजकाः, तत्र किञ्चस्य प्रयोजकः ? किञ्चस्य नेति युक्ता चिन्ता । सर्वस्मिंश्चाध्याये क्रत्वर्थ-पुरुषार्थादिविचारद्वारेण प्रयुक्तिरेव चिन्त्यते । तदेतत्प्रतिज्ञासूत्रम् ।

उपादानप्रमाणस्य निरूपणमिति प्राभाकरमतनिरासेन भाष्याभिप्रायवर्णनम् ।

यत्पुनर्भाष्ये श्रुत्यादिकीर्तनम्, तेनान्यत् शेषप्रमाणं तृतीयस्याविषयभूतमस्तीति गम्यते । अन्यथा हि नाना कर्मलक्षणं वृत्तमितिवत्, शेषलक्षणं वृत्तमित्येवाऽवक्ष्यत् । अथ तत्र द्वितीयेऽध्याय इत्यनुक्त्वा इह तृतीयेऽध्याय इति किमर्थमुक्तम् ? वक्तृविवक्षावैचित्र्यात् । इदमेव श्रुत्यादिकीर्तनेऽप्युत्तरम् ।

इति प्रथमं क्रत्वर्थप्रतिज्ञाधिकरणम् ।

क्रत्वर्थ-पुरुषार्थलक्षणाधिकरणम् ॥ २ ॥

यस्मिन्प्रीतिः पुरुषस्य, तस्य लिप्साऽर्थलक्षणाविभक्तत्वात् ॥ २॥

वक्ष्यमाणयोः क्रत्वर्थ—पुरुषार्थयोर्लक्षणार्थमिदं सूत्रम् । यत् भावनाकथम्भावपूरणार्थं विधीयते, तत् क्रत्वर्थम् । अन्यत्करणम्, फलञ्च पुरुषार्थम् ।

द्वितीयं [ लिप्साधिकरणम् ] वर्णकम्

अथवा फलांशस्य किं विधिः प्रयोजकः ? नेति चिन्त्यते । विधेयभावनाविशेषणत्वात्करणादिवत्फलस्यापि विधेयत्वशङ्का, रागतस्तु प्रवृत्तिसिद्धेरविधेयत्वम् ।

इति द्वितीयं वर्णकम् ।

### तृतीयं [ गोदोहनाधिकरणम् ] वर्णकम्।

एवं वा—दर्शपूर्णमासयोः श्रूयते—'गोदोहनेन पशुकामस्य प्रणयेदि'ति। तत्र संशयः—किं गोदोहनं क्रत्वर्थमपि? उत पुरुषार्थमेवेति। तत्र षष्ठीश्रुत्या पुरुषार्थम्, क्रतूपकरणत्वाच्च क्रत्वर्थमित्युभयार्थत्वम्।

नैवम्। उपकारलक्षणशेषत्वानिराकरणात्। अन्यार्थस्यापि क्रतूपकारकत्वाविरोधात्। श्रुत्या पुरुषार्थमेवेवि फलप्रयुक्तमेवैतत्, न क्रतुप्रयुक्तम्।

इति तृतीयं वर्णकम्।

—:०:—

### चतुर्थं [ द्रव्यार्जनाधिकरणम् ] वर्णकम्

एवं वा—किमिहोदाहरणम्?। द्रव्यार्जनमेव। द्रव्यस्य प्राप्तिरित्यर्थः। येयं पुरुषस्य तेन तेन नियमेन द्रव्यप्राप्तिः—ब्राह्मणस्य प्रतिग्रहादिना, राजन्यस्य जयादिना, वैश्यस्य कृष्यादिना, शूद्रस्य सेवादिना, सर्वेषां दायादिनेति। सैव चिन्त्यते—किं क्रत्वर्था पुरुषस्य द्रव्यप्राप्तिः, उत पुरुषार्थेति।

तत्र—नियमस्यार्थवत्त्वाय क्रत्वर्थो द्रव्यसङ्ग्रहः।
पुरुषार्थत्वपक्षे हि नियमोऽनर्थको भवेत्॥ २॥

प्रतिग्रहाद्युपायनियमस्तावद् द्रव्यार्जनोद्देशेन ब्राह्मणादीनां विधीयमानस्तदङ्गं विज्ञायते। स्वरूपे, कार्ये वा उपयोगश्चाङ्गम्भवति, सोऽयन्नियमो न तावदर्जनस्वरूपे उपयुज्यते, अन्तरेणापि नियमम्, अर्जनसम्भवात्।अतः कार्योपयोगी, पुरुषार्थत्वे च दृष्टमेव प्रयोजनं क्षुत्प्रतिघातादि द्रव्यार्जनस्य कार्यं स्यात्। तदपि च विनापि नियमेन निष्पद्यत इति, तादर्थ्ये सति अर्जनस्य नियमस्तदङ्गं न स्यात्। अतो नियमविध्यनुपपत्त्या नूनं द्रव्यप्राप्तिः क्रत्वर्थेत्यनुमीयते। तथा सति क्रत्वपूर्वस्यादृष्टत्वान्नियतोपायमेवार्जनं तन्निष्पादयतीति कल्पनात्, नानर्थक्यं नियमविधेः।

न चाऽर्जनविशेषोद्देशेनायं नियमविधिः, विशेषाश्रवणात्, प्रकरणाद्यभावाच्च। तस्मादर्जनमात्रोद्देशेन विधीयमानो नियमस्तन्मात्रस्य क्रत्वर्थत्वङ्गमयति। तस्मात्सर्वमेव पुरुषस्य स्वं क्रत्वर्थम्। एवञ्च क्रत्वर्थैकान्तहिरण्यादिसम्बन्धात् क्षामवत्यादीनां खादिरवत् क्रत्वर्थत्वात्, फलं न कल्पनीयम्भवति। तस्मात् सर्वं द्रव्यं क्रत्वर्थम्, तथा च स्मृतिः—'यज्ञार्थं पशवः सृष्टाः' इति, एवं प्राप्ते—

भ्रमः – पुरुषार्थत्वमेतस्य प्रत्यक्षेणाऽवगम्यते ।
क्रत्वर्थताऽनुमानेन प्रत्यक्षात्तच्च दुर्बलम् ॥ ३ ॥

रागप्राप्तं तावदर्जनम्, न शास्त्रीयम्। रागतश्च पुरुषार्थतया प्राप्तिः। प्रत्यक्षेण चार्जितं द्रव्यं पुरुषं प्रीणयत् पुरुषार्थं विज्ञायते, न तदनुमानेन क्रत्वेकशेषतया शक्यं विज्ञातुम्। तस्मात्पुरुषार्थं द्रव्यम्। क्रतुरपि पुरुषकार्याणामन्यतम इति, कार्यान्तर इव क्रतावप्युपयुज्यत इति। एतावान्विशेषः। न तस्यैवाङ्गम्, तथा च सति जीवनलोपात्क्रतुरेव न संवर्तेत, द्रव्यप्राप्तिमात्रादेव च क्रतूपक्रमात् 'अप वा एष सुवर्गात् लोकादि'त्यनुपक्रमदर्शनं नोपपद्यते। तस्मात्पुरुषार्थम्। एवञ्च दृष्टार्थम्भवति, नियमस्तु दृष्टकार्याभावात्, काममदृष्टार्थः स्यात्। अदृष्टमपि पुरुषार्थार्जनविषयत्वान्नियमस्य, तदङ्गमेव कल्प्यते, तेनासावुपायान्तरेणार्जयन् प्रत्यवैतीति कल्प्यते। तस्मात्पुरुषार्थो द्रव्यपरिग्रहः।

अनियम इति प्राभाकरीयं व्याख्यानं भाष्यविरुद्धमिति वर्णनम्।

केचित्तु नियम एवात्र चिन्त्यत इत्याहुः। तदयथाभाष्यम्। तथा सति पुरुषार्थस्यापि द्रव्यस्य पूर्वपक्षेऽपि सद्भावात् सिद्धान्तवत् पूर्वपक्षेऽपि क्षामवत्याः क्रत्वर्थता न सिध्यतीति, तदुपन्यासो नावकल्प्येत। तथा द्रव्यार्जनप्रक्रमादेव क्रतुप्रक्रमे दोषो यः सिद्धान्तिना पूर्वपक्षिणं प्रत्यापादितः, सोऽपि न स्यादित्यास्तां तावत्।

इति चतुर्थं [ द्रव्यार्जनोपायनियमाधिकरणम् ] वर्णकम्

---

प्रजापतिव्रतानां पुरुषार्थताधिकरणम् ॥ ३ ॥

**तदुत्सर्गे कर्माणि पुरुषार्थानि; शास्त्रस्यानतिशङ्क्यत्वान्न च द्रव्यं चिकीर्ष्यते, तेनार्थेनाभिसम्बन्धात् क्रियायां पुरुषश्रुतिः ॥ ३ ॥ अविशेषात्तु शास्त्रस्य यथाश्रुति फलानि स्युः ॥ ४ ॥ अपि वा कारणाग्रहणे तदर्थमर्थस्याऽनभिसम्बन्धात् ॥ ५ ॥ तथा च लोकभूतेषु ॥ ६ ॥**

'तस्य व्रतमि'त्युपक्रम्य 'नोद्यन्तमादित्यमीक्षेते'ति श्रुतम्, तत्र विचार्यते-किं क्रत्वर्थम्, उत पुरुषार्थमिति। तथा किं प्रतिषेधः? पर्युदास इति।

तत्र—प्रतिषेधे श्रुतिः शब्दः, पर्युदासे तु लक्षणा।
प्रतिषेधश्च सन् प्राप्तिम्मार्गमाणः क्रतुं व्रजेत् ॥ ४ ॥

पर्युदासे नञीक्षतिभ्यां क्रियान्तरं लक्ष्यते। प्रतिषेधे त्वाख्यातेन श्रुत्यभिहितामीक्षणकर्तव्यताम्, श्रुत्यैव नञ् प्रतिषेधतीति, न लक्षणा। स च प्राप्त्यपेक्षो वैदिकत्वसामान्याद्वैदिकीमेव प्राप्तिं शीघ्रमेव गच्छति। तेन यत्र कर्माङ्गभूतमादित्येक्षणं, विहितम्, तत्रोद्यतोऽस्तं, यतश्च प्रतिषेधः, फलञ्च न कल्प्यम्। अथापि पर्युदासः, तथाऽपि फलकल्पनाभयात्क्रत्वर्थ इति प्राप्ते—

ब्रूमः—उपक्रमे श्रुतं कर्मवाचि व्रतपदं यतः।
तदन्वयबलात्कर्मविशेषोऽतोऽत्र चोद्यते ॥ ५ ॥
तेन लक्षणयाऽप्यत्र पर्युदासः स च क्रतोः।
वहिःश्रुतः फलाकाङ्क्षी पुरुषार्थत्वमृच्छति ॥ ६ ॥
श्रुत्यादि क्रतुसम्बन्धे प्रमाणं नात्र विद्यते।
पुरुषापेक्षितार्थत्वं विधिना चावबोधितम् ॥ ७ ॥
साक्षादपेक्षितं तस्य फलमेव न तु क्रतुः।
अतः फलार्थता तच्च वाक्यशेषादवक्षयः ॥ ८ ॥

इति तृतीयं प्रजापतिव्रतानां पुरुषार्थताधिकरणम्।



यज्ञायुधानामनुवादताधिकरणम् ॥ ४ ॥

**द्रव्याणि त्वविशेषेणाऽऽनर्थक्यात् प्रदीयरेन् ॥ ७ ॥ स्वेन त्वर्थेन सम्बन्धो द्रव्याणां पृथगर्थत्वात्तस्माद्यथाश्रुति स्युः ॥ ८ ॥ चोद्यन्ते चार्थकर्मसु ॥ ९ ॥ लिङ्गदर्शनाच्च ॥ १० ॥**

'स्फ्यश्च कपालानि चे'त्युपक्रम्य "एतानि वै दश यज्ञायुधानी' तै. सं. १–६–२–३ ति श्रुतम्। किमयं प्रधानयागहविर्ष्वेन स्फ्यादीनां विधिः? उत 'स्फ्येनोद्धन्ती'त्यादिवाक्यप्राप्तानुवाद ? इति संशये।

अर्थवत्त्वाद्विधिर्न्याय्यो वादमात्रं ह्यनर्थकम्।
यज्ञशब्दः प्रकरणादाग्नेयादिषु वर्तते ॥ ९ ॥

गौणो नायुधशब्देन तत्साधनतया ततः।
स्फ्यादिद्रव्याणि चोद्यन्ते पुरोडाशादिभिः सह ॥ १० ॥

समुच्चयो विकल्पो वा स्यादिति प्राप्त उच्यते।

न ह्यत्राख्यातशब्दोऽपि श्रूयते न तरां विधिः ॥ ११ ॥

विकल्पोऽपि न वैषम्यात्पुरोडाशादिभिः सह।
समुच्चयोऽपि नैकार्थ्यान्निरपेक्षश्रुतेरपि ॥ १२ ॥

'यज्ञायुधानि सम्भरती'ति वाऽनन्तरश्रुतेन विधिनैकवाक्यत्वात्तच्छेषोऽयमुद्धननादि द्वारा प्राप्तयज्ञसाधनत्वानुवादः।

इति चतुर्थं यज्ञायुधानामनुवादताधिकरणम्।

---

पश्वेकत्वाधिकरणम् ॥ ५ ॥

तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात् ॥ ११ ॥ एकश्रुतित्वाच्च ॥ १२ ॥ प्रतीयत इति चेत् ॥ १३ ॥ नाऽशब्दं तत्प्रमाणत्वात्पूर्ववत् ॥ १४ ॥ शब्दवत्तूपलभ्यते तदागमे हि दृश्यते तस्य ज्ञानं हि यथाऽन्येषाम् ॥ १५ ॥ तद्वच्च लिङ्गदर्शनम् ॥ १६ ॥

उपादेयभूतपश्वादिगता विभक्त्यभिहितैकत्वादिका संख्या किमयज्ञाङ्गमविवक्षिता ? उत यज्ञाङ्गं विवक्षितेति संशयः।

तत्र—श्रुत्या पश्वङ्गता तस्याः समानपदरूपया।
पदान्तरस्य यागाङ्गभावो वाक्यात्प्रतीयते ॥ १३ ॥
दुर्बलश्च श्रुतेर्वाक्यमित्ययज्ञाङ्गमेकता।
तदभावेऽपि यज्ञावैगुण्यात्तदविवक्षितम् ॥ १४ ॥

उच्यते—समानप्रत्ययस्थेन कारकेणाऽऽत्मसात्कृता।
क्रियायै नीयते संख्या न पश्वङ्गं पदाद्भवेत् ॥ १५ ॥

समानप्रत्ययोपात्तेन प्रातिपदिकार्थादपि सन्निहिततरेण प्राधानभूतेन कारकेणाऽवरुद्धमेकत्वं प्रातिपदिकार्थमनादृत्य क्रियाङ्गमवगम्यमानं वाक्य-

समर्पितेन क्रियाविशेषेण च सम्बध्य पश्चादरुणैकहायनीन्यायेन पशुना विशेषणत्वेनार्थात्सम्बध्यते, तादर्थ्यन्तु यज्ञं प्रत्येवेति, विवक्षितमेकत्वम्।

इति पञ्चमं पश्वेकत्वाधिकरणम्

---

पशुलिङ्गस्य विवक्षितत्वाधिकरणम् ॥ ६ ॥

तथा च लिङ्गम् ॥ १७ ॥

एवं वा-'लिंङ्गन्तुअलिङ्गे'विपरीतलिङ्गे वृक्षादौ मक्षिकादौ च शब्दप्रयोगादशब्दार्थं इत्यविवक्षितत्वाशङ्का। सिंहः सिंहीत्यादावनन्यथासिद्धलिङ्गप्रतीतिःशब्दस्य वाचकत्वं कल्पयतीति, शब्दार्थत्वात्सङ्ख्यावल्लिङ्गं विवक्षितम्।

इति षष्ठं पशुलिगस्य विवक्षितत्वाधिकरणम्।

---

आश्रयिणामदृष्टार्थताधिकरणम् ॥ ७ ॥

**आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत ॥ १८ ॥ चोदनायां त्वनारम्भो विभक्तत्वान्न ह्यन्येन विधीयते ॥ १९ ॥ स्याद्वा द्रव्यचिकीर्षायां भावोऽर्थे च गुणभूतत्वाऽऽश्रया द्विगुणीभावः ॥ २० ॥**

उत्तमः प्रयाजः, पशुपुरोडाशः, स्विष्टकृदित्यादयोंऽशेन परकीयं द्रव्यदेवतं संस्कुर्वन्तः किन्तदर्था एव ? उतापूर्वार्था अपीति चिन्त्यते।

तत्र—एकस्य कर्मणो युक्तमेकमेव प्रयोजनम्।
दृष्टे सति च नादृष्टं कल्प्य नापूर्वमस्त्यतः ॥ १६ ॥

उच्यते—देवतास्मरणं मन्त्रात् प्रक्षेपाद् द्रव्यसंस्कृतिम्।
त्यागांशस्य तु नादृष्टादृते किञ्चित्प्रयोजनम् ॥ १७ ॥

तस्मात् त्यागांशेनादृष्टार्था अपीत्युभयार्थाः।

इति सप्तममाश्रयिणामदृष्टार्थताधिकरणम्।

---

प्रयुक्तिविचारप्रतिज्ञाधिकरणम् ॥ ८ ॥

अर्थे समवैषम्यमतो द्रव्यकर्मणाम् ॥ २१ ॥

एवं तावत्फलभूतं प्रयोजकाप्रयोजकत्वमाश्रित्य शेषशेषित्वमेव साक्षाच्चिन्तितम्। अतः परमेतदेव साक्षाच्चिन्त्यते। हेतुत्वेन तु शेषिविचारः-क्वचित्करिष्यते। तदेतद् वृत्तवर्तिष्यमाणविवेककथनमात्रार्थं सूत्रम्।

इत्यष्टमं प्रयुक्तिविचारप्रतिज्ञाधिकरणम्।

तप्ते पयसि दध्यानयनस्यामिक्षाप्रयुक्तताधिकरणम् ॥ ९ ॥

एकनिष्पत्तेः सर्वं समं स्यात् ॥ २२ ॥ संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात् ॥ २३ ॥ मुख्यशब्दाभिसंस्तवाच्च ॥ २४ ॥

'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनमि'ति-श्रुतम्। तत्र संशयः—किमामिक्षायागेनैव दध्यानयनम्प्रयुज्यते? उत वाजिन-यागेनापीति। तदर्थं च किमुभयार्थम्? उतामिक्षार्थमिति। ततोऽपि पुनर्वि-चारयितव्यम्। किमामिक्षा दधिपयोभ्यामर्थान्तरं वैश्वदेवयागस्य हविः? उत-पय एव दधिसंसृष्टमिति।

मधुराम्लरसाऽमिक्षा घनरूपा च तेन सा।
पयसोऽर्थान्तरं तद्धि मधुरैकरसं द्रवम् ॥ १८ ॥

वैश्वदेवयागस्य तावदामिक्षा हविः, सा च रूपरसान्यत्वात् अर्थान्तरम्-क्षीरात्। अतो दध्यानयनमसंयुक्तमामिक्षया विहितं केवलन्तज्जननसामर्थ्या-ल्लिङ्गादामिक्षार्थं स्यात्। सामर्थ्यञ्च वाजिनेऽप्यस्तीति, तादर्थ्यमपि युक्तम्। अत उभयप्रयुक्तमानयनम्—इति।

उच्यते—पयस्तदा परामृष्टं वैश्वदेवं विधीयते।
मन्त्रवर्णाच्च पयसो हविष्ट्वमवगम्यते ॥ १९ ॥

पयस्त्वन्न द्रवापेक्षं रसमात्रनिमित्तकम्।
पय एव घनीभूतमामिक्षेत्यभिधीयते ॥ २० ॥

आस्तान्तावदामिक्षापदम्, 'सा वैश्वदेव्यामिक्षे'ति यत्तच्छब्दपरामृष्टं तद्धविः, स च पयः परामृशति, तद्धि पूर्ववाक्ये प्रधानभूतं प्रकृतम्, तादर्थ्येनानयन-

विधानात्। कथं तादर्थ्यम्? अनयनं द्विकर्मकम्, यदानीयते, तत्प्रथमं कर्म, यत्प्रत्यानीयते, तद् द्वितीयम्, तच्चेह पयः, तच्च प्रथमेन कर्मणा व्याप्यमानं प्रधानम्। प्रधानपरामर्शी च सर्वनामेति, तच्छब्दः पय एव विश्वेदेवैः सम्बध्नातीति, तदेव हविः। तथा च मन्त्रः 'जुषन्तां युज्यम्पयः' इति, पय एव घनीभूतमामिक्षेति, अमिक्षापदं नित्यानुवादः। तत्सामानाधिकरण्याच्च सेति स्त्रीलिङ्गम्। सोऽपि नित्यानुवाद एव। न च पयस्त्वं द्रवापेक्षम्, रसविशेषमात्रापेक्षं तत्। तापेन सान्द्रीभूतेऽपि पयस्त्वप्रतीतेः। यस्त्वम्लो रसः, स संस्कारकस्य दध्नः, न त्वसावामिक्षापदस्याभिधेयः, यस्त्वत्र मधुरः पयोंऽशः, स एवामिक्षा, पयःप्रतिनिर्देशकतच्छब्दसामानाधिकरण्यात्, मन्त्रवर्णाच्च। तस्मात्पय एवामिक्षा वैश्वदेवयागहविरिति, वैश्वदेवयागप्रयुक्तमानयनम्, न वाजिनयागप्रयुक्तम्।

इत्यष्टमं दध्यानयनस्यामिक्षाप्रयुक्तताधिकरणम्।

---

## गवानयस्य पदकर्माप्रयुक्तताधिकरणम् ॥ ९ ॥

## पदकर्माप्रयोजकं नयनस्य परार्थत्वात् ॥ २५ ॥

'एकहायन्या क्रीणाती'ति प्रकृत्य श्रूयते 'षट् पदान्यनुनिष्क्रामति, सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति, यर्हि हविर्धाने प्राची प्रवर्तयेयुः, तर्हि तेनाक्षमुपाञ्ज्यादि'ति। तत्र संशयः—किं यदेतदक्षाभ्यञ्जनं सप्तमपदसाध्यम्, तदर्थमप्येकहायनीनयनम्, तेनापि प्रयुज्यते? उत क्रयार्थमेव नयनम्, तेनैव प्रयुज्यत इति।

तत्र—द्वयोर्नयनसाध्यत्वाद्वाक्ये चाश्रवणाद्यथा।
सन्निधानात् क्रयार्थत्वं तथैव पदशेषता॥ २१॥

दध्यानयनमामिक्षासंयुक्तम्, न वाजिनेन। नयनं तु द्वाभ्यामसंयुक्तम्, द्वयोरपि सन्निधानात्, नयनसाध्यत्वाच्चाविशेषः।

नैवं तृतीयया तावत्क्रयार्थैवैकहायनी।
यदर्था सा तदर्थश्च तत्संस्कारात्मको नयः॥ २२॥
नयनस्य परार्थत्वात्पदकर्माप्रयोजकम्।
परार्थनुष्ठितं तत्तु पदकर्मोपजीवति॥ २३॥

इति नवमं पदकर्माप्रयोंजकत्वाधिकरणम्।

कपालानां तुषोपवापाप्रयुक्तताधिकरणम् ॥ १० ॥

**अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्त्वाद्धि विधीयते ॥ २६ ॥**

'कपालेषु श्रपयति, पुरोडाशकपालेन तुषानुपवपती'ति च श्रुतम्। तत्र संशयः—किम्पुरोडाशश्रपणम्, तुषोपवापश्च उभयं प्रयोजकं कपालस्य? उत तुषोपवापो न प्रयोजक इति। तत्रोपवापशेषत्वं कपालस्य तृतीयया निर्विवादम्। अतः सोऽपि कपालस्य प्रयोजकः।

सत्यमस्ति तदङ्गत्वं तथाऽपि त्वप्रयोजकः।
पुरोडाशप्रयुक्तस्य कपालस्येह चोदनात् ॥ २४ ॥

पुरोडाशार्थिनोपात्तमासादितञ्च कपालं तुषोपवापे चोद्यते, न कपालमात्रम्, न च प्रयुक्तस्य पुनः प्रयुक्तिः सम्भवतीत्यप्रयाजकस्तुषोपवापः।

इत्येकादशंकपालानांनु षोपवापाप्रयुक्तताधिकरणम्।



शकृल्लोहितयोः पशावप्रयोक्तृत्वाधिकरणम् ॥ १२ ॥

**पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् ॥ २७ ॥**

'अग्नीषोमीयं पशुमालभेते'ति प्रकृत्य 'हृदयस्याऽग्रेऽवद्यती'ति श्रुतम्। तथा 'शकृत्संप्रविध्यति, लोहितन्निरस्यती'ति श्रुतम्। तत्र संशयः-किं हृदयादि, शकृल्लोहितञ्च द्वयमपि पश्वालम्भस्य प्रयोजकम्? उत हृदयाद्येवेति। उभयत्र पशोरश्रवणात्प्रकृतसम्बन्धे चाविशेषादुभयं प्रयोजकम्—

नैवम्—यागार्थः पशुरुत्पन्नो हविःप्रकृतिभावतः।
हवींषि हृयादीनि तैरेवातः प्रयुज्यते ॥ २५ ॥

यद्यपि हृदयादिवाक्ये पशोरश्रवणम्, यागार्थता तु श्रूयते, तादर्थ्यं च न हविष्ट्वेन, विशसनश्रवणात्। किन्तु हविःप्रकृतित्वेन। हृदयादीनि हवींषि, नान्यदिति दशमे स्थितम्, अतस्तदर्थं एव पश्वालम्भः। शकृल्लोहितकर्म तु प्रतिपत्तिमात्रम्।

इति द्वादशं शकृल्लोहितयोःपशवाप्रयोक्तृत्वधिकरणम्।



पुरोडाशस्य स्विष्टकृदप्रयुक्तताधिकरणम् ॥ १३ ॥

एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात् ॥ २८ ॥ निर्देशात्तस्यान्यदर्थादिति चेत् ॥ २९ ॥ न शेषसन्निधानात् ॥ ३० ॥ कर्मकार्यात् ॥ ३१ ॥ लिङ्गदर्शनाच्च ॥ ३२ ॥

'उत्तरार्धात्स्विष्टकृते समवद्यती'ति स्विष्टकृत किमुत्तरार्ध—पुरोडाशयोः—अन्ययोः प्रयोजकः ? उताग्नेयादिप्रयुक्तोपजीवी ति संशये ।

नाग्न्याद्यर्थस्य हविषो देवतान्तरमङ्गतिः ।
कृत्वा ह्यन्यद्धविस्तस्मादवद्येतोत्तरार्धतः ॥ २६ ॥
उच्यते—उत्तरार्धादिशब्दानां साकाङ्क्षार्थाभिधायिनाम् ।
नापेक्षणीयसम्बन्धात्प्रागर्थोऽध्वसीयते ॥ २७ ॥

उत्तरार्धादिशब्दा न स्वातन्त्र्येणार्थं बोधयन्ति । स्ववाक्ये च न प्रतिसम्बन्धी श्रुतोऽस्योत्तरार्द्धादिति । तेन विना साकाङ्क्षं वाक्यं प्रकृतसम्बन्धेन निराकाङ्क्षीभवति, प्रकृतञ्चाग्नेयादिप्रयुक्तं हविरिति, तदुत्तरार्धग्रहणादप्रयोजकत्वम् । अन्यार्थस्याप्यन्यसम्बन्धो वचनात्, प्रतिपत्तित्वाच्चाविरुद्धः ।

त्रयोदशं पुरोडाशस्य स्विष्टकृदप्रयुक्तत्वाधिकरणम् ।



प्रयाजशेषाभिघारणाधिकरणम् ॥ १४ ॥

अभिघारणे विप्रकर्षादनुयाजवत् पात्रभेदः स्यात् ॥ ३३ ॥ न वा पात्रत्वादपात्रत्वं त्वेकदेशत्वात् ॥ ३४ ॥ हेतुत्वाच्च सहप्रयोगस्य ॥ ३५ ॥ अभावदर्शनाच्च ॥ ३६ ॥ सति सव्यवचनम् ॥ ३७ ॥ न स्येति चेत् ॥ ३८ ॥ स्यात्तस्य मुख्यत्वात् ॥ ३९ ॥

वाजपेये क्रतुपशवः, प्रजापत्याश्च प्रातःसवने तन्त्रेणोपक्रम्यन्ते, पर्यग्निकरणान्ते कृते, प्राजापत्यानामालम्भोत्कर्षः श्रूयते—'ब्रह्मसाम्न्यालभत' इति । क्रतुपशवः प्रातःसवने एवालभ्यन्ते, प्रयाजाश्च तत्रैवाऽनुष्ठिताः । प्रकृतौ च 'प्रयाजशेषेण हवींष्यभिघारयती' आप. श्रौ. २-५-६ ति श्रुतम् । तदिह प्राप्तम्—

सन्दिह्यते - किं प्रातःसवनानुष्ठितानां प्रयाजानां, शेषो माध्यन्दिनकालप्राजापत्यवपाभिघारणाय धारयितव्यः, तदर्थञ्च पात्रान्तरमुत्पाद्यम्, जुह्वा व्यापृतत्वात्, उत नेति। तदर्थञ्च किं हविःसंस्कारत्वपक्षे प्राजापत्यवपासंस्कारः मा वालोपीति धारणं स्यात्, प्रतिपत्तित्वे तु सन्निहितास्वेव क्रतुपशुवपास्वभिघारणसिद्धेर्न धारणम्।

तत्रोपयोक्ष्यमाणानां द्वितीयायोगिनां तथा।
हविषामेव संस्कारो न शेषस्य विपर्ययात्॥ २८॥

उपयोक्ष्यमाणसंस्कारो ह्युपयुक्तसंस्कारादभ्यर्हितः, हवींषि च तथा, शेषस्तूपयुक्तः, किं तस्य संस्कारेण। द्वितीयया च हविषामेव प्राधान्यम्, न शेषस्य विपरीतविभक्तिनिर्दिष्टस्य। तस्मान्न्यायतः, शब्दतश्च हविःसंस्कारोऽभिघारणम्।

सत्यमेवं तथापीह शेषस्य प्रतिपादनम्।
न्याय्यं दृष्टार्थतालाभादन्यथाऽदृष्टकल्पनात्॥ २९॥

शेषस्य प्रतिपत्तिरपेक्षिता, तादर्थ्येऽभिघारणं दृष्टार्थं भवति। हविःसंस्कारस्त्वनपेक्षितोऽदृष्टं कल्प्येत, न च दृष्टे सति तद् युक्तम्, अतः प्रयाजशेषं हविष्षु क्षारयतीति वाक्यार्थः।

हविराधारनियमात्तत्संस्कारोऽपि गम्यते।
तस्मादुभयसंस्कारः स्विष्टकृत्-सूक्तवाकवत्॥ ३०॥

## प्राभाकरमतस्योपन्यास-निरासौ।

यस्तु हविःसंस्कारं नेच्छति, प्रतिपत्तौ च द्रव्यस्याधारत्वादेकस्मिन्नेव हविषि सर्वक्षारणम्, बहुवचनन्त्वनियमाभिप्रायमित्याह। स कथम्, 'सर्वं ध्रुवामेवाग्रेऽभिघारयति, ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवती'ति लिङ्गम्—समर्थयेत्। अनेन हविषां संस्कार्यत्वम्, समुच्चयश्चावगम्यते। प्रधानयागाद्युपयोगिनां हविषामपि प्रयाजशेषम्प्रति गुणत्वमत्यन्तानुपपन्नमित्यास्तान्तावत्।

इति चतुर्दशं प्रयाजशेषाभिधारणाधिकरणम्।



समानयनस्याज्यधर्मप्रयोजकताधिकरणम् ॥ १५ ॥

समानयनं तु मुख्यं स्याल्लिङ्गदर्शनात् ॥ ४० ॥ वचनं हि हेत्वसामर्थ्यम् ॥ ४१ ॥

दर्शपूर्णमासयोराज्यग्रहणं प्रकृत्य श्रूयते 'यज्जुह्वां गृह्णाति, प्रयाजेभ्यस्तत्, यदुपभृति, प्रयाजानुयाजेभ्यस्तदि' तै. ब्रा. ३-३-५-२६ ति। तथा 'अतिहायेडो-बर्हिः प्रति समानयते जुह्वामौपभृतमि'ति। तत्र विचारः—यदेतच्चतुर्थप्रयाजोपक्रमे समानयनम्, तत्किमौपभृतस्याज्यग्रहणस्य प्रयोजकम्, उत नेति। तदर्थञ्च किमु-पभृति यत्प्रयाजार्थमाज्यम्, तस्येदं समानयनम्? उत यदनूयाजार्थम्, तस्येति।

तत्र—सर्वार्थं हि प्रयाजार्थमविशेषाद्बहुश्रुतेः।
सर्वादौ तत्समानीतमिदानीन्नोपभृत्यदः॥ ३१॥

'प्रयाजानुयाजेभ्यस्तदि'त्यविशेषश्रवणात्सर्वप्रयाजार्थमौपभृतम्, प्रयाज-शब्दाच्च विभक्त्यश्रवणात्। अनूयाजशब्दात् परा या विभक्तिः, साऽनुषज्यते—प्रयाजेभ्य इति। ततश्च बहुवचनात्सर्वार्थम्, न चतुर्थोत्तमयोरेव। अतः सर्व-प्रयाजादावानीतमिदानीमुपभृति न तदस्ति। केवलमनुयाजार्थमेवास्ति। तस्येदम्—समानयनमनुयाजप्रयुक्तस्य संस्कारमात्रार्थत्वादप्रयोजकम्, उभयोरपि जौहवौप भृतयोः प्रयाजार्थयोर्ग्रहणयोः सर्वप्रयाजविषययोरेकार्थत्वाद्विकल्पः।

उच्यते—समानयनमुद्दिश्य कालमात्रं विधीयते।
अदृष्टकल्पनाऽनेकविधानञ्चाऽन्यथा भवेत्॥ ३२॥

यदुपभृति प्रयाजार्थे गृहीतम्, तस्य प्राप्तमेव जुह्वामानयनमनूद्य काल-मात्रं विधीयते—'अतिहायेडोबर्हिः प्रती'ति। तथा सति ह्यल्पार्थविधानम्, दृष्टार्थञ्च समानयनम्भवति, अनुयाजार्थस्य तु अदृष्टार्थमत्यताप्राप्तं क्षारणम् विधीयते, तस्य च काल इत्यनेकार्थविधिर्दोषः, अदृष्टकल्पना च स्यात्। अतः प्रयाजार्थस्येदं समानयनम्, प्रयाजद्वयङ्कर्तुं क्रियत इति प्रयोजकमेवाज्यस्य। 'प्रयाजानुयाजेभ्यः' इत्यविशेषश्रवणंकालविधिबलादुपरितनप्रयाजद्वयविषयमुप-संह्रियते। एवञ्च जौहवमाद्यानामेव त्रयाणाम्भवतीति विषयभेदात्समुच्चयः।

इति पञ्चदशं समानयनस्याज्यधर्मप्रयोजकताधिकरणम्।

औपभृतजौहवयोः क्रमेण उभयानुभयार्थताधिकरणम् ॥ १६ ॥

तत्रोत्पत्तिरविभक्ता स्यात् ॥ ४२ ॥ तत्र जौहवमनुयाजप्रतिषेधार्थम् ॥ ४३ ॥ औपभृतं तथेति चेत् ॥ ४४ ॥ स्याज्जुहूप्रतिषेधान्नित्यानुवादः ॥ ३ १ ॥

'चतुर्जुह्वां गृह्णाति अष्टावुपभृति, चतुर्ध्रुवायामि'त्युत्पन्नान्याज्यानि सर्वाणि किमविशेषेण सर्वकार्यार्थानि ? उत जौहवं प्रयाजार्थम्, औपभृतमनुयाजार्थम् ? अथवा जौहवं प्रयाजार्थम्, औपभृतमुभयार्थम्, ध्रौवन्तदतिरिक्तविषयमिति संशयः।

उत्पत्तावविशेषेण सर्वार्थप्रतिभोद्गमः।
अवयुत्यानुवादश्च प्रयाजाद्यर्थतावचः ॥ ३३ ॥

यदि तु 'यज्जुह्वां गृह्णाति, प्रयाजेभ्यस्तदि'ति वचनात् तत्केवलं प्रयाजार्थम् स्यात्। ततो 'यदुपभृति, अनुयाजेभ्यस्तदि'तिवचनात्तदपि केवलानुयाजार्थम् प्रसज्यते। अथ तदनुवादमात्रम्, प्रयाजवाक्यमपि तथाऽस्तु, अविशेषादित्येतावानेव प्रथमपक्षः।

नानर्थकं वचोयुक्तमर्थवत्त्वस्य सम्भवे।
तेन जुह्वां प्रयाजार्थमितरार्थं तथेतरत् ॥ ३४ ॥

न हि प्रमाणबलादायातमनिष्टमिति शक्यमुत्स्रष्टुम्। अतो भवत्वौपभृतम् केवलानुयाजार्थम्, जौहवं च प्रयाजार्थमिति द्वितीयःपक्षः।

जौहवस्य प्रयाजैकशेषत्वं युक्तमितीरितम्।
अनूयाजैकशेषत्वमितरस्य न मृष्यते ॥ ३५ ॥

'यदुपभृति, प्रयाजानुयाजेभ्यस्तदि'ति वचनादुभयार्थं तत्। 'अनुयाजेभ्यः तदि'ति वचनमगत्यात्वयुत्याऽनुवादः।

इति षोडशं जौहवौपभृतयोः क्रमेणोभयानुभयार्थताधिकरणम्।



अष्टसंख्यानियमनाधिकरणम् ॥ १७ ॥

**तदष्टसङ्ख्यं श्रवणात् ॥ ४६ ॥ अनुग्रहाच्च जौहवस्य ॥ ४७ ॥**

**द्वयोस्तु हेतुसामर्थ्यं श्रवणं च समानयने ॥ ४८ ॥**

'अष्टावुपभृति गृह्णाती'ति किमष्टसंख्यैकग्रहणविधिः, उत चतुःसंख्याग्रहणद्वयविधिरिति विचारः।

विधीयतेऽष्टसंख्याकं ग्रहणं श्रूयते हि तत्।
लक्ष्यते तु चतुःसंख्याद्वयामत्राष्टसंख्यया ॥ ३६ ॥

न च श्रुतिसम्भवे लक्षणा युक्ता। 'चतुर्गृहीतं जुहोती'ति सामान्यवचनम्—प्रयाजानुयाजयोः विशेषतोऽष्टगृहीतविधानात् बाध्यते।

उच्यते—चतुर्गृहीतं होमाङ्गमष्टसंख्याश्रुतिः पुनः।
ग्रहणे तेन होमाङ्गं चतुष्ट्वं बाधते न सा ॥ ३७ ॥

ननु ग्रहणस्य होमार्थत्वादर्थात्तुल्यार्थतां प्राप्य बाधः स्यात्। केवलग्रहणाङ्गत्वे हि अष्टसंख्या निष्फला स्यात्।

उच्यते—प्रधानाङ्गं चतुःसंख्या ग्रहाङ्गमितरा पुनः।
प्रधानाङ्गं च नाङ्गाङ्गमलं भवति बाधितुम् ॥ ३८ ॥

तेनेयमष्टसंख्या प्रधानाङ्गभूतां चतुःसंख्यां बाधितुमशक्नुवन्ती ग्रहणमात्राङ्गतां च निष्फलत्वादनासादयन्ती चतुःसंख्याद्वयलक्षणार्था विज्ञायते।

इति सप्तदशंमष्टसंख्यानियमनाधिकरणम्।

**इति महामहोपाध्यायश्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायाम्**

**चतुर्थस्याध्यायस्य प्रथमः पादः ॥ १ ॥**



# अथ चतुर्थाध्यायस्य द्वितीयः पादः

## स्वरोश्छेदनाद्यप्रयोजकताधिकरणम् ॥ १ ॥

स्वरुस्यस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥ जात्यन्तराच्च शङ्कते ॥ २ ॥ तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् ॥ ३ ॥ शकलश्रुतेश्च ॥ ४ ॥ प्रतियूपं च दर्शनात् ॥ ५ ॥ आदाने करोति शब्दः ॥ ७ ॥

अग्नीषोमीये पशौ श्रूयते 'यूपस्य 'स्वरुङ्करोति, स्वरुणा पशुमनक्ती'ति। तत्र विचारः—किमेषः स्वरुर्यूपात् पृथक् निष्पन्नः छेदनादीनां यूपधर्माणाम्, खादिरादेश्च वृक्षस्य प्रयोजकः, उत यूपमनुनिष्पन्नः शकलो गृहीतव्य इति। तदर्थमिदं चिन्त्यते- किं स्वरुङ्करोतीति—स्वरूभावना विधीयते, तस्याश्च करणेतिकर्तव्यताकाङ्क्षायां 'यूपस्य स्वरुमि'त्यनेन यूपशब्दलक्षणया खदिरादिवृक्षम्-करणत्वेन, छेदनादीनि च कर्माणीतिकर्तव्यतात्वेन समर्पयति। तथोत्पन्नश्च 'स्वरुणा पशुमनक्ती'ति विनियुज्यते, उताऽनेन वाक्येनाञ्जनसाधनं स्वरुरित्यवगते, कुतोऽसावुपादेय इत्यपेक्षायाम्, 'यूपस्य स्वरुमि'त्यनेन यत्स्वरुमुपादत्ते, तद्यूपादिति विधीयते।

तत्र—करोतिर्भावनावाची सा च श्रुत्याविधीयते।
वाक्यार्थविधिरन्याय्यो लक्षणा चान्यथा भवेत् ॥ ३९ ॥

अञ्जनसाधनत्वेनावगतस्य हि स्वरोरर्थप्राप्तमादानमनूद्य यूपादिति विधौ वाक्यार्थविधानम्, करोतिश्चाभूतप्रादुर्भाववचनस्सन्नुपादानं लक्षयेत्। स्वरुभावनाविधिस्तु श्रुत्या भवति, करोतिश्च श्रौत इति स एव न्याय्यः, तस्याश्च करणेतिकर्त्तव्यता वाक्यगतेनैव यूपशब्देन समर्प्यत इति प्रयोजकः स्वरुः,

नैवम्—बह्वर्थविधिरेवं स्यान्मुख्यशब्दस्य लक्षणा।
अल्पार्थविधिरस्माकं जघन्यस्य लक्षणा ॥ ४० ॥

स्वरुभावनायां हि करणेतिकर्तव्यताविशिष्टायां विधीयमानायामतिभाराद्वरं विशेषणमात्रविधानम्। मुख्यस्य च यूपशब्दस्य त्वत्पक्षे लक्षणा,

मत्पक्षे जघन्यस्य करोतेः। प्राप्तस्वरूपादानानुवादेन यूपानुनिष्पन्नशकलस्योपादानादप्रयोजकः स्वरुः।

इति प्रथमं स्वरोच्छेदनाद्यप्रयोजकताधिकरणम्।



शाखाहरणाधिकरणम्॥ २॥

## शाखायां तत्प्रधानत्वात्॥ ७॥

शाखामधिकृत्य "प्राचीमाहरती"ति श्रुतम्। तत्र किमयं दिग्वादः? उत शाखावाद इति संशयः।

तत्र—श्रुत्या दिग्वचनः शब्दः शाखायां लक्षणा भवेत्।
आहर्तव्याभिधानात्तु शाखावादत्वनिश्चयः॥ ४१॥

'प्राचीमाहरती'त्याहर्तव्यवचनः प्राचीशब्दः। न च शक्या दिगाहर्तुम्। अथ दिशं प्रत्याहरतीत्युच्यते, प्रतिशब्दाध्याहार एव दोषः। प्रकृतशाखापदसमानाधिकरण्याच्च शाखावाद एवऽयम्—वृक्षस्य या प्राची शाखा, तामिति।

इति द्वितीयं शाखाहरणाधिकरणम्।



छेदनस्य शाखाप्रयुक्तताधिकरणम्॥ ३॥

## शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद्वैषम्यात्॥ ८॥

## श्रुत्यपायाच्च॥ ९॥

'शाखामाच्छिनत्ति, शाखामाहरति, मूलतः शाखां परिवास्योपवेषम्—करोति, उपवेषेण कपालान्युपदधाति, शाखया वत्सानपाकरोती' ति श्रूयते। तत्र संशयः—किं शाखाच्छेदनाहरणपरिवासनानां वत्सापाकरणम्, कपालोपधानञ्च द्वयमपि प्रयोजकम्? उतोपधानमप्रयोजकमिति। तदर्थमिदं मूलार्थमपि छेदनादिकम्? उताग्रार्थमेवेति।

तत्र—शाखाशब्दः समूलस्य नाऽग्रमात्रस्य वाचकः।
छेदनादि च शाखार्थं द्वयं तस्मात्प्रयोजकम्॥ ४२॥

'शाखां छिनत्ती'ति द्वितीयया शाखार्थं छेदनादिकम्। द्वयमपि-मूलमग्रञ्च सहैव शाखाशब्दोऽभिधत्ते, नाग्रमात्रम्। अतो यदुपवेषसंज्ञस्य मूलस्य कार्यमुपधानम्, यच्चाग्रकार्यं वत्सापाकरणादिकम्, तयोरुभयोरपि छेदनादिकमङ्गम्, परिवासनञ्च द्वयोर्विभागार्थम्। तस्मादुभयं प्रयोजकम्।

उच्यते—मूलापादानकं ह्यत्र परिवासनमुच्यते।
तच्चाऽग्रस्य न मूलस्येत्यग्रार्थं परिवासनम्॥ ४३॥
तद्विशेषणभूतत्वान्मूलस्यापि तदर्थता।
अन्यार्थेन तु मूलेन कपालमुपधीयते॥ ४४॥

यद्यपि छेदनादिवाक्ये समूलमग्रमाचष्टे शाखाशब्दः, परिवासनवाक्ये तु अग्रमेव। मूलतः परिवासनं हि तत्र विधीयते, न परिवासनमात्रम्। न च मूलस्य मूलतः परिवासनं सम्भवतीति, अग्रमेव परिवासनवाक्ये शाखाशब्देनोच्यते, तदर्थञ्च परिवासनम्।परिवासनविशेषणञ्च मूलं तद्द्वारेणाऽग्रार्थमेव, समूलस्य च छेदनमाहरणञ्च कथं नाम मूलतः परिवासनं शाखायाः स्यादित्येवमर्थम्। न ह्यनाहृते मूले मूलतः परिवासनं सम्भवति। तस्मात् परिवासनम् समूलाहरणम्, छेदनञ्च सर्वमग्रकार्यार्थम्। न च 'परिवास्ये'ति क्त्वाप्रत्ययादुपवेषकरणार्थं परिवासनम्, वाक्यसंयोगाद्बलीयस्या द्वितीयया शाखाभिधानार्थत्वावगमात्। 'उपवेषं करोती'ति साकाङ्क्षमन्यार्थनिष्पन्नेन मूलेन निराकाङ्क्षीक्रियते। करोतिश्च पूर्ववदादाने वर्तते। यदिदमग्रार्थं परिवासनानुनिष्पन्नम् तत् कपालोपधानसाधनतयाऽवगतोपवेषत्वेनोपादत्त इति। न शाखां परिवास्य मूलत उपवेषं करोतीत्यन्वयः। येन मूलस्योपवेषार्थता लभ्येत, व्यवहितकल्पनाप्रसङ्गात्। तस्मादग्रार्थत्वात्सर्वस्य, तदेव प्रयोजकम्।

इति तृतीयं छेदनस्य शाखाप्रयुक्तताधिकरणम्।



शाखाप्रहरणस्य प्रतिपत्तिकर्मताधिकरणम्॥ ४॥

**हरणे जुहोतिर्योगसामान्याद्द्रव्याणां चार्थशेषत्वात्॥ १०॥ प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात्॥ ११॥ अर्थेऽपीति चेत्॥ १२॥ न तस्यानधिकारादर्थस्य च कृतत्वात्॥ १३॥**

'सूक्तवाकेन प्रस्तरं प्रहरती'ति हरतिर्यागः, मान्त्रवर्णिको देवताविधिरिति-च स्थितम्। इदमपरं श्रूयते 'सह शाखया प्रस्तरं प्रहरती'ति। तत्र संशयः'—किम् शाखाप्रहरणं यागस्यैवोपलक्षणम्? शाखायाः प्रयोजकमर्थकर्म, उत प्रतिपत्तिरप्रयोजकमिति।

तत्र प्रस्तरतुल्यत्वाच्छाखा यागस्य साधनम्।
निर्वापवच्च हरणं यागस्यैवोपलक्षणम्॥ ४५॥

प्रस्तरप्रहरणं तावद्यागः, स चार्थकर्म, तत्साधनभूतः प्रस्तरः, शाखा च—सहशब्दात्प्रस्तरेण समाना गम्यते। तेन सापि यागं प्रति गुणभूता, हरतिश्च अविवक्षितो निर्वापालम्भादिवत् यागोपलक्षणार्थः,। तस्माच्छाखाप्रहरणं होमः-अर्थकर्म, 'द्रव्यकर्मसंयोगन्यायादि'ति प्राप्ते—

अभिधीयते—यागे यदि सहत्वं स्यात्स्यादेवं हरतौ तु तत्।
तत्र च प्रतिपाद्यत्वात्प्रस्तरस्य तथैव सा॥ ४६॥

'सूक्तवाकेन प्रस्तरं प्रहरती' त्यत्र मान्त्रवर्णिकदेवताविधिबलाद्यागः कल्पितः, न तु हरतिर्यागवचनः। अत्र तु प्रहरणमात्रं श्रुतम्, 'सह शाखया प्रस्तरम् प्रहरती'ति, न च प्रहरणे सूक्तवाकः साधनम्, येन मान्त्रवर्णिकदेवताविधिबलात् यागः स्यात्, तस्माद्धरतिमात्रे शाखायाः सहभावात्, हरतौ च प्रस्तरस्य प्रतिपाद्यत्वात्, शाखाया अपि प्रतिपत्तिः। यथा हरतौ सहभावे प्रतिपत्तिः, न गुणत्वं शाखायाः, तथा षष्ठे वक्ष्यते। अत्र हरतावेव साहित्यम्, न यागे,-इत्येतावत्स्थितम्।

इति चतुर्थं शाखायप्रहरणस्य प्रतिपत्तिकर्मताधिकरणम्।

---

### निनयनस्य प्रतिपत्तिकर्मताधिकरणम्॥ ५॥

**उत्पत्त्यसंयोगात्प्रणीतानामाज्यवद्विभागः स्यात्॥ १४॥ संयवनार्थानां वा प्रतिपत्तिरितरासां तत्प्रधानत्वात्॥ १५॥**

दर्शपूर्णमासयोः 'अपः प्रणयती' तै. ब्रा. ३-२-४-१ ति प्रयोजनासंयुक्ताः प्रणीता उत्पाद्य, तत्र श्रूयते 'प्रणीताभिर्हवींषि संयौती'ति। तथा 'अन्तर्वेदि प्रणीता निनयति' इति। तत्र सन्देहः—किमासां संयवनम्, निनयनञ्चोभयम्-प्रयोजकम्—उभयार्थाः प्रणीताः? उत संयवनार्था एव, तदेव प्रयोजकम्, निनयनम् प्रतिपत्तिरिति।

तत्रोत्पत्तावसंयोगात्कैमर्थ्यस्याभिलाषिणीः ।
स्वीकुर्वाते उभे तस्मादुभयार्थास्तदुच्यते ॥ ४७ ॥
हविःसंयवने तासां गुणभावस्तृतीयया ।
द्वितीयया निनयनं प्रतिपत्तिर्विधीयते ॥ ४८ ॥

उत्पत्तावसंयुक्तानामपि प्रयोजनेन प्रणीतानां कैमर्थ्याभिलाषिणीनाम्–तृतीयया संयवनार्थत्वं गम्यते, निनयनन्तु द्वितीयाश्रुत्या तासामेव प्रतिपत्त्यर्थमप्रयोजकम् ।

इति पञ्चमं निनयनस्य प्रतिपत्तिकर्मताधिकरणम् ।

—०—

दण्डदानस्यार्थकर्मताधिकरणम् ॥ ६ ॥

प्रासनवन्मैत्रावरुणस्य दण्डप्रदानं कृतार्थत्वात् ॥ १६ ॥ अर्थकर्म वा कर्तृसंयोगात्स्रग्वत् ॥ १७ ॥ कर्मयुक्ते च दर्शनात् ॥ १८ ॥

दीक्षितस्य दण्डधारणं[प्रदानं] विधाय, पुनराम्नातम् 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छती 'आप. श्रौ. ति । कि मैत्रावरुणाय दण्डप्रदानं दण्डस्य-प्रयोजकमर्थकर्म ? उत प्रतिपत्तिकर्माऽप्रयोजकमिति ।

तत्र—द्वितीयाश्रुतिसंयोगात्कृतार्थत्वाच्च धारणे ।
मैत्रावरुणहस्तेऽस्य प्रक्षेपः प्रतिपादनम् ॥ ४९ ॥

दीक्षितधारणे कृतार्थो दण्डः प्रतिपत्त्यपेक्षः, द्वितीयया च तत्प्राधान्यम्–गम्यते, न दानस्य । अतो मैत्रावरुणहस्ते प्रक्षिप्यते ।

उच्यते—चतुर्थ्या सम्प्रदानत्वं प्रशास्तुरवगम्यते ।
कर्मणा यमभिप्रैति सम्प्रदानं तदुच्यते ॥ ५० ॥

तेन दीयमानेन दण्डेनाभिप्रेयमाणत्वान्मैत्रावरुणस्य तत्प्रधानं दानम् ।

द्वितीया तु 'तथाचायुक्तञ्चानिप्सितामि'ति भविष्यति । अथ सक्तुवद्विभक्तिव्यत्ययोऽत्र न भवति, तत्र सक्तुसाधकेन होमेनाऽपूर्वम्, इह दानकर्मभूतेन दण्डेन संस्कारः, न तु दण्डसाधनकेन दानेनेति वैषम्यम् ।

उपयुक्तस्य संस्कारादुपयोक्तव्यसंस्क्रिया ।
गरीयसी प्रशास्तुश्च दृष्टं तेन प्रयोजनम् ॥ ५१ ॥

स्थित्वा हि प्रैषानुवचने कुर्वत आलम्बनम्भवतु दृष्टार्थ एव दण्ड इति, मैत्रावरुणार्थं दण्डदानं प्रयोजकं दण्डस्येति, अग्नीषोमीयविकारे निरूढपशौ असत्यपि दीक्षिते, मैत्रावरुणार्थेन दण्डदानसिद्धिः।

इति षष्ठं दण्डदानस्यार्थकर्मताधिकरणम्।

---

प्रासनस्य प्रतिपत्तिकर्मताधिकरणम्॥ ७॥

**उत्पत्तौ येन संयुक्तं तत्तदर्थं श्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात्प्रतिपत्तिः स्यात्॥ १९॥**

'कृष्णविषाणया कण्डूयते' इति विधाय श्रूयते 'चात्वाले कृष्णविषाणाम् प्रास्यतीति। तत्र संशयः—किं चात्वाले प्रासनमर्थकर्म? उत प्रतिपत्तिरिति।

तत्र—न द्रव्यस्य कृतार्थस्य संस्कारेण प्रयोजनम्।
प्रतिपत्तिरतो नेयमिडास्विष्टकृदादि च॥ ५२॥

चात्वाले प्रासनम्, इडाभक्षणम्, स्विष्टकृदित्येवमादि यत्किञ्चित् करणद्रव्याश्रयं कर्म तत्सर्वमर्थकर्म निर्वृत्तेऽर्थे संस्कारेण प्रयोजनाभावात्।

उच्यते—कृतार्थमपि तु द्रव्यमाकीर्णकरमित्यतः।
प्रतिपत्तिमपेक्षेत तद्विधानमतो वरम्॥ ५३॥

अपेक्षिततया प्रतिपत्तिविधौ निश्चिते, तद्बलादेव तल्लोपे, निर्वृत्तमपि प्रयोजनं विपद्यत इति कल्प्यते।

इति सप्तमं प्रासनस्य प्रतिपत्तिकर्मताधिकरणम्।

---

अवभृथगमनस्य प्रतिपत्तिकर्मताधिकरणम्॥ ८॥

**सौमिके च कृतार्थत्वात्॥ २०॥ अर्थकर्म वाऽभिधानसंयोगात्॥२१॥ प्रतिपत्तिर्वा तन्न्यायत्वाद्देशार्थाऽवभृथश्रुतिः॥२२॥**

'वारुणेनैककपालेनावभृथमभ्यवयन्ती'ति विधाय, पुनराम्नायते-यत्किञ्चित् सोमलिप्तम्, तेनावभृथं यन्ती ति। किमवभृथसाधनं, सोमलिप्तम्, उतावभृथदेशे नयनमस्य प्रतिपत्तिरिति।

तत्रावभृथशब्देन श्रुत्या कर्माऽभिधीयते।
तत्साधनतया सोमलिप्तमुक्तं तृतीयया ॥ ५४ ॥
देशेऽवभृथशब्दस्य प्रकृतौ लक्षणा भवेत्।
सोमलिप्तं हविष्ट्वेन चोद्यतेऽवभृथं प्रति ॥ ५५ ॥

उच्यते—उत्पत्तिवाक्यविहितपुरोडाशावरोधतः।
हविष्ट्वेन तु सम्बन्द्धुं सोमलिप्तन्न शक्नुयात् ॥

'यन्ती'त्यनेन सोमलिप्तावभृथयोः सम्बन्धविधौ सति, अत्यन्तम् वाक्यं स्यात्।

उद्दिश्य सोमलिप्तन्तु यानमात्रं विधीयते।
धात्वर्थोऽवभृथपदं तं देशं लक्षयिष्यति ॥ ५६ ॥

अवभृथदेशं गच्छन्तः सोमलिप्तान्यादाय गच्छेयुः। तानि तद्देशे प्रक्षेप्तव्यानीत्यर्थः।

इत्यष्टममवभृथगमनस्य प्रतिपत्तिकर्मताधिकरणम्।



कर्तृदेशकालविधीनां नियमाधिकरणम् ॥ ९ ॥

**कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् ॥ २३ ॥**
**नियमार्था वा पुनश्श्रुतिः ॥ २४ ॥**

दर्शपूर्णमासयोश्चत्वार ऋत्विजः, समे यजेत, पौर्णमास्यां पौर्णमास्या-यजेत, व्रीहिभिर्यजेत, सोमेन यजेतेत्यादि यत्किञ्चित्कारकश्रवणम्, तत्सर्व-मुदाहृत्य विचार्यते—किमनुवादमात्रम्? उत विधिरिति।

तत्र सर्वक्रियाविधेरेव कारकं प्राप्यते पुनः।
ततस्तन्न विधातव्यमप्राप्ते ह्यर्थवान् विधिः ॥ ५७ ॥
विषमादिनिवृत्त्यर्थं समादिश्रवणं, यदि।
परिसंख्या प्रसज्येत नातोऽन्याऽस्ति विधेर्विधा ॥ ५८ ॥

समादिस्वरूपं विषमादिनिवृत्तिर्वा विधीयेत, स्वरूपन्तावन्न विधातव्यम्, प्राप्तत्वात्। विषमादिनिवृत्तिविधौ परिसंख्या प्रसज्येत, सा च त्रिदोषा। न च प्रकारान्तरं विधिरूपं लभामहे, येनैते परिसंख्यादोषमनासाद्यैव विधित्वं लभेरन् तस्मादनुवादः।

नैवम्—नियमेन न हि प्राप्तिः समादीनां क्रिया विधेः ।
समे वा विषमे वापि सोमेनाऽन्येन वा यजिः ॥ ५९ ॥
प्राप्नोति तेन सोमादेः प्राप्तिर्न स्यादपि क्वचित् ।
यस्मिन्पक्षे न सोमादेः प्राप्तिस्तत्र विधिर्भवेत् ॥ ६० ॥
नैषामतोऽनुवादत्वम्परिसंख्या च नासजेत् ।
अप्राप्तिपक्षसद्भावान्नियमार्थो विधिः स्थितः ॥ ६१ ॥

इति नवमं कर्तृदेशकालविधीनां नियमाधिकरणम् ।

द्रव्यगुणविधानस्य नियमार्थताधिकरणम् ॥ १० ॥

## तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसंयोगात् ॥ २५ ॥

'श्वेतम्पशुमालभेत, शुक्लानां व्रीहीणाञ्चरुमि' त्यादौ गुणानाममूर्तानाम् क्रियासाधनभावासम्भवान्न तादर्थ्येन नियमः सम्भवति । द्रव्योपादानानुषङ्ग-प्राप्तानामनुवादमात्रं गुणश्रवणम् । 'शुक्लानाञ्चरुमि'त्यादौ चापरो विशेषः शुक्लस्य चरुविशेषणत्वात् शब्दतोऽपि न क्रियासम्बन्धो गम्यत इति, असत्यपि साक्षात्क्रियान्वये द्रव्यद्वारेण तदुपपत्तेः, शुक्लविशिष्टचरोः क्रियार्थत्वादत्रापि नियमविधिः ।

इति दशमं द्रव्यगुणानां नियमर्थताधिकरणम् ।

अवघातादिसंस्कारविधानस्य नियमार्थताधिकरणम् ॥ ११ ॥

## संस्कारे च तत्प्रधानत्वात् ॥ २६ ॥

'व्रीहीनवहन्ती'ति नावघातस्य यागार्थतया श्रवणं देशादिवत्, न च चरुवद्विशिष्टं द्रव्यं क्रियासम्बन्धि श्रूयत इति, तण्डुलाक्षिप्तक्रियानुवादमात्र-मित्यधिकाशङ्का ।

उत्तरम्—यद्यपि न श्रवणमस्ति, तथाऽपि प्रकरणवशात् प्रधानसाधनम् लक्षयित्वा, तत्र विनियुक्तस्यावघातादेः प्रधानाङ्गत्वमस्त्येवेति तत्प्रयुक्तिरविहतेति।

इति एकादशमवघातादिसंस्काराणां नियमार्थताधिकरणम् ।

### होमस्वरूपनिरूपणाधिकरणम् ॥ १२ ॥

यजतिचोदनाद्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ॥ २७ ॥

तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात् ॥ २८ ॥

यागाङ्गभूतानां देशादीनां नियमविधौ स्थिते, तत्प्रसङ्गाद्यागादिलक्षणम् क्रियते, देवतोद्देशेन स्वद्रव्यपरित्यागो यागः, स एव प्रक्षेपाधिको होमः, स्वीयस्य परकीयत्वापादनं दानमिति।

### वार्तिकमतम्

आचार्यस्तु लोकसिद्धपदार्थव्यवहारिण्यां मीमांसायां तल्लक्षण-मनुचितमिति, यागाद्यनुष्ठानप्रकारकथनमिति व्याख्यातवान्। यो-देवतामुद्दिश्य द्रव्यं त्यजति, तेन यागचोदनार्थः सम्पादितो भवति, प्रक्षेपन्त्व-धिकं कुर्वता होमविध्यर्थ इति, एवञ्च चोदनाग्रहणमर्थवद्भवति, न लक्षणपरत्वे।

प्रदेशान्तरे त्विदं सूत्रमन्यथा व्याख्यातमाचार्येण। पूर्वं दर्शादियागा-नुवादेन देशादयो नियम्यन्त इत्युक्तम, तत्रेयमाशङ्का कथं नु दर्शादेर्यागत्वम्, न ह्युत्पत्तिचोदनास्वाग्नेयादिषु यजिः श्रूयत इति। तत्रेदमुच्यते द्रव्यदेवताक्रियम् श्रूयमाणं यजतिचोदनेति मन्तव्यम्। तदविनाभावात्तस्येत्येकस्यार्थः,। इतरस्य तु यजत्यभिहिते कर्मणि पुनर्जुहोतिश्रवणं 'चतुरवत्तं जुहोती'ति तत्कथमुप-पादनीयम्, यागहोमयोर्भेदात्, अत आह 'आसेचनाधिकः स्यात्प्र'क्षेपमात्रम् तत्राप्राप्तं चतुरवत्तं संस्कारार्थं विधीयते। यागांशस्तु प्राप्तानुवाद इत्यक्ष-राञ्जस्यं सूत्रयोर्भवति।

इति दशमं यागहोमलक्षणाधिकरणम्।

---

### बर्हिष आतिथ्यादिसाधारण्याधिकरणम् ॥ १३ ॥

विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् ॥ २९ ॥

अपि वोत्पत्तिसंयोगादर्थसम्बन्धोऽविशिष्टानां प्रयोगैकत्वहेतुः स्यात् ॥ ३० ॥

'यदातिथ्यायां बर्हिः, तदुपसदामि'ति किमिदमाच्छिद्य विधानम्? उत निरिष्टिकोपदेशः? अथवा धर्मातिदेशः? अथवा बर्हिःसाधारण्यविधिरिति।

डित्थस्य गौर्डपित्थाय तत आच्छिद्य दीयताम् ।
ईदृग्वचनसारूप्यादाच्छिद्य विधिरिष्यते ॥ ६२ ॥
एवञ्चाछिद्यमानस्य बर्हिषः स्यादनर्थकः ।
आतिथ्यायां विधिस्तस्मान्निरिष्टिकविधिर्वरम् ॥ ६३ ॥
शिष्टाचारविरोधात्तु नैतदप्युपपद्यते ।
तस्माद्धर्मातिदेशोऽयमातिथ्यायां हि यादृशम् ॥ ६४ ॥
अश्ववालादिभिर्बर्हिस्तादृगेवोपसत्स्वपि ।
बर्हिःशब्देन धर्माणां लक्षणैवं भवेदतः ॥ ६५ ॥
साधारण्यविधिर्ज्यायांस्तत्र दोषो न कश्चन ।
आतिथ्यार्थमुपादेयं यद्बर्हिस्तन्न केवलम् ॥ ६६ ॥
तदर्थत्वेन सङ्ग्राह्यन्तदेवोपसदामपि ।
बर्हिर्धर्माश्च तद्द्वारा तद्वत्सर्वाङ्गतामियुः ॥ ६७ ॥

इति त्रयोदशमातिथ्याबर्हिषि साधारण्याधिकरणम् ।

इति शास्त्रदीपिकायां चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

---

# अथ चतुर्थाध्याये तृतीयः पादः

## पर्णमय्यधिकरणम्

### द्रव्यसंस्कारकर्मणां क्रत्वर्थताधिकरणम् ॥ १ ॥

**द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात् ॥ १ ॥**
**उत्पत्तेश्चातत्प्रधानत्वात् ॥ २ ॥ फलं तु तत्प्रधानायाम् ॥ ३ ॥**

'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोती'त्यत्र संशयः—किं पर्णमयीत्वं क्रत्वर्थम्, उत पुरुषार्थम्, आहोस्विदुभयार्थमिति । तत्र फलश्रवणात् पुरुषार्थत्वम् । यद्यपि चैवंजातीयकस्य फलविधित्वमौदुम्बराधिकरणे निराकृतम्, तथाऽपि विहितस्य पर्णत्वस्य फलापेक्षायां क्रतुप्रयोगवचनात्सन्निहितमपापश्लोकश्रवणमेव रात्रिसत्रप्रतिष्ठावद्विपरिणामेन फलमाश्रयितुं युक्तम् ।

अथवा साधनांशमात्रमौदुम्बराधिकरणे विचारितम्। विधिरहितस्य-'भवती'त्येतावन्मात्रस्य साधनप्रतिपादकत्वन्न सम्भवतीति, विध्युन्मीलनायैवार्थ-वादत्व'मूर्जं पशूनाप्नोति, न स पापं श्लोकं शृणोतीत्या'देरोश्रयितव्यम्। इह तदुपेक्ष्य, अभ्युपेत्य वा साध्यांशो विचार्यते, तत्रैवंजातीयकमपि फलप्रतिपादकम्, लोके दर्शनात्, अतः पुरुषार्थमित्येकः पक्षः क्रत्वर्थजुहूद्देशेन विधीयमानं भवतु क्रत्वर्थं फलसंयोगात्तदर्थमपि स्यात्, दध्यादिवदित्यपरः।

सिद्धान्तस्तु युक्तं दध्नः संयोगपृथक्त्वादुभयार्थम्। इह त्वेकं वाक्यम्, तदुभयपरत्वे भिद्येत। तन्न तावदुभयार्थम्, न च 'शृणोती'ति वर्तमानापदेशात्साध्यत्वम् शक्यं प्रतिपत्तुम्। न च विपरिणामेन फलपरत्वम्, यथास्थितस्वरूपहानप्रसङ्गात्, पर्णतायाश्च जुहूपस्थितक्रत्वर्थत्वेन निराकाङ्क्षत्वादयुक्तं शब्दस्वरूपस्य बाधनम्, न च पर्णत्वस्य फलं प्रति विधीयमानस्याश्रयः प्रकृतोऽस्ति। तत्र वाक्येनैवाश्रये दीयमाने वाक्यभेदः। तस्मादपापश्लोकश्रवणस्याऽर्थवादत्वात्क्रत्वर्थमेव-पर्णमयीत्वम्।

इति प्रथमं पर्णमय्यधिकरणम्।

---

### नैमित्तिकानां बार्हद्गिरादीनामनित्यार्थत्वाधिकरणम्॥ २॥

### नैमित्तिके विकारत्वात्क्रतुप्रधानमन्यत्॥ ४॥

'अपः प्रणयती'ति प्रकृत्य श्रूयते—'मृन्मयेन प्रतिष्ठाकामस्य प्रणये'-दिति, तथा 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यादि'ति तत्र। संशयः—यदेतत्काम्यम् मृन्मयम्, नैमित्तिकञ्च बार्हद्गिरम्, तदेव नित्यार्थे, उत अन्यदुपादेयमिति तत्र। नित्येऽपि प्रयोगे प्रणयनब्रह्मसामादेः साधनापेक्षत्वादश्रुतसाधनान्तरकल्पनाद्वरङ्कामनिमित्तयोरपि श्रुतस्य मृन्मयादेः सन्निहितस्य नित्यार्थेऽप्युपादानम्। वारणाभीवर्तदिनित्यविधिमदृष्ट्वा पूर्वः पक्षः। भवन्ति हि ईदृशान्यप्यधिकरणानि'ऐन्द्रवायवे-तु वचनात्प्रतिकर्मभक्षः स्यादि १०-५-६२ त्यादी'न नित्यावाधर्वा नास्तीति कृत्वा चिन्त्यते।

अथ वा 'वारणो' यज्ञावचर इति 'अभीवर्तं ब्रह्मसामे'ति च सामान्य-विधिरयम्। मृन्मयम्, बार्हद्गिरञ्च विशेषतः प्रणयने, द्वादशाहे च। अतस्तदेव नित्यार्थेऽपि सन्निधिविशेषाद् युक्तमिति मन्यते।

ब्राह्मणेन निमित्तेन बार्हद्गिरमिति श्रुतम् ।
मृन्मयश्च प्रतिष्ठायान्नित्ये स्यातामतो न तेन ॥ ६८ ॥

ह्यन्यत्र श्रुतं सन्निहितमपि अन्येन सम्बद्धुमर्हति, साधनाकाङ्क्षा च नित्यस्यार्थाक्षिप्तेन, सामान्यविहितेन वा निवर्तते, न तु नैमित्तिकेन, सन्निधिमात्रस्य सम्बन्धकारणत्वाभावात्, निमित्तश्रुतिविरोधाच्च । सति, असति च निमित्ते क्रियमाणस्य कीदृशं नैमित्तिकत्वम्, तस्मादन्यन्नित्यार्थम् ।

इति द्वितीयं नैमित्तिकानामनित्यार्थताधिकरणम् ।

---

[ संयोगपृथक्त्वन्यायः ] दध्यादेर्नित्यनैमित्तिकोभयार्थताधिकरणम् ।

**एकस्य तूभयत्वे संयोगपृथक्त्वम् ॥ ५ ॥ शेष इति चेत् ॥ ६ ॥ नार्थपृथक्त्वात् ॥ ७ ॥**

अग्निहोत्रे 'दध्नेन्द्रियकामस्य जुहुयादि'ति श्रूयते । तत्र किङ्काम्यार्थमेव दधि नित्येऽपि स्यात् ? उत ततोऽन्यत् नित्यमिति संशये ।

पूर्वाधिकरणन्यायात्काम्यत्वेन श्रुतं हविः ।
न नित्यार्थमुपादेयमतोऽऽन्यन्नित्यमिष्यते ॥ ६९ ॥

नन्वत्र दध्येव नित्यार्थे श्रूयते 'दध्ना जुहोती'ति ।

नैवमेतस्य वाक्यस्य कामवाक्यैकवाक्यता ।
गम्यतेऽतो नित्यार्थे पृथग्दधि विधीयते ॥ ७० ॥

दध्नेन्द्रियं कुर्यादित्युक्ते, किमाश्रितेनेत्यपेक्ष्यते, होमसंयुक्तस्य च दध्नः फलापेक्षा, तयोरेवमाकाङ्क्षावशादेकवाक्यता—यद्दध्नेन्द्रियं कुर्यात्, तद्धोमाश्रितेन, यच्च दध्ना जुहोति, तदिन्द्रियार्थमिति । तस्मान्नित्ये दध्यविधानात्काम्यमेव तत् स्यात् ।

नैवम्—द्वयोरेकस्य वाकाङ्क्षा भवेद्यदि ततस्तयोः ।
प्रकल्प्यतैकवाक्यत्वं निराकाङ्क्षन्त्विहोभयम् ॥ ७१ ॥

कामवाक्यन्तावद्धिपरिवृत्तिलब्धहोमाश्रयं नाश्रयसम्बन्धकरं प्रमाणमपेक्षते । दधिस्वरूपमपि लोकसिद्धं नोक्थ्यव्यूढादिवदलौकिकम् । अतो न-

तदर्थमन्यापेक्षम्, दध्नोऽपि फलवद्धोमसंयुक्तस्य न फलान्तरापेक्षा। तस्मात्पृथक्संयोगादुभयार्थन्दधि स्यात्।

इति दध्यादेर्नित्यनैमित्तिकोभयर्थताधिकरणम्।

---

पयोव्रतादीनां क्रतुधर्मताधिकरणम् ॥ ४ ॥

द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् ॥ ८ ॥ पृथक्त्वाद्व्यवतिष्ठेत ॥ ९ ॥

ज्योतिष्टोमे 'पयो ब्राह्मणस्य व्रतमि'त्यादि श्रूयते। तत्पुरुषार्थम्, उत क्रत्वर्थमिति संशये, पुरुषसंयोगात् व्रतस्य पुरुषप्रीत्यर्थतया लब्धफलस्य जञ्जभ्यमानमंत्रवचनन्यायासम्भवात्, पयोनियमस्यापि व्रतसंयुक्तस्य तत्फलनिराकाङ्क्षत्वात्, न प्रकरणग्रहणमिति पुरुषार्थत्वम्।

उच्यते—नियमन्त्वन्तरेणापि पुरुषप्रीतिदर्शनात्।
नियमस्य फलङ्कल्प्यं तच्च प्रकरणात्क्रतोः ॥ ७२ ॥

कल्पनीये हि फले प्रकृतक्रतुफलसिद्धिरेव तदधिकृतसंस्कारद्वारेण पयोनियमस्य फलं युक्तमाश्रयितुमिति क्रत्वर्थता।

इति चतुर्थं पयोव्रताधिकरणम्।

---

विश्वजिदादीनां सफलत्वाधिकरणम् ॥ ५ ॥

चोदनायां फलाश्रुतेः कर्ममात्रं विधियेत न ह्यशब्दं प्रतीयते ॥ १० ॥ अपि वाऽऽम्नानसामर्थ्याच्चोदनार्थेन गम्येतार्थानामर्थवत्त्वेन वचनानि प्रतीयन्तेऽर्थतोप्यसमर्थानामानन्तर्येप्यसम्बन्धस्तस्माछ्रुत्येकदेशः सः ॥ ११ ॥

'विश्वजिता यजेते'त्यादिष्वश्रुतफलासु चोदनासु फलमस्ति, नेति संशयः।

नास्त्येव फलमेतस्य चोदनायां फलाश्रुतेः।
शब्दगम्यमदृष्टं हि फलन्तेन विना कथम् ॥ ७३ ॥

प्रत्येतुं शक्यते तच्चेदध्याहारेण कल्प्यते ।
परिपूर्णमिदं वाक्यं नाध्याहारमपेक्षते ॥ ७४ ॥

ननु यागेन कुर्यादित्युक्ते किङ्कुर्यादित्यपेक्षणादध्याहारोऽवकल्प्यते, सत्यम्, यदि यागेन कुर्यादित्युच्येत, यागङ्कुर्यादिति तूक्ते परिपूर्णत्वान्नाध्याहारापेक्षा। फलश्रवणे हि सति विध्यानुगुण्यात् समानपदोपात्तधात्वर्थातिक्रमेण वाक्यसमर्पितं फलम्भाव्यत्वेन भावनाऽवलम्बते ।

तदभावे तु धात्वर्थभाव्यत्वङ्को निवारयेत् ।
तथा च सति सम्पूर्णं वाक्यन्नाध्याहृतिक्षमम् ॥ ७५ ॥

नन्वेवं यागकर्तव्यतायामुच्यमानायां न कश्चित्प्रवर्तते, सत्यम् । को दोषः । विध्यानर्थक्ये, तदपि भवतु । निष्फलस्य कर्त्तव्यवचनमप्रमाणं स्यादित्येवमस्तु । 'क्षेमोऽयं पन्थाः, गच्छतु भवानि'त्याद्यनाप्तवाक्यवत्किङ्कुर्मः । न च कर्त्तव्यताबलादेव फलमुपकल्पयितुं शक्यम् । तदात्वे दुःखदर्शनात्प्रत्यक्षविरोधादायत्याम्- [ उत्तरकाले ] च फलं । न कृतमात्रविनष्टेन यागेन शक्यते कर्तुम् । नचापूर्वद्वारेण सम्भवति, तदभावात् ।

श्रुते हि फले शृङ्गग्राहिकतया धात्वर्थस्य तत्साधनत्वे शब्देन प्रतिपादिते तद्बलाददृष्टमप्यपूर्वं कल्प्यते । यागक्रियामात्रपर्यवसिते तु शब्दे कथमपूर्वसिद्धिः, तदभावे च कथङ्कालान्तरभाविफलकल्पनम् ? तदितरेतराश्रयं भवति—फलाधीनमपूर्वम्, तदधीनं च फलमिति ।

## प्राभाकरमतोपन्यास-निरासौ ।

असत्यपि भाव्यापेक्षणे कस्य यागः कर्त्तव्य इति नियोज्यापेक्षणात्फलकामस्याऽध्याहार इति चेत् । न । अध्याहारमन्तरेणापि तल्लाभात् । यथा निषेधाधिकारेषु अप्रवृत्तस्य निवर्तनासम्भवान्नव्यर्थावच्छेदकतयोपयुक्तापि प्रवृत्तिरेव विशेषणमिति, तद्विशिष्टस्य नियोज्यत्वावगमात्, न प्रयुक्तिलाघवमाश्रित्य फलकामोऽध्याह्रियते, तथा प्रवृत्त्युपदेशेऽपि अशक्तस्याजीवतश्च तदसम्भवात्, शक्तो जीवंश्चाधिकारी लब्ध इति किमध्याहारेण ?

तस्मान्निष्फलमेवेदङ्कर्मेति प्राप्ते उच्यते ।
विधियुक्ता क्रिया नैव धात्वर्थम्भाव्यमृच्छति ॥ ७६ ॥
भाव्येन च विना वाक्यं नव तत्परिपूर्यते ।
वाक्यसम्पूरणायाऽतः फलमध्याहरिष्यते ॥ ७७ ॥

असत्यपि फलश्रवणे चेतनाप्रवर्तनात्मकविध्यविरुद्धा भावना धात्वर्थम् तावन्न कथञ्चिद् भाव्यमङ्गीकरोतीति, तदतिरिक्तभाव्यापेक्षणात्, अतल्लाभाद-परिपूर्णं वाक्यम्फलपदाध्याहारमपेक्षते। तच्च लौकिकमपि वेदवाक्यैकदेशतया-अध्याहृतं वैदिकमेव भवति। किमुत यदा वैदिकमेवान्यत्र स्थितमध्याह्रियते।

कथम्पुनर्व्यपेतस्याऽनुषङ्गाभ्युपगमः, नायमनुषङ्गः, किन्त्वध्याहारः। स च यत्र कचिदपि व्यवस्थितस्याविरुद्धः।

तेनाश्रुतफलानामप्यध्याहृतफलान्वयात्।
सर्वेषाङ्कर्मणामत्र फलवत्त्वमवस्थितम्॥ ७८॥

इति पञ्चमं विश्वजिदादीनां सफलत्वाधिकरणम्।

---

विश्वजिदादीनामेकफलताधिकरणम॥ ६॥

तत्सर्वार्थमनादेशात्॥ १३॥ एकं वा चोदनैकत्वात्॥ १४॥

स्थिते फलार्थत्वे, किं सर्वफलार्थम्, उतैकार्थमिति। विशेषानिर्देशात्स-र्वार्थत्वे प्राप्ते—

अभिधीयते—येनैवैकेन तद्वाक्यं साकाङ्क्षम्परिपूरितम्।
तेनैवैतन्निराकाङ्क्षमिति नाऽनेककल्पनम्॥ ७९॥

---

[ विश्वजिन्न्यायः ] विश्वजिदधिकरणम्॥ ७॥

स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्॥ १५॥ प्रत्ययाच्च॥ १६॥

एकं फलमित्युक्तम्। किन्तदेकमिति न ज्ञायते। अतः पुनरपि सर्वार्थ-त्वम्, अप्रमाण्यं वाऽनध्यवसायात् प्राप्नोति—

तदुच्यते—स्वर्गोऽनतिशयप्रीतिरूपो दुःखविवर्जितः।
भूयांसोऽभिलषन्त्येनमल्पे त्वल्पसुखन्नराः॥ ८०॥

सति सम्भवे शास्त्रस्य भूयोविषयत्वं न्याय्यम्, अविशेषप्रवृत्तस्यातिसङ्कोच-परिहारात्। स्वर्गश्च दुःखासंयुक्तनिरतिशयसुखात्मकः सर्वेषामभिमतः। पश्वादि-सुखन्तु दुःखानुषक्तम्, अल्पञ्च केचिदेव प्रार्थयन्ते। प्रत्यवायपरिहारस्तु सर्वाभि-लषितोऽपि प्रत्यवायापेक्षया कियताऽपि विलम्बेन हृदयमागच्छति।

ततस्तु सुकरज्ञानं सुखमेव परम्फलम् ।
तच्चानतिशयत्वेन स्वर्गात्मकमिति स्थितम् ॥ ८१ ॥

[ रात्रिसत्रन्यायः ]

रात्रिसत्रस्यार्थवादिकफलकत्वाधिकरणम् ॥ ८ ॥

**क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ॥ १७ ॥ फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् ॥१८॥ अङ्गेषु स्तुतिः परार्थत्वात् ॥१९॥**

'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती'ति श्रुतम् । रात्रिशब्देन 'ज्योतिर्गौरायुरि'त्यादिवाक्योत्पादितानि सौत्यानि कर्माण्युच्यन्ते । तदिदम् रात्रिसत्रं स्वर्गार्थम्, उत प्रतिष्ठार्थमिति संशयः । तदर्थञ्च 'प्रतितिष्ठन्ती'ति किमयम्फलविधिः, उतार्थवाद इति ?

अपापश्लोकवत्तत्र वर्तमानापदेशतः ।
फलविध्यसमर्थत्वात्तद्वदेवार्थवादता ॥ ८२ ॥
अनादिष्टफलत्वेन तस्मात्स्वर्गफलार्थता ।
निर्देशात्तु प्रतिष्ठैव फलत्वेनात्र गम्यते ॥ ८३ ॥
जुहूवन्नैव कर्मैतन्निराकाङ्क्षं फलं प्रति ।
कल्पनीयं फलं तत्र विनामोऽध्याहृतेर्वरम् ॥ ८४ ॥

स्वर्गस्याध्याहारे तत्स्वरूपम्, तस्य च श्रुतकर्मसम्बन्धः, फलत्वञ्च कल्प्यम्, प्रतिष्ठायास्तु स्वरूपमेकवाक्यत्वञ्च क्लृप्तम् . फलत्वसिद्ध्यर्थं सन्नन्ततया विपरिणाममात्रं लघीयः,'उपयन्ती'त्यपि वर्त्तमानापदेशो विधिरूपेण विपरिणम्यते। यच्छब्दश्च व्यवहितान्वयः। तदयमर्थः—ये प्रतितिष्ठासन्ति, त एता रात्रीरुपेयुरिति। एवं हि धर्ममात्रकल्पनाल्लाघवम्, इतरथा तु सर्वस्यैवार्थवादत्वात्सकल एव विध्युद्देशोऽप्रतिपन्नफलविशिष्टः कल्पनीयः—स्वर्गकामा एता रात्रीरुपेयुरिति। कल्पितोऽप्यसौ प्रतिष्ठार्थवादो न सुखं सङ्गच्छते । यस्मात्प्रतिष्ठन्ति, तस्मात् स्वर्गकामा उपेयुरिति किं केन संगच्छते। ततश्च—यद्यप्यध्याहारः स्यात्, तथाऽप्यर्थवादसङ्गत्यर्थं प्रतिष्ठैवाध्याहर्तव्येति प्रतिष्ठार्थता ।

इत्यष्टमं रात्रिसत्रस्यार्थवादिकफलार्थत्वाधिकरणम् ।

कास्यानां श्रुतफलत्वाधिकरणम् ॥ ९ ॥

**काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः ॥ २० ॥ वीते च कारणे नियमात् ॥२१॥ कामो वा तत्संयोगेन चोद्यते ॥२२॥ अङ्गे गुणत्वात् ॥ २३ ॥ वीते च नियमस्तदर्थम् ॥ २४ ॥**

यत्र स्वर्गादन्यत्फलं श्रुतं–'सौर्यं चरुन्निर्वपेद् ब्रह्मवर्चसकामः' इति। तत्किं स्वर्गार्थम्, श्रुतफलार्थञ्च ? उत श्रुतफलार्थमेवेति संशयः।

तत्र—विधिः सामान्यरूपेण सर्वेषां हि प्रवर्तकः।
स्वर्गश्चाभ्यर्थितः सर्वैरिति तादर्थ्यनिश्चयः ॥ ८५ ॥

कतिपयाभिलषितब्रह्मवर्चसाद्यर्थत्वे विधेरविशेषतः सर्वपुरुषान् प्रति प्रवर्तकत्वमवगतं बाध्येत, सर्वाभिलाषितस्वर्गाद्यर्थत्वे तु तदनुग्रहः स्यादिति स्वर्गार्थता। ब्रह्मवर्चसादिश्रवणन्त्वन्वाचयत्वेन व्याख्येयम्, काष्ठाहरण इव शाकाहरणम्। सौर्येण स्वर्गं कुर्यात् ब्रह्मवर्चसमपि भवतीति। एवञ्च विधित एव स्वर्गार्थत्वेन परार्थत्वाद्रात्रिसत्रे फलश्रवणमर्थवादः पर्णमयीन्यायादिति पूर्वाधिकरणमप्याक्षिप्तम्।

अत्रोच्यते—अविशेषप्रतीतिर्या पदमात्रेण जायते।
पदान्तरैकवाक्यत्वात् विशेषे स्थाप्यते हि सा ॥ ८६ ॥
ब्रह्मवर्चसकामादिविषयोऽयमतो विधिः।
स्याच्चेदन्वाचयस्तस्य भवेदन्योन्यसंश्रयः ॥ ८७ ॥

स्वर्गार्थत्वे हि निश्चिते स्यादन्वाचयः, तन्निश्चये च सति फलान्तरापेक्षायां स्वर्गकल्पना। तस्माद् ब्रह्मवर्चसाद्येव फलम्।

इति नवमं काम्यानां श्रुतफलार्थत्वाधिकरणम्।

---

दर्शपूर्णमासादीनां सर्वकामार्थताधिकरणम् ॥ १० ॥

**सार्वकाम्यमङ्गकामैः प्रकरणात् ॥ २५ ॥ फलोपदेशो वा प्रधानशब्दसंयोगात् ॥ २६ ॥**

'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासावि'ति किमयमनुवादः ? विधिरितिसंशये विधिभावनयोरश्रवणात्, तदभावे च साध्यसाधनसम्बन्धायोगात् वाज-

पेय-यूपयोरिव गोदोहनादिगुणकामैः पश्वादिभिर्दर्शपूर्णमासयोः सम्बन्धसद्भावात् तदपेक्षोऽयमनुवादो दर्शपूर्णमासस्तुत्यर्थ इति प्राप्ते—

ब्रूमः—षष्ठीसम्बन्धमात्रेऽपि वर्तमाना न दुष्यति।
तादर्थ्यञ्च चतुर्थ्यर्थस्तच्च प्राप्तन्न केनचित् ॥ ८८ ॥
स्यात्प्रधानफलार्थत्वमङ्गानान्तदनुग्रहात् ।
न त्वङ्गफलशेषत्वं प्रधानस्य कथञ्चन ॥ ८९ ॥
सर्वकामार्थता तस्मादप्राप्तेह विधीयते।
कर्तव्याविति च वाहार्ये विधिभावनयोः पदम् ॥ ९० ॥
उत्पत्तिचोदनाभ्यो वा प्रसिद्धे विधिभावने।
आश्रित्य फलसम्बन्धमात्रमत्रोपदिश्यते ॥ ९१ ॥

यत् दर्शपूर्णमासौकर्तव्यौ, तत् सर्वकामार्थेनेति। तस्मात्फलविधिः।

**इति दशमं दर्शपूर्णमासादानां सर्वकामार्थताधिकरणम्।**

---

**योगसिद्ध्यधिकरणन्यायः**

**दर्शपूर्णमासादीनां प्रतिफलंपृथगनुष्ठानाधिकरणम् ॥ ११ ॥**

**तत्र सर्वेऽविशेषात् ॥ ११ ॥**

किमेकस्मिन्नेव प्रयोगे सर्वे कामा भवन्ति? उत प्रयोगभेदेनेति संशये।

सर्वे युगपदेव स्युर्निमित्तस्याविशेषतः।
यादृङ्निमित्तमेकस्य तादृगेवापरस्य हि ॥ ९२ ॥

कामनावशात् विशेषः। यदेव यदा काम्यते, तदेव तदा नान्यदिति चेत्? न। अनङ्गत्वात्। न हि कामना कर्मणः, फलस्य वाऽङ्गीयेन तदभावे फलानुत्पत्तिः स्यात्। ननूपादेयभूतस्य कर्त्तुर्विशेषणभूता कामना कर्माङ्गमेव, न कामिन उपादानम्। उद्दिश्य हि कामिनं कर्मोपदिश्यत इति षष्ठे वक्ष्यते। अत एव लिङ्गस्याविवक्षा।

**प्राभाकरमतनिरासः।**

योऽपि कर्मण्यनुपादेयस्याऽपि कामिनोऽपूर्वं। प्रति गुणभूतत्वात् कामनाऽपि नियोगसिद्धावङ्गमिति वदति, तस्याऽपि लिङ्गविवक्षा दुर्वारैव।

अत्राचायमपरो विशेषः। यत्र फलकामो न श्रूयते, फलान्येव चतुर्थ्यन्तेन निर्दिश्य तादर्थ्येन कर्म विधीयते। कामोपबन्धस्तु फलत्वसूचनार्थः, न स्वयं तन्त्रम्,। अपि च ये युगपत्काम्यन्ते, तेषामानिवार्यैव युगपदुत्पत्तिः स्यात्। तस्माद्युगपत्स्युः एवं प्राप्ते—

ब्रूमः—कामोद्देशेन कर्मैव साधनत्वेन चोद्यते।
तेषां चोद्दिश्यमानानां साहित्यं न विवक्षितम्॥ ९३॥
एकैकस्यैव कामस्य निरपेक्षस्य साधनम्।
कर्मेदं चोद्यते तच्च सापेक्षत्वे विरुध्यते॥ ९४॥

यादृशं हि कारणं यादृशस्य कार्यस्य निरपेक्षस्य निष्पादकम्। तदेकमेव युगपज्जनयति। यथा मृत्पिण्डो युगपदेकमेव घटमुत्पादयति, नानेकम्। कामनावशाच्च विशेषः। विधिर्हि चेतनप्रवर्तनात्मकः समीहितस्यैव फलत्वमुपकल्पयति, न पश्वादिस्वरूपस्य। यद्यपि युगपत्कामनात्तेष्वपि कर्मणो युगपदसमर्थत्वात्, यद्युद्दिश्य यदा प्रयुज्यते, तदा तदेव भवति, नान्यत्। यथा ह्येकफलानि कर्माणि फलस्य स्वर्गस्य, पशोर्वा साधनत्वेन चोदितानि, तदेकमेव तथाविधम् फलं जनयन्ति, नानेकम्। इतरथा सकृदेव यावदिष्टफलं सिद्धमिति, न काम्यमेकङ्कर्म पुनः प्रयुज्येत, इष्यते च पुनः प्रयोगः। तथेहाप्येकमेव युगपत्फलम्, न च साहित्येनैवात्र कामानां फलत्वम्, नैकैकस्येति वाच्यम्। साहित्यस्य विवक्षितत्वादित्युक्तम्। अतः पर्यायेण कामः।

इत्येकादशं योगसिद्ध्यधिकरणम्।

—:०:—

काम्यानामैहिकामुष्मिकफलवत्त्वाधिकरणम्॥ १२॥

योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगात्॥ २८॥

इदानीमैहिकामुष्मिकत्वं फलानाञ्चिन्त्यते। स्वर्गः सर्वदाऽऽमुष्मिक एव, वृष्टिः, अभिचारः, वैश्वानरफलञ्च पुत्रगतब्रह्मवर्चसाद्यैहिकमेव कामनावशात्। पश्वादयस्तु चिन्त्यन्ते किमामुष्मिका एव? उताऽनियताः।

तत्र—प्रतिग्रहादिकं दृष्टं पश्वादेः कारणान्तरम्।
देहारम्भकतैवातश्चित्रादेः फलहेतुता॥ ९५॥

पश्वादिस्वरूपस्य प्रतिग्रहाद्युपायान्तरदर्शनाददृष्टानपेक्षत्वात् , देहस्य तु मातापितृसंयोगमात्रेणानुत्पत्तेः कारणान्तरापेक्षणात् विशिष्टफलोपभोगार्हशरीरारम्भकत्वमेव चित्रादेः पश्वादिहेतुत्वमिति, आमुष्मिकाण्येव पश्वादीनीति प्राप्ते—

अभिधीयते—साध्यत्वमेव पश्वादेः शब्देन प्रतिपाद्यते।
अमुत्र वेह वेत्येवन्नास्ति शब्दो नियामकः ॥ ९६ ॥

देहारम्भमुखत्वञ्च फलानामप्रमाणकम्।
विपाकः कर्मणां येषाम्प्राग्देहविनिपाततः ॥ ९७ ॥

प्राप्तः तानीह भुज्यन्ते ततोऽन्यानि भवान्तरे।
दैवम्पुरुषकारश्च पश्वादेः कारणद्वयम् ॥ ९८ ॥

तदुक्तं भाष्यकारेण; 'तच्चैव हि तत्र कारणम्' शब्दश्चे शा. भा.पृ.५९ ति। तस्मादनियमः।

इति द्वादशं काम्यानामैहिकामुष्मिकफलत्वाधिकरणम्।



सौत्रामण्यादीनां चयनाद्यङ्गताधिकरणम् ॥ १३ ॥

**समवाये चोदनासंयोगस्यार्थवत्त्वात् ॥ २९ ॥ कालश्रुतौ काल इति चेत् ॥ ३० ॥ नासमवायात्प्रयोजनेन ॥ ३१ ॥**

'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'ति 'किमङ्गप्रयोजनसम्बन्धोऽयम्-वाजपेयाङ्गत्वेन बृहस्पतिसवस्य विधिः ? उत कालार्थः ? संयोगो वाजपेयोत्तरकालत्वं बृहस्पतिसवस्योपदिश्यत इति संशये।

उभयोर्वाजपेयस्य बृहस्पतिसवस्य च।
प्रज्ञातफलयोर्नैवमिथोऽङ्गाङ्गित्वसम्भवः ॥ ९९ ॥

न च कर्मान्तरं युक्तं लक्षणा हि तथा भवेत्।
क्त्वाप्रत्ययेन कालस्तु श्रुत्यैवोक्तो न लक्षणा॥ १०० ॥

प्रसिद्धस्य' तावद्बृहस्पतिसवस्य पुरोधआदिफलार्थत्वान्न वाजपेयाङ्गत्वम्, तद्धर्मककर्मान्तरविधौ तु बृहस्पतिसवः शब्दोधर्मलक्षणार्थः स्यात्।

कालविधौ तु तस्य तत्रार्थत्वात्, न काचिल्लक्षणा। तस्मात्प्रसिद्धस्य बृहस्पतिसवस्य वाजपेयपूर्वकत्वं विधीयत इति प्राप्ते—

ब्रूमः—'वाजपेयश्रुतेरेव स्यादत्यन्तपरार्थता।
तत्प्रक्रिया च बाध्येत न च दूरगतं प्रति॥ १०१॥
कालः शक्य उपादातुङ्काले कर्म हि चोद्यते।
काले च चोद्यमानं सत्कर्माविपरिवर्तनात्॥ १०२॥
प्रसिद्धात्कर्मणो भिन्नमनिर्ज्ञातप्रयोजनम्।
वाजपेयाङ्गभावेन वाक्येनैव विधीयते॥ १०३॥

वाजपेयप्रयोगं यथोक्तन्निर्वर्त्य, न तावत्येव कृती स्यात्, इदमपरमङ्गन्तस्य पश्चात्कर्तव्यमिति। एवञ्च वाजपेये किञ्चिद्विधानात्तच्छब्दानुग्रहः, अन्यथा त्वसावत्यन्तपरार्थः स्यात्, कालोपलक्षणार्थत्वात्। वाजपेयप्रकरणञ्च बाध्येत, स्थिते च कर्मान्तरत्वे, धर्मलक्षणाऽपि मासाग्निहोत्रवददोषः।

इति त्रयोदशं बृहस्पतिसवाधिकरणम्।

वैमृधादेः पौर्णमास्यङ्गताधिकरणम्॥ १४॥

उभयार्थमिति चेत्॥ ३२। न शब्दैकत्वात्॥ ३३॥

प्रकरणादिति चेत्॥ ३४॥

'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपतो'ति किम्पौर्णमास्याः वैमृधस्य चाङ्गप्रयोजनसम्बन्धः—पौर्णमास्यङ्गं वैमृधः? उत कालार्थः संयोगः? तस्मिन्काले क्रियमाणः प्रकरणादुभयोर्दर्शपूर्णमासयोरङ्गमिति संशये। संस्थासंयोगात्संस्थितस्य पुनरङ्गासम्भवात्। नाङ्गप्रयोजनसम्बन्धः। कालार्थस्तु संयोगः, प्रकरणविशेषात्। उभयार्थमिति प्राप्ते—

उच्यते—पौर्णमास्या हि संयुक्तो वाक्येनानेन वैमृधः।
तस्य प्रकरणन्नेष्टे तद्द्वयसंयुक्तगोचरम्॥ १०४॥

यत्तु संस्थिताया नाङ्गं सम्भवतीति, तदुभयाङ्गत्वेऽपि तुल्यम्, न चामावास्याङ्गमेवेदमिति युक्तम्, प्रकरणाविशेषादिति त्वयैवोक्तम्। अतः यद्दर्श-

पौर्णमासिकन्तन्त्रन्द्वयोः साधारणं विहितम्, तद्युक्तां पौर्णमासीं समाप्य, पुनरिदमङ्गङ्कर्तव्यमिति वाक्यार्थः, तथा च वाक्यशेषः 'वैमृधः पूर्णमासे नु निर्वाप्यो भवति, तेन पूर्णमासः सेन्द्रो भवती तै.सं.२-५-४-१ 'ति, इन्द्राभावेन पौर्णमास्याः वैगुण्यमाशङ्क्य तत्समाधानार्थंतांदर्शयन्पौर्णमास्यङ्गत्वन्दर्शयति।

इति चतुर्दशं वैमृधादेः पौर्णमास्यंगताधिकरणम्।

—:०:—

अनुयाजादीनां दर्शपूर्णमासोत्तरकालताद्यधिकरणम् ॥ १५ ॥

अनुत्पत्तौ तु कालः स्यात्प्रयोजनेन सम्बन्धात् ॥ ३६ ॥

'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ती'त्यत्रापि कालार्थत्वेन संयोगस्य त्यन्तपारार्थ्यं स्यादित्यङ्गप्रयोजनसम्बन्धं मन्वानस्योत्तरम्। आग्निमारुतस्य सोमार्थत्वेनोपदिष्टस्य, अनुयाजानाञ्च पश्वर्थतया अतिदिष्टानाम्, विपरिवर्तमानत्वान्न कर्माङ्गत्वम्। तेषान्तु निर्ज्ञातप्रयोजनानामङ्गाङ्गित्वापेक्षाभावात् कालार्थः संयोगः।

इति पञ्चदशमनुयाजानामाग्निमारुतोत्तरकालताधिकरणम्।

---

सोमादीनां दर्शपूर्णमासोत्तरकालताद्यधिकरणम् ॥ १६ ॥

उत्पत्तिकालविशये कालः स्याद्वाक्यस्य तत्प्रधानत्वात् ॥ ३७ ॥

ज्योतिष्टोमे श्रूयते 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'ति। तत्र दर्शपूर्णमासशब्दस्यात्यन्तपारार्थ्यपरिहारायाङ्गप्रयोजनसम्बन्ध एव न्याय्यः।

नैवम्—दर्शोपलक्षिते काले सोमयागो विधीयते।
स च प्रकृत एवेति न कर्मान्तरसम्भवः॥ १०५ ॥

दर्शोत्तरकालमनुपादेयं प्रत्युपादीयमानोऽपि सोमः "सन्निधौ त्वविभागादि'२–३–३७ति न्यायात्, न कर्मान्तरम्। प्रकृतश्चासौ फलार्थत्वान्न दर्शाङ्गतां प्रतिपद्यते। अतो न तावत्सोमस्य दर्शाङ्गत्वम्।

नापि दर्शादेः सोमाङ्गत्वम्, अविधीयमानत्वात्, न ह्यविधीयमानमङ्गम्भवति। न चात्र दर्शपूर्णमासौ विधीयेते, विधायकाभावात्, दर्शोत्तरकाले

हि सोमस्य विधिः, न दर्शस्य। न चाकृतयोर्दर्शपूर्णमासयोस्तदुत्तरकाले सोमः शक्यते कर्तुमिति, अर्थात्तयोरपि विधिः स्यात्। विध्यन्तरविहितयोस्तु तयोर्लाभान्नानुपपत्तिः। तदुत्तरकाले तु सोमश्चोद्यमानोऽपि सन्निधेर्न कर्मान्तरमित्युक्तम्। तस्मात्सोमस्यायं कालविधिः।

इति पञ्चदशं सोमादीनां दर्शपूर्णमासोत्तरकालताद्यधिकरणम्।

---

वैश्वानरेष्टेः पुत्रगतफलकत्वाधिकरणम् ॥ १७ ॥

फलसंयोगस्त्वचोदिते, न स्यादशेषभूतत्वात् ॥ ३८ ॥

अङ्गानां तूपघातसंयोगे निमित्तार्थः ॥ ३९ ॥

'वैश्वानरन्द्वादशकपालन्निर्वपेत्पुत्रे जाते' इति विधाय, अम्नायते 'यस्मिन् जात एतामिष्टिन्निर्वपति, पूत एव स तेजस्वी अन्नाद इन्द्रियावी पशुमान्भवती तै. सं. २-२-५-३ ति। तदिदम्पूतत्वादिकं रात्रिसत्रप्रतिष्ठावत् फलमिति स्थितम्। तत्किमिष्टिकर्त्तुः फलं पितुः, उत पुत्रस्ये ति विचारे, अन्यफले कर्मण्यन्यस्य प्रेरणासम्भवात्पितुरेव प्रेर्यत्वात् प्रधानगतात् त्वात्मनेपदादग्निसाध्यककर्मफलानामाधातृगामित्वनियमात्पितुरेव फलम्।

नैतदेवम्—येनैव वाक्यशेषेण फलमेतत्प्रकल्प्यते।
तेनैव पुत्रगामित्वप्रतिपत्तिरपि स्फुटा ॥ १०६ ॥

'यस्मिञ् जाते निर्वपति, स पूतो भवती'ति स्पष्टंपुत्रगामित्वम्। पुत्रफलमपि पितुरभिलषितमेवेति विधोरात्मनोपदस्य चाविरोधः।

जातेष्ठेर्जातकर्मान्तर्याधिकरणम्

एवं वा—इयमेव वैश्वानरीया चिन्त्यते—किं जननानन्तरमेव कर्तव्या? उत कृते जातकर्मणीति। निमित्तानन्तरं नैमित्तिकमुपसम्प्राप्तं विना कारणेन नाऽतिक्रमितव्यम्। अतोऽनन्तरमेव स्यात्। सत्यम्, इह त्वस्ति कारणम्। पुत्रफलार्थम् हीदङ्कर्म, तस्य च कृते जातकर्मणि स्तनप्राशनम्, न पुनः प्राक्, अकृते हि जातकर्मणि इष्टिर्निरुध्यमाणास्तनप्राशनमुत्कर्षेत्, ततः कुमारविपत्तिप्रसङ्गात् इष्टिरेवेयमनर्थिका स्यात्। तस्मात्कृते जातकर्मणि कर्तव्या।

### जातेष्ठेराशौचापगमानन्तरमनुष्ठानाधिकरणम्

पुनश्चिन्त्यते—किं जातकर्मानन्तरमन्तर्दशाह एव कर्तव्या ? उताऽऽशौचापगमे स्वकाले वाऽऽगत इति ।

निमित्तानन्तरम्प्राप्ता प्रयोजनविरोधतः ।
उत्कृष्टा तदभावात्तु पुनर्नोत्क्रष्टुमर्हति ॥ ७ ॥
शौचाङ्गेन विनाऽप्येषा कर्तव्या च निमित्ततः ।
अपि वाऽप्येकदेशे स्यादिति षष्ठे हि वक्ष्यते ॥ ८ ॥

उच्यते—निमित्तस्वरसात्प्राप्तिर्या तावत्सा निवारिता ।
प्रयोजनविरोधेन तस्मादङ्गोपसङ्ग्रहः ॥ १९ ॥

निमित्तानन्तर्यन्तावत्प्रयोजनविरोधादेव बाधितमित्युत्कृष्टेष्टिः । उत्कृष्टा चेदवैगुण्याय शौचकालप्रतीक्षया, आशौचपगमे पौर्णमास्यादिकाले कर्तव्या ।

इति षष्ठं वैश्वानराधिकरणम् ।

---

### सौत्रामण्याद्यङ्गानां स्वकालकर्तव्याऽधिकरणम् ॥ १७ ॥

**प्रधानेनाभिसंयोगादङ्गानां बृमुख्यकालत्वम् ॥ ४० ॥ अपत्ते तु चोदना तत्सामान्यात्स्वकाले स्यात् ॥ ४१ ॥**

'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'ति चोद्यमानो बृहस्पतिसवः किम्प्रधानकाले शरदि तेन सहैकप्रयोगः कर्तव्यः ? उतातिदेशप्राप्ते स्वकाले वसन्तं इति संशयः ।

तत्र—साङ्गस्य हि प्रधानस्य विधानं देशकालयोः ।
अङ्गान्तरवदस्यापि तदङ्गत्वात्सह क्रिया ॥ ११० ॥

न हि वाजपेयः शरदि कर्तव्यश्चोद्यते, किन्तु वाजपेयकरणको यः फलार्थो व्यापारः प्रयोगः फलभावनाख्यः, तस्याऽयङ्कालविधिः, 'शरदि वाजपेयेने'ति तृतीयानिर्देशात्तस्यैव फलसामग्रीभूतस्य चिकीर्षितस्य कालापेक्षितत्वात् । स च व्यापारोऽङ्गप्रधानव्यासक्त इति तुल्यः अप्रधानस्याङ्गानाञ्च तत्कालयोग इति, वाचनिकालविरोधादतिदिष्टः कालो बाध्येत ।

नन्वयङ्कालो बृहस्पतिसववर्जिताङ्गेषु कृतार्थ इति, नातिदेशम्बाधितुमुत्सहते, अतिदेशोऽपि कालातिरिक्ताङ्गेषु कृतार्थ इति, न वचनसङ्कोचायालम्।

तस्मात्प्रधानकालत्वमेवम्प्राप्ते अभिधीयते।

सत्यं वाचनिकः कालो बाधेतैवातिदेशिकम्॥ १०६॥
बृहस्पतिसवे त्वेष शरत्कालो न चोद्यते।
यस्य कालविधिस्तस्मात् बहिष्ठ्वे न हि स श्रुतः॥ १०७॥

वाजपयकरणको यः स्वकार्यम्प्रति व्यापारः शरदि विहितः, तमेवेहापि समभिव्याहृतेन त्त्वाशब्देन प्रतिनिर्दिश्य ततः पश्चत्तिने, बृहस्पतिसवश्चोद्यमानस्तत्प्रयोगबहिर्भावान्न तत्कालं लभते। यदि परं वाजपेये कृते कर्तव्यः सन्नतिक्रमकारणाभावादनन्तरमेतत्क्रियेत, अस्तित्वतिक्रमकारणङ्कालोपसंहारः। त्त्वा च पूर्वकालतायां स्मर्यते, नानन्तर्ये,। तस्मात्स्वकाले प्रयोगः, निर्वृत्तमपि च वाजपेयापूर्वमनेनाङ्गं न बलवत्क्रियते।

इत्यष्टादशं बृहस्पतिसवादेस्स्वकालेऽनुष्ठानाधिकरणम्।

इति शास्त्रदीपिकायां चतुर्थस्य तृतीयः पादः।

—:०:—

# अथ चतुर्थाध्याये चतुर्थः पादः

विदेवनादीनां राजसूयांगत्वाधिकरणम्॥ १॥

**प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम्॥ १॥ अपि वाऽङ्गमनिज्याः स्युस्ततो विशिष्टत्वात्॥ २॥**

अनुमत्यादीनि विदेवनादीनि च यागायागकर्माणि प्रकृत्य श्रूयते 'राजसूयेन स्वाराज्यकामो यजेते'ति। तत्र संशयः—किं सर्वाण्येव फलवन्ति समप्रधानानि पुरुषार्थानि ? उतायागाः क्रत्वर्थाः ? इति।

तत्र—सर्वेषामप्रकृतत्वेन फलापेक्षितया तथा।
राजसूयपदस्यापि समानत्वात्फलान्वयः॥ १०८॥

राजसूयप्रातिपदिकं यद्यप्यप्रसिद्धम्, तथाऽपि तृतीयान्तत्वात्फलसाधनाभिधायित्वेन निर्णीतं प्रकृतानाम्फलापेक्षिणामविशेषात्सर्वेषान्नामेत्यवसीयते। एवं साधनेऽवगते, स्वाराज्ये च फले भावनामात्रविधियुक्तादाख्यातात्प्रतिपाद्यमपेक्षितमिति, तन्मात्रपरमाख्यातम्। केवलप्रत्ययप्रयोगासम्भवात्तु यत्र क्वचन धातावुपादातव्ये छत्रिन्यायेन यागायागसमुदाये यजिरनुवादभूतः प्रयुज्यते। ततः सर्वेषां फलान्वयात्प्राधान्यम्।

उच्यते—धात्वर्थानाम्फलैर्योगो न नाम्नामिति हि स्थितम्।

यजिश्च यागमेवाह यजेस्तेन फलान्वयः॥ १०९॥
राजसूयपदं चापि यज्यैकाधिकरण्यतः।
यागनामैव तेनात्र यागानां स्यात्प्रधानता॥ ११०॥

इतरत्तुवत्सन्निधानात्तदङ्गम्भवति।

इति प्रथमं विदेवनादीनां राजसूयांगत्वाधिकरणम्।

---

विदेवनस्य कृत्स्नराजसूयाङ्गताधिकरणम्॥ २॥

**मध्यस्थं तन्मध्ये॥ ३॥ सर्वासां वा समत्वाच्चोदनातः स्यान्न हि तस्य प्रकरणं देशार्थमुच्यते मध्ये॥ ४॥**

स्थितमयागानामङ्गत्वम्, तत्र विदेवनादयोऽभिषेचनीयाख्यसोमयागविध्यनन्तरमाम्नातास्तदीयमाहेन्द्रस्तोत्रकालेऽपकृष्टाः माहेन्द्रस्तोत्रम्प्रत्यभिषिच्यत इति। अयं च विदेवनादीनामभिषेकान्तानामपकर्ष इति। ते इमे अभिषेचनीयाङ्गमुत राजसूयाङ्गमिति संदेहे, कथम्भावगृहीतप्राकृताङ्गमध्यपातादवान्तर प्रकरणेनाभिषेचनीयाङ्गमिति संदेहे, कथम्भावगृहीतप्राकृताङ्गमध्यपातादवान्तररप्रकरणेनाभिषेचनीयाङ्गतामाशङ्कमानस्य—

उत्तरम्—तत्र प्रयोजनोपेक्षाकर्मणां यत्र चोदना।
विदेवनादिकानान्तु न मध्ये प्रकृतो विधिः॥ १११॥

अभिषेचनीयानन्तरं विहिताः प्रयोजनापेक्षाः सन्निधिप्राप्ताभिषेचनीयाङ्गत्वबाधेन प्रकरणाद्राजसूयाङ्गतान्नीताः नापकर्षसमये भूयः प्रयोजनमपेक्षन्ते, येनावान्तरप्रकरणविषयतां प्रतिपद्येरन्। तस्माद्राजसूयाङ्गम्।

इति विदेवनस्यादेः कृत्स्नराजसूयांगत्वाधिकरणम्।

---

सौम्यादीनामुपसत्कालकत्वाधिकरणम् ॥ ३ ॥

प्रकरणांविभागे च विप्रतिषिद्धं ह्युभयम् ॥५॥ अपि वा कालमात्रम् स्याददर्शनाद्विशेषस्य ॥ ६ ॥

राजसूये एव 'सौम्यञ्चरुम् , बभ्रुर्दक्षिणे'ति विधाय श्रूयते—'पुरस्तादुपसदां सौम्येन प्रचरन्ती'ति। किमयञ्चरुरुपसदामङ्गम् ? अङ्गप्रयोजनसम्बन्धोऽयम ? उत यागान्तरवत्फलार्थः कालार्थोऽयं संयोग इति चिन्त्यते।

तत्र—प्रकरणापेक्षात्सामान्यवचनादयम् ।
स्वाराज्ये विनियुज्येत साक्षादुपसदङ्गता ॥ १११ ॥

न हि 'सौम्येने'ति स्वशब्देन तृतीयान्तेन षष्ठीनिर्दिष्टोपसदङ्गत्वेन विनियुज्यमानः सौम्यः प्रकरणापेक्षेण सामान्येन राजसूयवाक्येन फलसम्बन्धं लभते। पुरस्ताच्छब्दश्चाङ्गस्य तत्समीपेऽनुष्ठानात् यथाकथञ्चिदनुवादः।

अत्राभिधीयते नेयं षष्ठी तादर्थ्यवाचिनी।
दिग्योगलक्षणा त्वेषा पुरस्ताच्छब्दयोगतः ॥ ११२ ॥
अङ्गाङ्गिभावमात्रे हि पुरस्तादित्यनर्थकम्।
प्रसज्येत पदं तस्मात्कालस्तावद्विधीयते ॥ ११३ ॥
तथा च सति नाङ्गत्वं विधातुं शक्नुयाद्विधिः।
न ह्युत्पत्तिविधयोऽनेकार्थव्यापृतिक्षमाः ॥ ११४ ॥

तस्मात्कालार्थ एव संयोग इति, फलार्थः सौम्य।

इति तृतीयं सौम्यादीनामुपसत्कालकत्वाधिकरणम्।

---

आमनहोमानां सांग्रहाण्यङ्गताऽधिकरणम् ॥ ४ ॥

फलद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् ॥ ७ ॥

'वैश्वदेवीं साङ्ग्रहणीन्निर्वपेत् ग्रामकामः' इति प्रकृत्य 'आमनमस्यामनस्य-देवाः इति तिस्र आज्याहुतीर्जुहोती'त्यामनहोमा विहिताः। किं ग्रामकामपदानुषङ्गेण सङ्ग्रहणीवत् फलार्थाः ? उत साङ्ग्रहण्यङ्गमिति संशये, साङ्ग्रहण्याः प्राकृताङ्गनिराकाङ्क्षायाः पुनरङ्गापेक्षाभावात्, आमनहोमानाञ्च फलपदानुषङ्गेण प्रयोजनावाप्तेरनपेक्षत्वात्सम्भवति च प्राधान्येऽङ्गत्वायोगात्फलार्थत्वे प्राप्ते—

अनुषङ्गे सकृदाम्नातस्य पुनरनुसन्धानात्, तथा च सति सकृदाम्नात-रूपबाधात् अत्यन्तागतिकतया तदाश्रयणादिह चानपेक्षतया साङ्ग्रहण्याः प्रकरणाभावेऽपि सन्निधेरेव तदङ्गत्वसम्भवात्, आमनहोमानाञ्च प्राकृताङ्गमध्य-विहितत्वेन प्रकरणाभावेऽपि सन्निधेरेव सम्भवादगतित्वाभावादनुषङ्गाना-श्रयणत्परिधिमन्त्रव्यवायाश्रयणे तदसम्भवादङ्गत्वमेव न्याय्यम्।

इति चतुर्थं सामनहोमानां सांग्रहण्यंगताधिकरणम्।

दधिग्रहस्य नित्यताधिकरणम् ॥ ५ ॥

दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् ॥ ८ ॥ नित्यश्च ज्येष्ठाशब्दत्वात् ॥ ९ ॥ सार्वरूप्याच्च ॥ १० ॥ नित्यो वा स्यादर्थवादस्तयोः कर्मण्यसम्बन्धाद्भङ्गित्वाच्चान्तरायस्य ॥ ११ ॥

ज्योतिष्टोमे श्रूयते 'यां वा अध्वर्युर्यजमानश्च देवतामन्तरितः, तस्यै आवृश्चेते, प्राजापत्यन्दधिग्रहं गृह्णीयादि'ति, सोऽयं दधिग्रहः किं नैमित्तिकः? उत नित्योनैमित्तिकश्च? अथ नित्य एवेति संशये।

देवतान्तरिते यागो निमित्तेऽयं विधीयते।
तस्मान्नैमित्तिकः सत्यन्नित्योऽपि ज्येष्ठशब्दतः ॥ ११५ ॥

नमित्तिक इति सत्यम्। नित्योऽपि स्यात्। कुतः। ज्येष्ठशब्दसंस्तवात्? ज्येष्ठो वा एष ग्रहाणामि'ति प्रशस्त वचनो ज्येष्ठशब्दोहि' नित्यश्च प्रशस्तः, न चञ्चलः। अथवा प्राथम्यनिमित्तं ज्येष्ठ्यम् नित्यश्च सन्नयं पाठक्रमात् ग्रहान्तरेभ्यः प्रथमङ्गृह्यमाणो भवति ज्येष्ठः,। नैमित्तिकस्तूपजाते निमित्ते क्रियमाणो न नियोगतः ज्येष्ठः स्यात्।

तस्मादुभयरूपः स्यात्। नन्वेवन्नित्य एव सः। न तु नैमित्तिकः। कस्मात्? निमित्तस्याश्रुतत्वतः।

न ह्यन्तरायो निमित्तत्वेन श्रूयते, यदिशब्दाद्यभावात्, यच्छब्दस्य चाकर्तृसमानाधिकरणस्य तत्प्रतिपादकत्वाभावात्। अर्थवादमात्रमन्तराय-श्रवणमिति, नित्य एव स्यात्॥

इति पञ्चमं दधिग्रहस्य नित्यत्वाधिकरणम्।

वैश्वानरस्य नैमित्तिकत्वाधिकरणम् ॥ ६ ॥

वैश्वनारश्च नित्यः स्यान्नित्यैः समानसङख्यत्वात् ॥ १२ ॥ पक्षे वोत्पन्नसंयोगात् ॥ १३ ॥

'यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते, यथा सामि गर्भो विपद्यते, तादृगेव तत्, आर्तिमाच्छद्वैश्वानरं द्वादशकपालम्पुरस्तान् निर्वपेदि'ति। अत्रापि पूर्ववदर्थवादमात्रं संवत्सराभरणमिति नित्यतां मन्यते। यच्छब्दस्तु कर्तृस-भिव्याहृतो निमित्ततां संवत्सराभरणस्य प्रतिपादयती नैमित्तिकतैव स्थिता।

इति षष्ठं वैश्वानरस्यस्य नैमित्तिकाधिकरणम्।

षष्ठाश्चितेर्नैमित्तिकत्वाधिकरणम् ॥ ७ ॥

षट्चितिः पूर्ववत्त्वात्स्यात् ॥ १४ ॥ ताभिश्च तुल्यसंख्यानात् ॥ १५ ॥ अर्थवादोपपत्तेश्च ॥ १६ ॥ एकचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन ॥१७॥ विप्रतिषेधात्ताभिः समान सङ्ख्यत्वम् ॥१८॥

'योऽग्निं चित्वा न प्रतितिष्ठति, पञ्च पूर्वाश्चितयो भवन्ति, अथ षष्ठीम् चितिं चिनुते प्रतिष्ठित्यौ' इति। किमियं षष्ठीचितिर्नित्या, नित्य एवाग्निः-षट्चितिकः ? उत स पञ्चचितिक एव ? इदन्तु चयनान्तरमेकचितिकमप्रतिष्ठा-यान्निमित्ते विधीयते-इति।

तत्र—पूरणप्रत्ययो न स्यात्षट्सङ्ख्यापूरणाद्विना।
पञ्चभिः सहिता चैषा पूरयेत्तां न केवला ॥ ११६ ॥

न हि केवला चितिः षष्ठीति शक्या वक्तुम्। तस्मान्नित्य एवाग्निः षट्चितिकः।

नैवम्—यच्छब्दोह्यप्रतिष्ठायाः स्पष्टमाह निमित्तताम्।
अभिधानक्रियापेक्षं षट्सङ्ख्यापूरणम्भवेत् ॥ ११७ ॥

नित्याः पञ्चचितयः प्रागभिहिताः, ततः परमियं नैमित्तिक्यभिधीयते इति, अधिधानापेक्षं षष्ठीत्वनुपपन्नमिति, न यच्छब्दावगतनिमित्तापह्नवः शक्यते कर्तुमिति नैमित्तिकीयम्।

इति सप्तमं षष्ठचितेनैमित्तिकत्वाधिकरणम।

पिण्डपितृयज्ञधिकरणम् ॥ ८ ॥

पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ॥ १९ ॥ तुल्यवच्च प्रसंख्यात् ॥ २० ॥ विप्रतिषिद्धे च दर्शनात् ॥ २१ ॥

'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ती' ति अनारभ्याधीतः पितृयज्ञः क्रत्वर्थः ? उत पुरुषार्थ इति संशये, कर्मवचनेनामावास्याशब्देन समभिव्याहारात्तदङ्गत्वम्। यद्यपि कालस्यापि साधारणोऽयं शब्दः, तथापि फलकल्पनापरिहाराय कर्मवाचित्वेवाङ्गीक्रियते। तस्मात् क्रत्वर्थ एवायमाहिताग्निः, अनाहिताग्नेरप्यनाहिताग्निना कार्य इति विहितः, तस्य क्रत्वभावाद्भवतु-पुरुषार्थः। तथा च भगवता मनुना—

'न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः'। इति।

वदता दर्शाङ्गत्वं प्रदर्शितम्। अनङ्गं हि तेन विना क्रियते, तस्माद्दर्शाङ्गम्—

नैवं साधारणत्वेऽपि सामानाधिकरण्यतः।
कालवाचित्वमेव स्यात्तत्सापेक्षश्च कर्मणि ॥ ११८ ॥

यद्यपि तावत्साधारणोऽमावास्याशब्दः, तथाप्यपराह्णसामानाधिकरण्य-लिप्सया कालवाचित्वमध्यवसीयते। न चायमतीव साधारणः। काले हि निर-पेक्षोऽयम्,कालसबन्धापेक्षया तु कर्मणि वर्तते। तस्मात्कर्मसमभिव्याहाराभावा-दनङ्गम्।

मनुवचनस्य त्वयमर्थः—श्राद्धशब्देन मासि मासि श्राद्धमुच्यते। दर्शशब्देनाप्यमावास्याकालः। तदयमर्थः-अमावास्यायामेवाहिताग्निः श्राद्धङ्-कुर्यान्न तेन विना सर्वेष्वेवापरपक्षाहःसु क्रियमाणेऽपि 'पितॄन्प्रीणातो'ति स्मृत्यन्तरवशादन्येष्वप्यहसुः कुर्यादिति। एवञ्च स्मृत्यन्तरमनाहिताग्निविषय-म्भविष्यति। तत्सिद्धंपितृयज्ञस्यानङ्गत्वम्।

इति अष्टमं पिण्डपितृयज्ञाधिकरणम्।



रशनाया यूपाङ्गताधिकरणम्॥ ९॥

प्रश्वङ्गं रशना स्यात्तदागमे विधानात् ॥ २२ ॥ यूपाङ्गं वा तत्संस्कारात् ॥ २३ ॥ अर्थवादश्च तदर्थवत् ॥ २४ ॥

'आश्विनङ्गृहीत्वा, त्रिवृता यूपं परिवीय, आग्नेयं सवनीयम्पशुमुपाकरोती' श० ब्रा० ४-२-४ ११ ति येयं सवनीयस्याङ्गभूता रशना, सा किम् पशुबन्धनार्था ? उत यूपसंकारार्थेति संशये ।

यूपार्था सत्यदृष्टार्था दृष्टार्था पशुबन्धनी।
अनपक्रमणात्तेन पश्वङ्गं रशना भवेत्॥ ११९॥

न हि यूपस्य रशना किञ्चिद्दृष्टं करोति, पशोस्त्वनपक्रमणङ्कुर्वती भवति दृष्टार्था। तेन त्रिवृत्प्रातिपदिकाभिहिता रशना वाक्येन पशुयागाङ्गतया विधीयते—त्रिवृद्युक्तया आग्नेयमुपाकरोतीति। सा च दृष्टेनैव पश्वनपक्रमणेन तदङ्गतां प्रतिपद्यते। या च त्रिवृच्छब्दे तृतीया, या च 'यूपं परिव्ययती'ति द्वितीया तत्सर्वं प्राप्तानुवादः। यूपे हि पशुर्बन्धश्चोदकप्राप्तः। यश्च रशनया यूपे पशुम्बध्नाति, सोऽवश्यं यूपे रशनां व्यापारयति, यश्च व्यापारयति, स शक्यतेतया यूपं परिव्ययतीति वक्तुम्। अतोऽयमनुवाद इति पश्वर्था रशना चोदकप्राप्ता चान्या रशना ताभ्यामुभाभ्यां पशुर्बध्यते, ततः पश्वर्था रशना, तदर्थं च परिव्याणं यूपे तस्याः प्रतिमोचनम्। प्रतिमुक्ता हि सा अनपक्रमणाय कल्पते। यूपोऽपि स्थाणुस्थानीयः तदर्थ एवेति सर्वमेव दृष्टार्थं भवति। तस्मात्पश्वर्थेत्येवं प्राप्ते—

ब्रूमः—यद्यदृष्टार्थता यूपे स्यादेवक्लिष्टकल्पना।
यूपार्था सत्यपि त्वेषा दृष्टार्था दार्ढ्यजन्मनः॥ १२०॥
परिव्याणे हि यूपार्थं द्वितीयातोऽवगम्यते।
रशना च परिव्याणशेषभूता तृतीयया॥ १२१॥
सर्वन्तद्विपरीतं स्यात्पश्वर्था रशना यदि।
यूपार्था रशना तस्माद्भवेन्न पशुबन्धनी॥ १२२॥

प्राभाकरमतोपन्यास-निरासौ।

केचित्तु, पूर्वपक्षेऽपि न पशुबन्धनार्था रशना यूपस्यैव परिव्याणं पशूपाकरणस्यारादुपकारकमिति पूर्वपक्षः। सिद्धान्तस्तु यूपसंस्कारार्थमित्येवमाहुः।

तथा सति अनुष्ठानाविशेषान्निष्प्रयोजना चिन्ता स्यात्। पशुगणे त्वेकयूपे सकृत्कृतमेव परिव्याणमगृह्यमाणविशेषत्वात्तन्त्रेण सर्वेषामुपकुर्यादिति, प्रतिपशु-रशना कार्येति प्रयोजनन्न सिद्ध्येदित्यास्तां तावत्।

इति नवमं रशनाया यूपांगताधिकरणम्।



स्वरोः पश्वङ्गताधिकरणम् ॥ १० ॥

**स्वरुश्चाप्येकदेशत्वात् ॥ २५ ॥ निष्क्रयश्च तदङ्गवत् ॥ २६ ॥ पश्वङ्गं वार्थकर्मत्वात् ॥ २७ ॥ भक्त्या निष्क्रयवादः स्यात् ॥ २८ ॥**

'यूपस्य स्वरुङ्करोति, स्वरुणा पशुमनक्ती'ति। किं यूपार्थः स्वरुः, तस्य पश्वञ्जनं प्रतिपत्तिः ? उत पश्वर्थः तस्य यूपादुपादानमिति संशये। यूपस्येति षष्ठ्या देवदत्तस्य गौरितिवत्तादर्थ्यं मन्यते।

स्वरुणा पशुमित्येवं शेषशेषिविभक्तितः।
स्वरोः पश्वञ्जनाङ्गत्वं पशोश्चापि प्रधानता ॥ १२३ ॥

यूपस्येत्यवयवव्यतिरेकजनिता षष्ठी न तादर्थ्यङ्गमयतीति, पश्वर्थः स्वरुः।

इति दशमं स्वरोः पश्वंगताधिकरणम्।



आवारादीनामङ्गताधिकरणम् ॥ ११ ॥

**दर्शपूर्णमासयोरिज्याः प्रधानान्यविशेषात् ॥ २९ ॥ अपि वाङ्गानि कानिचिद्येष्वङ्गत्वेन संस्तुतिः; सामान्यादभिसंस्तवः ॥ ३० ॥ तथा चान्यार्थदर्शनम् ॥ ३१ ॥ अवशिष्टं तु कारणं प्रधानेषु गुणस्य विद्यमानत्वात् ॥ ३२ ॥ नानुक्तेऽन्यार्थदर्शनं परार्थत्वात् ॥ ३३ ॥ पृथक्त्वे त्वभिधानयोर्निवेशः; श्रुतितो व्यपदेशाच्च; तत्पुनर्मुख्यलक्षणम्, यत्फलवत्त्वम्; तत्सन्निधावसंयुक्तं तदङ्गं स्याद्; भागित्वात् कारणस्याश्रुते**

अश्रुतश्चान्यसम्बन्धः ॥३४॥ गुणाश्च नामसंयुक्ता विधीयन्ते; नाङ्गेषूपपद्यन्ते ॥ ३५ ॥ तुल्या च कारणश्रुतिरन्यैरङ्गाभिसम्बन्धः ॥ ३६ ॥ उत्पत्तावभिसम्बन्धस्तस्मादङ्गोपदेशः स्यात् ॥ ३७ ॥ तथा चान्यार्थदर्शनम् ॥ ३८ ॥

दर्शपूर्णमासयोः किं सर्वेषां यागानां प्राधान्यम् ? उताग्नेयादीनामेव कालयोगिनाम्, इतरेषां तदङ्गत्वमिति चिन्त्यते। 'य एवं विद्वानि'त्येवं संयुक्तौ अनुवादकौ, न विधायकावित्यनुवादस्य तु प्रयोजनमाग्नेयादीनामेव प्राधान्यसिद्धिरित्येतावत्स्थितं द्वितीये। अधुना तु तदेव प्रयोजनं सिध्यति नेति चिन्त्यते।

तत्राख्यातानुसारित्वात्संज्ञाया राजसूयवत्।
तस्याऽविशेषतो वृत्तेः सर्वयागप्रधानता ॥ १२४ ॥

नामधेयन्तावदाख्यातानुसारि, यत्राख्यातम्, तत्र वर्तते, न तु यत्र नाम तत्राख्यातम्। आख्यातञ्च अविशेषात्सर्वानेव रूपवतः प्रकृतान् यागान् उपादाय फले विनियुङ्क्ते। अतो नामानुव्युत्पन्नं द्विवर्चनान्तप्रतिरूपकं सर्वत्र वर्तत इति, सत्यामप्यनुवादेन समुदायद्वयसिद्धौ, सर्वेषां प्राधान्यम्।

उच्यते—यद्धि नामाऽप्रसिद्धार्थं तदाख्यातवशम्भवेत्।
इदं पुनः प्रसिद्धार्थमाख्यातस्य विशेषणम् ॥ १२५ ॥

प्रातिपदिकं तावत्कालद्वयसंयोगादाग्नेयादिषु प्रसिद्धार्थम्, द्विवचनमपि 'य एवं विद्वानि' त्येवं संयुक्तानुवादद्वयपरिकल्पितसमुदायद्वयाभिप्रायम्प्रसिद्धार्थमेव। न च दर्शशब्दस्याप्रसिद्धार्थत्वम्, अन्वारम्भणीयावाक्यशेषे अमावास्यापर्यायत्वेन प्रसिद्धार्थत्वात्। तदेवं प्रसिद्धार्थं विशेषवाचिनामधेयम् शक्नोत्याख्यातं सामान्यवचनं स्वविषये स्थापयितुमिति, षण्णामेव प्राधान्यम्, इतरेषां तु प्रकरणात्तदङ्गत्वम्।

इत्येकादशमाघारादीनामंगताधिकरणम्।

## ज्योतिष्टोमे दीक्षणीयादीनामङ्गताधिकरणम् ॥ १२ ॥

**ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ॥ ३९ ॥ गुणानाम् तूत्पत्तिवाक्येन सम्बन्धात्कारणश्रुतिस्तस्मात्सोमः प्रधानं स्यात् ॥४०॥ तथा चान्यार्थदर्शनम् ॥ ४१ ॥**

दीक्षणीयाग्नीषोमीयादीष्टि-पशुयागान्, सोमयागञ्च प्रकृत्य श्रूयते- 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति। तत्र चिन्त्यते-किं सर्वयागानां फलसम्बन्धेन प्राधान्यम्? उत सोमयागस्यैव, इतरेषां तदङ्गत्वम्-इति।

तत्राख्याताविशेषेण सर्वयागप्रधानता।
नामधेयं प्रसिद्धार्थमाख्यातं विशिनष्टि हि॥ १२६ ॥

ज्योतिराख्या न हि स्तोमाः प्रसिद्धाः कस्यचिद्यजेः।
यत्रावयवशो वृत्तिर्नामधेयस्य गम्यते॥ १२७ ॥

त्रिवृदादिषु तच्छब्दः स्तुतिमात्रतयोदितः।
न तु स्तोमाभिधेयत्वं ज्योतिः शब्दस्य तावता॥ १२८ ॥

अस्तु वा त्रिवृदादीनां ज्योतिःशब्दाभिधेयता।
तथापि सर्वयागानां तत्सम्बन्धात् प्रधानता॥ १२९ ॥

स्तोमा हि सर्वयागानामङ्गं स्युरविशेषतः।
सर्वेषां फलवत्त्वेन प्रक्रिया न विशिष्यते॥ १३० ॥

अतः प्रकरणात्स्तोमाः सर्वयागाङ्गतामियुः।
सोमयागेन संयुक्ताः स्तोमवाक्येन चेन्न तत्॥ १३१ ॥

ग्रहणस्तोत्रयोर्वाक्ये कालार्था सङ्गतिर्यतः।
द्वयोरपि कृतार्थत्वात्स्तोत्रस्य ग्रहणस्य च॥ १३२ ॥

स्तोत्राणि तावत् 'आज्यैःस्तुवते' इत्यादिवाक्योत्पन्नानि प्रकरणात् यागाङ्गीति कृतार्थानि, ग्रहणमप्यैन्द्रवायवादिक्याविहितं सोमसंस्कारतया कृतार्थमेव। अतोऽत्र कालार्थ एव संयोगः। 'ग्रहं वा गृहीत्वा, चमसंवोन्नीय स्तोत्रमुपाकुर्या-दि'ति न त्वङ्गाङ्गिभावः, अङ्गत्वन्तु प्रकरणाविशेषात्सर्वयागान् प्रत्यवगम्यते, स्तोत्रीया संख्या च स्तोमशब्देनोच्यत इति, तत्सम्बन्धः सर्वेषामविशिष्टः।

तेनाख्याताविशेषेण नाम्नश्चाप्यविशिष्टतः।
प्राधान्यं सर्वयागानामिति प्राप्ते अभिधीयते॥ १३३ ॥

ज्योतिष्टोमाभिधानस्य यागस्यात्र फलं श्रुतम्।
ज्योतिष्टोमपदञ्चेदं वाक्यशेषे निरुच्यते ॥ १३४ ॥

ज्योतिष्टोमपदनिर्वचनार्थं ह्येतद्वचनम् 'त्रिवृत्पञ्चदशः सप्तदश एकविंशः, एतानि वाव तानि ज्योतींषि, य एतस्य स्तोमाः' तै. ब्रा. १-५-११-२ इति। तदिह-यदि त्रिवृदादिकस्तोत्रीयसङ्ख्याचतुष्टयस्य ज्योतिःशब्दो वाचकः, अथापि न वाचकः, सर्वथा तावत्तत्सम्बन्धिनि यागे ज्योतिष्टोमपदं नामतया वर्तत इत्येतत् तावद्विस्पष्टमवगतम्। अतस्तत्सम्बन्धिन एव यागस्य फलमिदम्, नान्यस्य। न च दीक्षणीयादीनां फलवाक्यप्रवृत्तिवेलायां स्तोमसम्बन्धः प्रसिद्धः, यागानां स्तोत्राणाञ्च निष्फलत्वाविशेषेणाङ्गाङ्गिभावानिष्पत्तेः, फलसम्बन्धोत्तरकालभाविप्राकरणिकस्तोमसम्बन्धाभिप्रायं छेदनादिविधाविव यूपपदं ज्योतिष्टोमपदमित्याश्रयणीयं स्यात्। तत्र प्रसिद्धनिर्देशसरूपः शब्दो बाध्येत। सोमयागस्यापि यद्यप्यनेनैव न्यायेनाङ्गाङ्गिभावः संम्बन्धः स्तोत्रैरसिद्ध एव, तथापि सोमग्रहणस्य स्तोत्रोपाकरणस्य च कालार्थोऽपि तावत्संयोगः प्रसिद्धः 'ग्रहं वा गृहीत्वा चमसम्वोन्नीय स्तोत्रमुपाकुर्यादि' तै. सं. ३-१-२-४ ति। तावता च सोमयागस्य स्तोमानाञ्च सम्बन्धमात्रं सिद्धम्। तन्मात्रनिमित्तश्च बहुव्रीहिरिति, शक्यते-ज्योतिष्टोमपदेन सोमयागोऽभिधातुमिति, तद्विशेषितो यजिस्तस्यैव फलसम्बन्धम् करोति।

प्रसिद्धरूपे सति सोमयागे न दीक्षणीयादिषु वर्तते यत्।
ततः स एवेह फलान्वयेन प्रधानमन्ये तु तदङ्गभूताः ॥ १३५ ॥

इति द्वादशं ज्योतिष्टोमे दीक्षणीयादीनामंगताधिकरणम्।

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां चतुर्थाध्यायस्य चतुर्थः पादः।

इति चतुर्थोऽध्यायः समाप्तः ॥

# अथ पञ्चमाध्याये प्रथमः पादः

## श्रुतिबलीयस्त्वाधिकरणम् ॥ १ ॥

### श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् ॥ १ ॥

प्रयुक्तिलक्षणे स्थितः प्रयोज्यवर्गनिर्णयः ।
प्रयोज्यगोचरः क्रमस्तत्वतः परं निरूप्यते ॥ १ ॥

प्रथमं तावच्छ्रुतिलक्षणो वेदविहित एव क्रमः पदार्थानामाश्रयणीयः। अथ वाऽनियम इति संशये, प्रयोगप्राशुभावादनियममाशङ्क्य, वेदप्रामाण्यात् तद्विहित एव क्रमः समाश्रयणीय इति, प्राक् सिद्धं चोदनाप्रामाण्यमेव 'बहुकृत्वोऽपि पथ्यं वदितव्यमि'त्येवं पुनः कथितमनेन सूत्रेण ।

प्राभाकरमतनिरासः ।

अथवा—भवति केषाचिन्मन्दधियामयं भ्रमः-क्रमस्याभावार्थत्वेन स्वतः-विधिर्न सम्भवति, न च द्रव्यादिवत्तद्विशेषणतया, क्रमस्यैकैकपदार्थाश्रयत्वेन-अनवगमात्संघातविशेषणत्वात्, तस्याविधेयत्वात्, अशब्दाभिहितत्वाच्च क्रमस्य विध्यन्वयासम्भवादविधेय एव क्रमः-इति। तदपनोदनार्थमिदं सूत्रम्। आनुपूर्व्यम्-श्रुतिलक्षणं द्रव्यादिवत्क्रियाविशेषणत्वात्, न चासौ संघातविशेषणतस्यैकत्वे-नाक्रमभाजनत्वात्, पदार्थास्तु यद्यपि प्रत्येकं न क्रममनुभवन्ति, परस्पर-मिलितास्तु संयोगादिवद्वितितिरूपं क्रमं बिभ्रति। बहवश्च ते प्रयोगविधिना विधीयन्ते इति, तद्विशेषणतया श्रुत्यादिसमर्पितः क्रमः सुखं विधीयते। अनभिहितोऽपि कथंचिद्बुद्धिमागतोऽपेक्षितो योग्यश्चेति प्राकृतोपकारवद्विकृतौ शक्यते-विधातुमिति, विधिलक्षणमेवानुपूर्व्यमाश्रयितव्यं भवति ।

अथवा—न सर्वः क्रमोऽत्र चिन्त्यते। किन्तु श्रुतिक्रम एव क्वचिदुदाहरणे चिन्त्यते। द्वादशाहे सत्रभूते श्रूयते "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती'ति। तदिह किं दीक्षा विधीयते ? क्रमस्तु पाठतो लभ्यते। अथवा क्रम एव-विधीयते ? श्रुतिक्रमोऽयमिति ।

तत्र—वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसम्भवे ।
तस्माद्दीक्षाविधिः पाठाद्दीक्षाणां लभ्यते क्रमः ॥ २ ॥

उच्यते—सर्वेषां यजमानत्वाद्दीक्षा प्राप्तैव चोदकात्।

क्रमस्तु नान्यतः प्राप्त इति सोऽत्र विधीयते॥ ३॥

प्राभाकरमतम्।

कर्तृनियमः कस्मान्न भवति अध्वर्युरिमानिति, चोदकप्राप्तत्वादेव। नन्विह यजमानानामेवार्त्विज्यकारित्वादध्वर्युर्नास्ति, कथमस्य दीक्षायां प्राप्तिः? असतो वा कथं कर्तृनियमः? नियमानुपपत्त्यैवाध्वर्यवं सर्वमेकेनैव कर्तव्यम्, तथा ब्राह्मादिकमप्येकैकेनेति कल्प्यते, तत्कारिणश्चाध्वर्य्वादिशब्दैर्गौणैरभिधीयन्ते- इति चेत्? सुतरां नियमानुपपत्तिः। सर्वस्याऽऽध्वर्यवस्यैकस्मिन् कर्तरि कल्पिते, दीक्षायामपि नियमेन तस्यैव कर्तुः प्राप्तत्वात्, न नियमविधिरवकल्पते। तदेवम् नियमविधेरुपघातकं कथं नाम बालिशाः कल्पयन्ति, यदि परं व्यवस्थितविषया अध्वर्य्वादिसंज्ञा व्यवहारसिद्ध्यर्थमेव कल्प्यते, तथा कल्पिते च तत एव दीक्षाया- मध्वर्योः प्राप्तत्वात्, क्रमार्थ एव विधिरवशिष्यते।

किञ्चाध्वर्य्वादिष्वसत्स्वपि प्रकृतित एव सर्वस्याध्वर्यवस्यैककर्तृकत्वम् प्राप्तम्। उक्ताह--प्रकृतावाध्वर्यवेऽप्येककर्तृकत्वम् 'अध्वर्युं वृणीते' इति ह्युत्पत्तौ बहुत्वाश्रुतेः मी० ८०-२-७ इति। एवञ्चमसाध्वर्युबहुत्वन्यायेनोपादीयमानस्याध्व- र्योरेकत्वं विवक्षितम्। तच्चाध्वर्युकार्यार्थम्, अन्यथाऽऽनर्थक्यात्। तेनाऽऽध्वर्य- वस्याऽध्वर्युकर्तृकत्वम्, एककर्तृकत्वञ्च प्रकृतावगतम्। तत्र सत्रेऽध्वर्य्वाद्य- भावात्, तत्कर्तृकत्वे बाधितेऽपि, एककर्तृकत्वं संभवन्न बाधितव्यमिति, सर्वथाऽऽध्वर्यवस्यैवकर्तृकत्वात्, दीक्षायामपि स एव कर्ता प्राप्तः।

अस्ति चाध्वर्युः सत्रे इति दर्शितं तृतीये। अध्वर्युदीक्षायां तु 'चित्पति- स्त्वा पुनात्वि'ति मन्त्रलिङ्गविरोधात्, उत्तरेषु च 'न पूतः पावयेदि'ति प्रतिषेधात् अध्वर्योः कर्तृत्वासम्भवात्, 'इतरमन्यस्तेषां यतो विशेषः स्यादि३-७-१५'त्येवं प्रतिप्रस्थातुरध्वर्योः, अर्द्धिषु च प्राप्तिः, एवमेव तृतीयिषु, पादिषु च नेष्ट्रन्नत्राः प्राप्तिः। अतो विधेयान्तराभावाद्गृहपतिं दीक्षयति, ब्रह्माणं दीक्षयतीत्येवमानुपूर्व्येण कीर्त्यमानानां दीक्षाणां यो विततिविशेषः प्रतीयते, स एव विधीयते। अनभिहितोऽपि प्रातिस्विकेन विधिना विधीयमानत्वाच्छ्रुतिक्रम इत्युच्यते। अर्थादपु प्रयोग- विधिमात्रमिति विवेकः। एवञ्चाध्वर्युं गृहपतिमित्यादि ब्रह्मचारी वाऽऽचार्य- प्रेषित इत्येवमन्तं विततिविशेषैकार्थविधानादेकं वाक्यम् यदा तु गार्वोपयंक्रमः,

तदा क्त्वाशब्देन तदभिधानादनभिधानं नास्ति, प्रतिदीक्षं च तद्भेदाम्नानावाक्यानीति विवेकः। तस्माच्छ्रुतिक्रमोऽयम्।

इति प्रथमं श्रुतिबलीयस्त्वाधिकरणम्।

---

क्रमस्य क्वचिदार्थिकत्वाधिकरणम् ॥ २ ॥

## अर्थाच्च ॥ २ ॥

'अग्निहोत्रं जुहोति, यवागूं पचती'ति यवागूपाक-होमयोः किमनियमः? अथवा पूर्वं पाकः, ततो होम इति। नियमप्रमाणाभावाद् विध्योः पाक-होममात्रपर्यवसानान्न क्रमोऽत्र पूर्ववद्विधीयते। अतोऽनियमः।

प्रयोजनवशात्तु नियमः। होमद्रव्यं हि यवागूः। तदुत्पत्त्यर्थं श्रुत्या लिङ्गेन च पाकः, स पश्चात् क्रियमाणोऽनर्थकः स्यात्। होमोऽप्यसति द्रव्ये न निर्वर्तेत। अतः पक्त्वा होमः।

इति द्वितीयं क्रमस्य क्वचिदार्थिकत्वाधिकरणम्।

---

क्रमस्य क्वचिदनियमाधिकरणम् ॥ ३ ॥

## अनियमोऽन्यत्र ॥ ३ ॥

यत्रोक्तवक्ष्यमाणनियमकारणाभावः, तत्रानियम एव क्रमस्य। यथा 'वसन्तमृतू'नामि'त्यादीनाम् एको मम'एका तस्येत्ये'वमादीनां च शाखाभेदेनाम्नातानामप्रयाजानुमन्त्रणमन्त्राणानां यच्छाखागतेनानुमन्त्रणमन्त्रेन समित्प्रथममनुमन्त्रितः, तच्छाखागतेनैव तनूनपादपि प्रवृत्तिक्रमादिति चेत्? न। प्रत्यासत्त्यनुग्रहाय हि प्रवृत्तिक्रमः वक्ष्यते, न चेहानेकशाखागतानामनुमन्त्रणानां मिथः प्रत्यासत्तिर्विहिता, यद्वशात्प्रवृत्तिराश्रीयेत। अतोऽत्रानियमः।

इति तृतीयं क्रमस्य क्वचिदनियमाधिकरणम्।

### क्रमस्य क्वचित्पाठानुसारिताधिकरणम् ॥ ४ ॥

**क्रमेण वा नियम्येत, क्रत्वेकत्वे तद्गुणत्वात् ॥ ४ ॥ अशब्द इति चेत्स्याद्वाक्य शब्दत्वात् ॥५॥ अर्थकृते वऽनुमानं स्यात्क्रत्वेकत्वे; परार्थत्वात्स्वेन त्वर्थेन सम्बन्धस्तस्मात्स्वशब्दमुच्यते ॥ ६ ॥ तथा चान्यार्थदर्शनम् ॥ ७ ॥**

'समिधो यजति, तनूनपातं यजती'ति क्रमेण पठितानां यागानामनियमेनानुष्ठानम्, उत पाठक्रमेणेति। श्रुत्यर्थयोरभावात्पाठस्याविधायकत्वात्, विधीनाञ्च पदार्थमात्रपर्यवसानादनियम इति प्राप्ते—

ब्रूमः—यथापाठमनुष्ठानं तथैव प्रतिपत्तितः।
स्मृतिः प्रयोगवेलायां वाक्यैरेव च कर्मणाम् ॥ ४ ॥

क्रमपठितेषु हि पदार्थेषु गन्धपुष्पादिषु तथैवानुष्ठानं लौकिकाः प्रतिपद्यन्ते। वेदाच्चाध्ययनोपात्तात्प्रयोजनं शक्यते कर्तुम्, तस्य सर्वस्यार्थेन वेदोपादानम्। शक्यते च विधिवाक्येभ्योऽपि सम्बन्धनिमित्तस्मरणं प्रयोगकाले पदार्थानाम्-कर्तुमिति, तदपि प्रयोजनम्। स्वाध्यायविधिविहितश्च पाठक्रमो विध्यवस्थायामनुपयुक्तः स्मृत्यवस्थायामुपयुज्यते। यथापाठञ्च क्रियमाणं स्मरणं तत्क्रममेव भवति। स्मृतिकार्यञ्चानुष्ठानमिति, तस्यापि स एव क्रमः। तस्मात्पाठक्रमेणात्र-क्रमनियमः।

इति चतुर्थं पाठक्रमाधिकरणम्।

---

### प्रवृत्तिक्रमाधिकरणम् ॥ ५ ॥

**प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ॥ ८ ॥ सर्वमिति चेत् ॥ ९ ॥ नाकृत्वात् ॥ १० ॥ क्रत्वन्तरवदिति चेत् ॥ ११ ॥ नासमवायात् ॥ १२ ॥**

वाजपेये प्राजापत्याः पशवः सह क्रियन्ते, तत्रोपाकरणनियोजनादयः सान्निपातिनः प्रतिपश्वावर्तनीयाः, तेषां चावृत्तिर्नैकस्य पशोः कार्त्स्न्येन कृत्वा, अपरस्यापि तथैव क्रियत इत्येवम्, किं तर्हि सर्वेषामुपाकरणं यतः कुतश्चित्

पशोरारभ्य कृत्वा, ततो नियोजनमिति वक्ष्यामः। तत्रोपाकरणं यतः कुतश्चित्पशोरारभ्य क्वचित्समाप्यते। नियोजनादौ तु सन्देहः—किं तत्राप्यनियमः? उत येन क्रमेणोपाकरणं प्रवृत्तम्, स एवोत्तरत्रापीति नियामकाभावात्प्रथमवत् द्वितीयादावप्यनियमः।

प्रवृत्त्या वा नियम्येत प्रत्यासत्तेरनुग्रहात्।
अन्यथा व्यवधानं स्यादनुज्ञाताधिकैरपि ॥ ५ ॥

एकैकस्य हि पशोः पदार्था मिथः प्रत्यासन्नाः कर्तव्याः 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'ति वचनावगतपश्वन्तरसाहित्यबलादन्यदीयैः षोडशभिः पदार्थैर्व्यवधानमनुजानाति, नाधिकैः। प्रवृत्त्या च क्रमनियमे तावद्भिरेव व्यवधानं भवति, अन्यथाऽधिकैरपि स्यात्, तस्मात्प्रवृत्त्या नियमः।

इति पञ्चमं प्रवृत्तिक्रमाधिकरणम्।

स्थानक्रमाधिकरणम् ॥ ६ ॥

स्थानाच्चोत्पत्तिसंयोगात् ॥ १३ ॥

साद्यस्क्रे "सह पशून् आलभते" ति श्रुतम्। साहित्यं च सवनीयस्थाने इति स्थितम्। तत्रोपाकरणादीनां प्रतिपशु भेदे किं नियमः क्रमस्य, उताग्नीषोमीयस्य प्रथममुपाकरणम्? अथवा सवनीयस्ये ति? नियामकाभावादनियमे, प्रकृतिदर्शनाद्वाऽग्निषोमीयस्य प्राथम्ये प्राप्ते। सवनीयस्येत्याह—

आश्विनग्रहणेनासौ पर्युपस्थाप्यते यतः।
इतरश्चलितः स्थानान्नोपस्थाप्येत केनचित् ॥ ६ ॥

अग्नीषोमीयप्रणयनानन्तरं ह्यग्नीषोमीयस्य स्थानम्, स तेनोपस्थितोऽपि सहालम्भवचनेन तस्मात्स्थानाच्चलितत्वादननुष्ठितः। अत्र तु न किञ्चित्तस्य उपस्थापकमस्ति, सवनीयः स्वस्थानादस्खलितः सन् आश्विनग्रहणादुपस्थितत्वात्, तदनन्तरमुपाक्रियते, ततः साहित्यवचनादितरोपाकरणम्। अतः सवनीयस्यैव प्राथम्यम्, इतरयोस्तु मिथः क्रमेऽनियम एव, तयोरुपस्थाने विशेषाभावात्। अथवा प्रकृतिदृष्टपौर्वापर्यमात्रमसति बाधकेऽनुग्रहीतव्यमग्नीषोमीयमुपाकृत्य, आनुबन्ध्योपाकरणम्।

इति षष्ठं स्थानक्रमाधिकरणम्।

अङ्गक्रमस्य मुख्यक्रमानुसारिताधिकरणम् ॥ ७ ॥

## मुख्यक्रमेण वाङ्गानां तदर्थत्वात् ॥ १४ ॥

'सारस्वतौ भवतः' इति यागद्वयं विहितं स्त्रीपुंसदेवत्यम्, 'एतद्वै दैव्यम् मिथुनमि'ति वाक्यशेषात्। तत्र स्त्रीदेवत्यस्य प्रथममनुष्ठानम्, ततः पुन्देवत्यस्य, याज्यानुवाक्यापाठक्रमात्। तत्र चोदकप्राप्तो निर्वापः किमनियमेन कर्तव्यः ? उत स्त्रीदेवत्यं निरुप्य, ततः पुंदेवत्यमिति। नियमकारणाभावादनियमः। मुख्यक्रमात्तु स्त्रीदेवत्यं प्रथममिति स्थितम्। ननु च प्रवृत्त्या नियमः सिद्ध्यति, येन क्रमेण याज्यानुवाक्ययोः प्रवृत्तिः, स एव निर्वापादीनामुपाकरणक्रम इव नियोजनादीनाम्। पूर्वपदार्थप्रवृत्त्या उत्तरेषां नियमः, नोत्तरप्रवृत्त्या पूर्वेषामिति चेत् ? न। प्रत्यासत्त्यनुग्रहाविशेषात्तन्निबन्धनत्वाच्च क्रमनियमस्य, सत्यम्, मुख्यक्रमादपि क्रमनियमः सिद्ध्यतीत्युदाहृतम्।

असंकीर्णोदाहरणप्रदर्शनम्।

अन्यतोऽपि सिद्ध्यत्यर्थे किमर्थं कारणान्तरमुपन्यस्तम्, यद्यपीह प्रमाणयोः सङ्करः, न तु सर्वत्रैव प्रमाणे सङ्कीर्णे। अस्ति ह तदुदाहरणम्, यत्रासिद्ध्यन् प्रवृत्त्या नियमो मुख्यक्रमादेव सिद्ध्यति। दर्शपूर्णमासयोर्दध्नः पूर्वं धर्माः प्रवर्तन्ते शाखाहरणादयः, तत आग्नेयस्य निर्वापादयः। याज्यानुवाक्ययोस्तु विपरीता प्रवृत्तिः। पाठवशात्तत्र भूतभाविप्रवृत्तिद्वयवशात् प्रयाजशेषाभिघारणे अनियमः प्राप्नोति। मुख्यक्रमात्त्वाग्नेयस्य प्रथममभिघारणम्। तदेतच्चतुर्थे पादे वक्ष्यामः। तस्मादनवद्यम्।

किं पुनः कारणं मुख्यक्रमेणाङ्गानां नियमे ? प्रत्यासत्त्यनुग्रहः। एवम्—सत्यङ्गप्रधानयोर्यावदनुज्ञातमव्यवधानं भवति, इतरथा तु पश्चाद्भाविनः प्रधानस्य प्रथममङ्गं क्रियमाणं प्रधानेनात्यन्तव्यवहितं स्यात्, तस्मान्मुख्यक्रमेण नियमः। अत्र प्रधानप्रत्यासत्तिरङ्गानां नियमकारणम्। प्रवृत्तिक्रमे तु अङ्गानां मिथः प्रत्यासत्तिरित्येतावान्विशेषः।

इति सप्तममंगक्रमस्य मुख्यक्रमानुसारिताधिकरणम्।

अङ्गेषु मुख्यक्रमापेक्षया पाठस्य बलवत्त्वाधिकरणम् ॥ ८ ॥

## प्रकृतौ तु स्वशब्दत्वाद्यथाक्रमं प्रतीयेत ॥ १५ ॥

दर्शपूर्णमासयोराग्नेयानन्तरमाज्यहविरुपांशुयाजः, ततोऽग्नीषोमीयम् पुरोडाशहविः। तत्र किं मुख्यक्रमादाज्यनिर्वापः पूर्वम्, उत पाठक्रमादाग्नीषोमीयनिर्वाप इति।

तत्र मुख्यक्रमादाज्यनिर्वापस्य पुरस्क्रिया ।
पाठतस्त्वौषधस्यैव प्राथम्यमनपेक्षतः ॥ ७ ॥

मुख्यक्रमो हि मुख्ययोः क्रमं प्रथमं केनापि प्रमाणेनावगम्य, तदपेक्षयाम्, तत्साहित्यसंपत्तयेऽङ्गेषु कल्प्यमानो विलम्बते । पाठतस्त्वन्यानपेक्षादङ्गानामेव क्रमावधारणाद्बलीयस्त्वम् । अतः प्रथममौषधधर्माः, तत आज्यधर्माः ।

इत्यष्टमंमुख्यक्रमात्बलवत्वाधिकरणम् ।

ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वाधिकरणम् ॥ ९ ॥

**मन्त्रतस्तु विरोधे स्यात्प्रयोगरूपसामर्थ्यात्तस्मादुत्पत्तिदेशः सः ॥१६॥**

इदानीं पाठयोरेव मन्त्रब्राह्मणगतयोर्बलाबलचिन्ता । दर्शपूर्णमासयोरग्नीषोमीयस्य प्रथमं ब्राह्मणम्, तत आग्नेयस्य । विपरीतं मन्त्राम्नानम् ।

तत्र—विधिक्रमबलीयस्त्वमुत्पत्ताववधारणात् ।
उत्पन्नेषु नियुक्तेषु मन्त्रे मन्त्रक्रमो भवेत् ॥ ८ ॥

विधिक्रमोह्युत्पत्तिदशायामेव पदार्थानां गम्यते । मन्त्रक्रमस्तूत्पन्नेषु पदार्थेषु, मन्त्रेषु च विनियुक्तेषु पश्चादिति दुर्वलः ।

नैवं स्मृतिक्रमेणैव ह्यनुष्ठानक्रमो भवेत् ।
स्मारकक्रमतश्चापि स्मृतीनां क्रम इष्यते ॥ ९ ॥
मन्त्राश्चानन्यकार्यत्वात्स्मृत्यर्था विधयः पुनः ।
विधिनैव कृतार्थत्वान्नावश्यं स्मारका मताः ॥ १० ॥

तस्मान्मन्त्रक्रमेणैवानुष्ठानम् । तदभावे तु विधिरपि स्मारक इति, तत्रैव क्रमस्य प्रामाण्यम् ।

इति नवमं ब्राह्मणपाठाद् मन्त्रपाठस्य प्राबल्याधिकरणम् ।

प्रयोगवचनात् चोदकस्य बलवत्त्वाधिकरणम् ॥ १० ॥

**तद्वचनात्तु द्विकृतौ यथाप्रधानं स्यात् ॥ १७ ॥ विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृति ॥ १८ ॥**

"आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्, सरस्वत्याज्यभागा स्यात्, बार्हस्पत्यश्चरुरि"ति। तत्रोपांशुयाजाग्नेयविकृत्योराज्य-बार्हस्पत्योः कस्य धर्माः प्रथममनुष्ठेयाः? किं प्रयोगविधिचोदिताङ्गप्रधानप्रत्यासत्त्यनुग्रहान्मुख्यक्रमेण आज्यधर्माणां प्रथममनुष्ठानम्? उत चोदकवशादाज्यधर्मेभ्यः पूर्वं बार्हस्पत्यौषध-धर्माः कर्तव्याः—इति।

तत्रौपदेशिकत्वेन प्रयोगवचनाश्रयः।
मुख्यक्रमोऽतिदेशेन प्रापितं बाधते क्रमम्॥ ११॥
नैवम्—प्राप्तानां हि पदार्थानां विकृतौ क्रमचिन्तनम्।
ते च सक्रमका एव प्राप्यन्ते चोदकादिह॥ १२॥
नैराकाङ्क्ष्यात् क्रमस्तेषां न भूयोऽन्यः प्रकल्प्यते।
शरवत्प्राप्तबाधोऽत्र कल्प्यत्वान्नोपपद्यते॥ १३॥

'शरमयं बर्हिरि'ति क्लृप्तं शास्त्रं पूर्वप्राप्तकुशबाधेन प्रवर्तते। कल्प्यस्तु प्रयोगवचनाश्रयः क्रमः, कल्पना चाकाङ्क्षाधीना, निराकाङ्क्षाश्चेह पदार्था इति, न कल्पनं सम्भवति।

इति दशमं प्रयोगवचनाच्चोदकस्य प्राबल्याधिकरणम्।



विकृतौ क्वचित् प्रकृतिधर्मानतिदेशाधिकरणम्॥ ११॥

**विकृतिः प्रकृतिधर्मत्वात्तत्कालः स्याद्यथाशिष्टम्॥ १९॥ अपि वा क्रयकालसंयुक्ता सद्यः क्रियेत तत्र विधेरनुमानात्प्रकृतिधर्मलोपः स्यात्॥ २०॥ कालोत्कर्ष इति चेत्॥२१॥ न तत्सम्बन्धात्॥२२॥**

चातुर्मास्येषु साकमेधस्तृतीयं पर्व। तत्र श्रूयते 'अग्नयेऽनीकवते-प्रातरष्टाकपालं निर्वपेत्, मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुम्, मरुद्भ्यः गृहमेधिभ्यः सायमोदनमि' तै. सं. १-८-४ ति। किमेता व्यहकाला इष्टयः? उत-सद्यस्कालाः—इति।

तत्रातिदेशतस्तासां प्राप्नोति व्यहकालता।
प्रातःश्रुतेर्विरोधश्च नामावास्याश्रुतेरिव॥ १४॥

'य इष्ट्या पशुना सोमेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा यजेते'ति-वचनं सांगानि कर्माणि अमावास्याकालं प्रत्युपाददानं द्वयोरह्नोस्तत्कालासम्भ-

वात्, युक्तं यदाऽतिदेशिकं व्यहकालत्वं बाधते। प्रातरादिश्रुतिस्तु अहर्द्वयेऽपि प्रातः-कालसम्भवादतिदेशाविरोधिनी, न तद्बाधं कर्तुमुत्सहते। तस्मादद्यतनेषु प्रातरादिषु प्रक्रम्य, श्वस्तनेषु प्रातरादिषु समापनीया इति प्राप्ते—

ब्रूमः—साङ्गं प्रारिप्सितं कर्म प्रातःकाले विधीयते।
स चाविशेषात्तन्त्रेण सर्वस्यैको भविष्यति॥ १५॥

चिकीर्षितार्थेन हि कालो विधीयते। सर्वाङ्गप्रधानयुक्ता च भावना-चिकीर्षिता, नैकदेशमात्रम्। अतो य एवैकः प्रातरादिकालः प्रयोगाय संगृह्यते, स एव सर्वप्रारिप्सायां संगृह्यमाणः प्रारम्भापरनाम्नः प्रक्रमस्याविशेषात्तन्त्रेणैक एव सर्वाङ्गयुक्तप्रधानार्थेनोपात्तो भवति, न प्रातर्द्वयस्यावकाशः। तस्मादुपदेशात्सद्यस्कालाः।

इत्येकादशं विकृतौ क्वचित् प्रकृतिधर्माननतिदेशाधिकरणम्।



तदाद्युत्कर्षतदन्तापकर्षाधिकरणम्॥ १२॥

अङ्गानां मुख्यकालत्वाद्यथोक्तम् उत्कर्षे स्यात्॥ २३॥ तदादि वाऽभिसम्बन्धात्तदन्तमपकर्षे स्यात्॥ २४॥

अग्निषोमीये पशौ प्रकृतितो हविरासादनोत्तरकाले प्राप्तानां प्रयाजानामपकर्षः श्रुतः 'तिष्ठन्तं पशुं प्रयजती'ति। तथोत्कर्षः सवनीयेऽनूयाजानाम्—'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ती'ति। तत्र किं श्रुतमात्रनिष्ठावुत्कर्षापकर्षौ? उत तदाद्युत्कर्षः, तदन्तापकर्ष इति संशये।

श्रुतोत्कर्षापकर्षाभ्यां वचनस्योपपत्तितः।
न तदन्ततदादीनां भवेतामप्रमाणकौ॥ १५॥
प्रधानसन्निधिश्चैवं बाधितो न भविष्यति।
ऊर्ध्वपूर्वपदार्थानामेवं प्राप्तेऽभिधीयते॥ १६॥
पूर्वेणोपस्थितं कार्यमुत्तरं कर्मचोदकात्।
प्राप्तं तदन्यथाभावे क्रमलोपाद्विलुप्यते॥ १७॥

अनूयाजोपस्थितास्तदुत्तरकालं सूक्तवाकादयः कर्तव्याः। अनुयाजेषूत्कृष्टेष्वनुत्कृष्टाः पूर्वं क्रियमाणा विगुणाः स्युः। एवमाघारोत्तरकाले कर्तव्याः

प्रयाजाः केवला अपकृष्यमाणः क्रमलोपाद्दुष्येयुः। तस्मात्तदादीनामुत्कर्षः, तदन्तानां चापकर्षः।

इति द्वादशमनुयाजाद्युत्कर्षप्रयाजान्तापकर्षाधिकरणम्।

प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभाविताऽधिकरणम् ॥ १३ ॥

प्रवृत्त्या कृतकालानाम् ॥ २५ ॥ शब्दविप्रतिषेधाच्च ॥ २६ ॥

प्रातरनुवाकप्रैषं होत्रे दत्त्वा, अनन्तरं 'प्रतिप्रस्थातः सवनीयान्निर्वपस्वे'ति-प्रेष्यती'ति विधायाऽनन्तरं प्रचरणीहोमादयः सौमिकाः पदार्थाः पठिताः। तत्र—प्रैषवशान्निर्वापस्तावत्तदेव कर्तव्यः, तदनन्तरं सौमिकाः पदार्थाः कर्तव्याः। 'अग्नीनग्नीन्विहर, बर्हिस्तृणीहि, पुरोडाशानलङ्कुर्वि'त्येतत्प्रैषपर्यन्ताः, स्तत ऐष्टिकाः-प्रोक्षणादयः ? उत प्रोक्षणादीन् प्रागलङ्करणात्कृत्वा ततः सौमिका इति। निर्वापः प्रतिप्रस्थातृकर्तृत्वान्नाध्वर्योः प्रोक्षणमुपस्थापयति, सौमिकानामपि निर्वापव्यवहितानां नास्त्युपस्थापकम्, तस्मादनियमः।

उच्यते। निर्वापेऽध्वर्योरपि कर्तृत्वमस्ति, प्रयोजकत्वात्, अतोऽसौ-प्रोक्षणादीन् उपस्थापयति, अतस्ते तावत्कर्तव्याः, ततः सौमिकाः।

इति त्रयोदशं प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभाविताधिकरणम्।

वैकृतयूपकर्ममात्रापकर्षाधिकरणम् ॥ १४ ॥

असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत ॥ २७ ॥

ज्योतिष्टोमे अग्नीषोमीयप्रणयनात्परतो यूपच्छेदनं पश्वङ्गमाम्नातम्। तत् 'दीक्षासु यूपं छिनत्ती'त्यपकृष्यमाणमग्नीषोमीयप्रणयनादीनपकर्षति ? उत-नेति संशये, प्रयाजवदाघारादीनपकर्षतीति प्राप्ते—

उच्यते—सौमिकेन पदार्थेन पाशुकस्य न हि क्रमः।
अङ्गं तदपकर्षेण सौमिको नापकृष्यते ॥ १८ ॥

आघारोत्तरकालत्वं प्रयाजादीनामङ्गम्, तन्मा बाधीति युक्तं यत्तदपकर्षे आघारोऽपकृष्यते। पाशुकस्य तु यूपच्छेदनस्य न सौमिकाग्नीषोमीयप्रणयना-

नन्तर्यमङ्गं यत्सिद्ध्यर्थं प्रणयनमपकृष्येत, भिन्नप्रयोगवचनपरिगृहीतत्वात्तयोः, एकप्रयोगान्तर्गतानां मिथः क्रमोऽङ्गं भवति। तस्माच्छ्रुतमात्रापकर्षः।

इति चतुर्दशं वैकृतयूपमात्रापकर्षाधिकरणम्।

---

दक्षिणाग्निकहोमानपकर्षाधिकरणम् ॥ १५ ॥

प्रासङ्गिकं च नोत्कर्षेदसंयोगात् ॥ २८ ॥

सवनीयपशुतन्त्रं सवनीयपशुपुरोडाशेषु प्रसज्यते, दाक्षिणाग्निकौ तु पिष्टलेप-फलीकरणहोमौ पशावविद्यमानौ पशुपुरोडाशार्थं कर्तव्यौ। तौ पाशुकैरनुयाजैः अग्निमारुतादूर्ध्वमुत्कृष्यमाणैरुत्कृष्येते, न वेति संशये, प्रकृतौ तत्परत्वेन दाक्षिणाग्निकयोः क्लृप्तक्रमत्वादुत्कर्षे प्राप्ते—

तत्रापि प्रयोगभेदादनुत्कर्षः पाशुकैरनुयाजैर्न पौरोडाशिकयोर्होमयोः क्रमोऽङ्गम्, यत उत्कृष्येयाताम् पौरोडाशिकास्त्वनुयाजा नैव क्रियन्ते, नोत्कृष्यन्ते यैर्दाक्षिणाग्निकयोर्होमयोरुत्कर्षः। तस्मात्तयोः स्वस्थान एवाऽनुष्ठानम्।

इति पञ्चदशं दक्षिणाग्निकहोमानपकर्षाधिकरणम्।

---

पुरोडाशाभिवासनान्तस्य दर्शेऽनपकर्षाधिकरणम् ॥ १६ ॥

तथाऽपूर्वम् ॥ २६ ॥

दर्शपूर्णमासयोर्हविरभिवासनोत्तरकाला वेदिराम्नाता पूर्वेद्युरमावास्यायामपकृष्यमाणा हविरभिवासनान्तान् पदार्थानपकर्षति,ने?ति संशये एकप्रयोजनसम्बन्धित्वात्पाठतश्च क्रमक्लृप्तेरनपकर्षे,क्रमलोपेन विगुणा वेदिः स्यादिति प्राप्ते—

ब्रूमः—सामान्येन क्रमोऽङ्गं स्यात्पाठतः प्रक्रियावशात्।
विशेषतः श्रुतं वाक्यादामावास्ये क्रमान्तरम् ॥ १९ ॥

हविरभिवासनोत्तरकालता हि दर्शपूर्णमासयोः सामान्यप्राप्त्याऽमावास्यायां स्यात्, पाठश्च तस्य प्रमाणम्, प्रकरणाच्च विनियोगः। पूर्वेद्युरनुष्ठानम् त्वमावास्यायामेव विशेषतो विहितम्, श्रौतश्चायं क्रमः। वाक्येन चामावास्यायाम् विनियोगः तत्र। यावदेव हविरभिवासनोत्तरकालतारूपः क्रमो दुर्बलप्रमाणकः

नैव कल्प्यते । तावत्पूर्वेद्युरनुष्ठानं चोद्यमानमक्लृप्तक्रमस्य वेदिमात्रस्य चोद्यते । न ततः प्राचाम् । तस्मादत्रापि श्रुतमात्रापकर्षः ।

इति षोडशं पुरोडाशाभिवामनान्तस्य दर्शेऽनपकर्षाधिकरणम् ।

सान्तपनीयाया अग्निहोत्रानुत्कर्षकताधिकरणम् ॥ १७ ॥

सान्तपनीया तूत्कर्षेदग्निहोत्रं सवनवद्वैगुण्यात् ॥ ३० ॥ अव्यवायाच्च ॥ ३१ ॥ असम्बन्धात्तु नोत्कर्षेत् ॥ ३२ ॥ प्रापणाच्च निमित्तस्य ॥ ३३ ॥ सम्बन्धात्सवनोत्कर्षः ॥ ३४ ॥

'मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरु'मिति तै० सं० १-८-४ति श्रुता सान्तपनीया मध्यन्दिने उपक्रान्ता दैवात्, मानुषाद्वा प्रतिबन्धात्सायङ्कालं यावदुत्कृष्टाऽग्निहोत्रमुत्कर्षति, नेति संशयः । यद्यपि चात्र भिन्नप्रयोगयोः सान्तपनीयाग्निहोत्रयोर्न मिथः क्रमोऽङ्गम्, तथापि सायंकाले द्वयोः सन्निपतितयोरवश्यंभाविनि पौर्वापर्ये सान्तपनीयां कृत्वा क्रियमाणस्य चाग्निहोत्रस्य कालातिपत्तिप्रसङ्गे सति, किं न्याय्यमितियुक्ता चिन्ता । तत्र सान्तपनीया तावत्स्वकालं मध्यन्दिनमतिपन्नैव, तस्याः कश्चिदुभयथाऽपि न विशेषः. अग्निहोत्रस्य तस्मिन्काले क्रियमाणस्य प्रणयनलोपः स्यात् । उत्कर्षे तु काललोपः । तत्र कस्यानुग्रहः ? कस्य लोप इति चिन्त्यते । तत्र-मुख्यत्वात्प्रणयनानुग्रहे साङ्गप्रयोगावधारणोत्तरकालप्राप्तेः कालस्य जघन्यत्वेन बाध इति प्राप्ते—

उच्यते—कालस्यानुपादेयत्वेन निमित्तविशेषणत्वात्तस्मिन्प्राप्तमग्निहोत्रम् किञ्चिदङ्गमपहायापि कर्तव्यम् । तस्मादग्निहोत्रं हुत्वा सान्तपनीया समापनीया ।

इति सप्तदशं सान्तपनीयाया अग्निहोत्रानुत्कर्षकताधिकरणम् ।

उक्थ्यानुरोधेन षोडश्युत्कर्षाधिकरणम् ॥ १८ ॥

षोडशी चोक्थसंयोगात् ॥ ३५ ॥

ज्योतिष्टोमे षोडशिनं प्रकृत्याऽऽमनन्ति 'तं पराञ्चमुक्थ्येभ्यो निर्गृह्णाति-' षोडशिनमि'ति । तद्यदा दैवादुक्थ्यानामुत्कर्षो भवति, किं तदा षोडश्युत्कृष्यते नेति संशयः ।

तच्च नोत्कर्षणं युक्तं स्तोत्रकालोपसङ्ग्रहात् ।
उत्कर्षपक्षे हीयेत स्वकालात्स्तोत्रमस्य हि ॥

यदि हि षोडशिग्रहयागाभ्यास उत्कृष्येत ततः, प्रधानकालत्वादङ्गानाम् 'ग्रहं वा गृहीत्वा चमसं वोन्नीय, स्तोत्रमुपाकुर्यादि'ति वचनात्—तदङ्गभूतं स्तोत्रमप्युत्कृष्येत । तत्र 'समयाध्युषिते सूर्ये षोडशिनस्तोत्रमुपाकरोती'ति विहितः कालो बाध्येत । नन्वनुत्कर्षपक्षेऽप्युक्थ्यपरभावो बाध्येत, बाध्यताम् क्रममात्रं हि । तत्कालस्तु बलीयानित्युक्तम्, तस्मादनुत्कर्षः ।

उच्यते—क्रमोऽपि तु प्रधानाङ्गभूतत्त्वाद्बलवानसौ ।
कालस्तोत्राङ्गभूतत्वाद्दुर्बलो बाधमर्हति ॥ २० ॥

'तं पराञ्चमुक्थेभ्यः' इति वचनात् षोडशियागाभ्यासस्योक्थ्यपरभावोऽङ्गम्, सोऽनुत्कृष्यमाणे प्रधानाङ्गं सद्बाध्येत, न चैतद्युक्तम् । अतोवरमङ्गभूतस्तोत्राङ्गस्यैव कालस्य बाध इत्युत्कर्षः ।

इत्यष्टादशमुक्थ्यानुरोधेन षोडश्युत्कर्षाधिकरणम् ।

इति शास्त्रदीपिकायां पञ्चमाध्यायस्य प्रथमः पादः ॥ १ ॥

—०—

# अथ पञ्चमाऽध्याये द्वितीयः पादः

## पदार्थानुसमयन्यायः

### वाजपेयपशूनां सर्वेषामेकदोपाकरणादिधर्मानुष्ठानाधिकरणम् ॥ १ ॥

**सन्निपाते प्रधानामेकैकस्य गुणानां सर्वकर्म स्यात् ॥ १ ॥ सर्वेषां चैकजातीयं कृतानुपूर्व्यत्वात् ॥ २ ॥ कारणादभ्यावृत्तिः ॥ ३ ॥**

'वाजपेये प्राजापत्याः पशवः' 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'त्येकस्मिन्काले विहिताः सह प्रयोक्तव्याः । तेषामारादुपकारकाणां तन्त्रम् । द्रव्यसंस्कारास्तूपाकरणनियोजनादयः प्रतिपशुभेदेन कर्तव्याः । ते किमेकैकस्य कार्त्स्न्येन कृत्वा, ततोऽपरस्य कर्तव्याः ? किं वोपाकरणं सर्वेषां कृत्वा, ततो नियोजनमिति ।

तत्र एकैको हि पशुः स्वाङ्गान्यव्यवेतान्यपेक्षते। चोदकोऽप्येवमेव। अतः काण्डानुसमयो भवेत्। प्रयोगवचनावगतसाहित्यबलेन ह्येकैकस्य पशोर्धर्माः संश्लिष्टाः कर्तव्याः। प्रकृतौ चोपाकरणादीनामानन्तर्यं। कृतम् इहापि प्रतिकर्मावसायिना चोदकेन प्रतिपशु प्राप्यते, अत एकस्योपाकरणादिकं सर्वं गुणकाण्डं कृत्वा ततोऽपरस्य कर्तव्यम्, वाचनिकं तु साहित्यमारादुपकारकतन्त्रत्वादप्युपपन्नम्।

उच्यते—वचनेनैककालत्वं पशूनामिह चोदितम्।
न तत्प्रयोगवचनात् चोदकाद्वापि बाध्यते ॥ २१ ॥

कालपनिकं प्रयोगवचननिबन्धनं साहित्यम्, चोदकं चानुमानम्, प्रत्यक्षवचनेन तु 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'त्येककालप्रयोगः पशूनामवगम्यते। अतो यस्मिन्नेव क्षणे एकस्योपाकरणं कर्तव्यमापतति, तस्मिन्नेवापरस्योपाकरणम्। कर्तव्यं सदशक्यतया केवलं न क्रियते। द्वितीयक्षणे न कश्चिद्धेतुर्येन पश्वन्तरम् नोपाक्रियेत। अतः प्रथमं पदार्थं सर्वेषां कृत्वा ततो द्वितीयादिः कर्तव्यः। एवं दर्शपूर्णमासादिषु अनेकप्रधानसमवाये पदार्थानुसमय एव न्याय्यः, न काण्डानुसमय इति स्थितम्।

यत्र प्रधानविरोधो भवति पदार्थानुसमये, तत्र काण्डानुसमय एवेति। यथाऽश्वप्रतिग्रहेष्टयां शते सहस्रे वा पुरोडाशेषु श्रप्यमाणेषु यदि सर्वेषामधिश्रपणं कृत्वाऽऽद्यस्योद्वासन क्रियेत, ततः स दह्येत। तस्मान्न तत्र प्रधानविरोधे पदार्थानुसमयः।

**इति प्रथमां वाजपेयपशुनांसर्वेषामेकदोपाकारणधर्मानुष्ठानाधिकरणम्।**



## मुष्टिकपालादीनां समुदायानुसमयाधिकरणम् ॥ २ ॥

**मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन ॥ ४ ॥**

**सर्वाणित्वेककार्यत्वादेषां तद्गुणत्वात् ॥ ५ ॥**

दर्शपूर्णमासयोराग्नेयाग्नीषोमीयनिर्वापयोः पदार्थानुसमये स्थिते, संशयः- किमेकैकेन मुष्टिनाऽनुसमयः? उत चतुर्भिर्मुष्टिभिरिति। यद्येकैको मुष्टिः पृथक् पदार्थः, तत एकैकेनाऽनुसमयः। अथ चतुर्मुष्टिर्निर्वाप एकः पदार्थः, ततश्चतुर्मुष्टिभिरिति,

प्रतिमुष्टि यतीभावः पर्यवस्यन् हि दृश्यते ।
मुष्टिना मुष्टिरेवातोऽनुसमायो न संघशः ॥ २२ ॥

उच्यते—अङ्गत्वं चोदनागम्यं पदार्थश्चाङ्गमेव नः ।
चतुर्णां चेह मुष्टीनां निर्वापः शास्त्रचोदितः ॥ २३ ॥

अङ्गपर्यायो हि पदार्थशब्दः, तेन ययोः प्रधानयोः सहानुष्ठानम्, तयोर्यदङ्गम्, तदेकस्य कृत्वा, अपरस्य कर्तव्यम् । 'चतुरो मुष्टीन्निर्वपती'ति शास्त्राच्चतुर्मुष्टिनिवापोऽङ्गम् । एकैकस्तु मुष्टिस्तदवयवः, न पदार्थः, तथाविधनात् । पदार्थेन चानुसमयः, न तदवयवैः । अतश्चतुर्भिरनुसमयः ।

एवं कपालोपधानेऽपि नैकैकेनानुसमयः, किन्तु आग्नेयस्य कपालानि सर्वाण्युपधाय, अग्नीषोमीयस्योपधानम्, एवं 'द्विर्हविषोऽवद्यती'त्यत्रापि नैकावदानेनानुसमयः । एवमाञ्जनादिष्वपि योज्यम् ।

इति द्वितीयं मुष्टिकपालाद्यधिकरणम् ।

अवदानस्य प्रदानान्तानुसमयाधिकरणम् ॥ ३ ॥

## संयुक्ते तु प्रक्रमात्तदन्तः स्यादितरस्य तदर्थत्वात् ॥ ६ ॥

दर्शपूर्णमासयो 'र्द्विर्हविषोऽवद्यती'ति श्रुतम् । तत्र नैकेनाऽवदानेनानुसमयः इति स्थितम् । इदानीं तु किं द्वाभ्यामवदानाभ्यामनुसमयः ? अथवाऽवदानादिप्रदानान्तेनेति चिन्त्यते ।

तत्र—वचनेन द्विसंख्याकमवदानं विधीयते ।
तावानेकः पदार्थोऽतस्तावताऽनुसमीयते ॥
नैवं होमविधेरर्थात् खण्डने प्रापिते सति ।
विशेषमात्रं हविषो द्विरित्यत्र विधीयते ॥

'चतुरवत्तं जुहोती'त्यवत्तस्य होमो विधीयते । न चाकृत्वाऽवदानमवत्तहोमसम्भव इत्यर्थप्राप्तमवदानं न विधातव्यम् । 'द्विर्हविषोऽवद्यती'त्यर्थप्राप्तस्यावदानस्यविशेषमात्रस्य विधानं 'हविषो द्विरिति' यद्यपि विधीयते । तथाऽपि दृष्टार्थत्वात् 'चतुरवत्तं जुहोती'त्यस्यावयवत्वेनैव विधेयम्, न स्वातन्त्र्येण । अतोऽवदानादिप्रदानान्तेनानुसमयः ।

इति तृतीयमनुसमयाधिकरणम् ।

अञ्जनादेः परिव्याणान्तस्याऽनुसमयाधिकरणम् ॥ ४ ॥

**वचनात्तु परिव्याणान्तमञ्जनादि स्यात् ॥ ७ ॥ कारणाद्वाऽनवसर्गः स्याद्यथा पात्रवृद्धिः ॥ ८ ॥ न वा शब्दकृतत्वान्न्यायमात्रमितरदर्थात्पात्रविवृद्धिः ॥ ९ ॥**

अग्नीषोमीये पशौ यूपधर्माः—अञ्जनम्, उच्छ्रयणम्, संमानम्, परिव्याणमितियूपगणे चोदकप्राप्ताः किमेकैकशोऽनुसमेतव्याः ? उताञ्जनादिना परिव्याणान्तेनानुसमय इति संशये, पूर्वेण न्यायेन पदार्थानुसमयः। नन्वञ्जनादिपरिव्याणान्तं 'यजमानो यूपं नावसृजेदि'ति प्रकृतावनवसर्गश्चोदकेनेह प्राप्तः—कथमेकैकशोऽनुसमीयमाने शक्यते कर्तुम्। एवं मन्यते प्रकृतावार्थिकोऽनवसर्गः यजमानेनाऽध्वर्योः साहाय्यमाचरताऽनुष्ठितः,तदनुवादमात्रं वचनम्, न चार्थिकम् चोदकः प्रतिदिशति। अतः पदार्थानुसमयः।

नैवं नियोगतोऽप्राप्तेरनुत्सर्गो विधीयते।
वाक्यञ्चार्थवदेवं स्याद्वादमात्रं त्वनर्थकम् ॥ २२ ॥
गणेऽपि चोदकेनातः प्राप्यतेऽनवसर्जनम्।
तेनाञ्जनादिसंङ्घोऽत्र संघेनाऽनुसमीयते ॥ २३ ॥

इति चतुर्थमञ्जनादिपरिव्याणान्तस्यानुसमयाधिकरणम्।

—:०:—

दैवताद्यवदानेषु पदार्थानुसमयाधिकरणम् ॥ ५ ॥

**पशुगणे तस्य तस्यापवर्जयेत् पश्वेकत्वात् ॥ १० ॥ दैवतैर्वैककर्म्यात् ॥ ११ ॥ मन्त्रस्य चार्थवत्त्वात् ॥ १२ ॥**

अग्नीषोमीये पशाववदानानन्तरं प्रदाने प्राप्ते, वचनमिदमाम्नायते- 'दैवतान्यवदाय, न तावत्येव होतव्यम्, सौविष्टकृतान्यवद्यति, सौविष्टकृतान्यवदाय, न तावत्येव होतव्यम्, 'ऐडान्यवद्यती'ति। तदेकदेवतेषु पशुगणेषु विचार्यते—किमेकस्य पशोर्दैवतसौविष्टकृतैडान्यवदायोऽपरस्यापि त्रयमवदातव्यम्? उत सर्वेषां दवतान्यवदाय, ततः सौविष्टकृतानि, तत ऐडानि—इति।

तत्र—प्रकृतौ दैवतादीनामानन्तर्यमिहापि तत्।
एकैकस्य पशोः कार्यः काण्डानुसमयस्ततः॥ २४॥

यद्येकैकस्य पशोर्दैवतान्यवदीयेरन्, ततः प्रथमस्य पशोर्यद्दैवतसौविष्टकृतानन्तर्यं चोदकप्राप्तम्, तद्बाध्येत। तस्मात्काण्डानुसमयः।

नैवम्—पश्वैक्यात्प्रकृतावर्थादानन्तर्यमनुष्ठितम्।
इह त्वनेकसाहित्यात्साजात्यात्तु समीयते॥ २५॥

यावन्तः पदार्थाः कर्त्तव्याः, ते मिथःसंश्लिष्टा कर्तव्या इत्येतावत् प्रकृतौ विवक्षितम्। तत्रैकत्वात्पशोर्दैवतसौविष्टकृतानन्तर्यमर्थात्संजातम्, न तु तदिह प्राप्यते। अतः क्रतुसाहित्यसम्पत्तये समानजातीयैः समानजातीयानामनुसमयः—दैवतैर्दैवतानामित्येवं कर्तव्यः।

इति पञ्चमं दैवताद्यवदानेषु पदार्थानुसमयाधिकरणम्।

—:०:—

नानाबीजेष्टौ उलूखलादीनां तन्त्रताधिकरणम्॥ ६॥

**नानाबीजेषु एकमुलूखलं विभवात्॥१३॥ विवृद्धिर्वा नियमानुपूर्व्यस्य तदर्थत्वात्॥१४॥ एकं वा तण्डुलभावाद्धन्तेस्तदर्थत्वात्॥१५॥**

राजसूये नानाबीजेष्टिः 'अग्नये गृहपतयेऽष्टाकपालं कृष्णानां व्रीहीणाम्, सोमाय वनस्पतये श्यामाकञ्चरुमि'त्यादि। तत्र प्रकृतितः प्राप्तमुलूखलं किं तन्त्रम्? उत भिन्नमिति विचारः। फलविचारश्चायम्। अधिकरणशरीरं 'तु किं कृष्णाजिनास्तरणोलूखलाधिवर्तनबीजावापान्वघातपरावपनविवेचनफलीकरणानि - पृथक् पदार्थत्वादेकैकशोऽनुसमेतव्यानि? उत कृष्णाजिनास्तरणादिफलीकरणान्त एकः पदार्थः, तावता चानुसमयः—इति।

तत्र नानापदार्थत्वं विधिभेदेन मन्यते।
तण्डुलीकरणांशत्वादपृथक्त्वं तु गम्यते॥ २६॥

यद्यपि 'कृष्णाजिनमधस्तादवस्तृणाति, शूर्पेण विविनक्ती'ति विधिभेदः, तथाऽपि तण्डुलभावनावयवत्वेन तद्विधानम, न स्वातन्त्र्येण, अदृष्टार्थत्वप्रसङ्गात्। एका चासौ तण्डुलभावना कृष्णाजिनास्तरणादिफलीकरणपर्यंतं प्रततेति, तावानेकः

पदार्थ इति, तावताऽनुसमयः, 'संयुक्ते तु प्रक्रमादि' ५-२-२६ त्यत्र चतुरवत्तचोदनयाऽर्थप्राप्तावदाने सख्यामात्रं द्विर्हविषः 'इति विधीयते' न तु द्वित्वविशिष्टमवदानमित्येवं पदार्थत्वं निराकृतम्। इह तु सत्यपि विधिभेदेऽवयवत्वेन विधानादनन्यत्वमुच्यते। यत्तु तत्र सत्यपि विधिभेदेऽन्यत्वं नास्तीत्युक्तम्, तदिह सिद्धमेवोक्तमित्यनवद्यम्।

इति षष्ठं नानाबीजेष्टौ उलूखलादीनां तन्त्रताधिकरणम्।

अग्नीषोमीयपशौ प्रयाजानुयाजयोः पात्रभेदाधिकरणम्॥ ७॥

## विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात् स्यात्॥ १६॥

दर्शपूर्णमासयोः 'अष्टावुपभृति गृह्णाती'ति प्रयाजानुयाजार्थं चतुर्गृहीतद्वयमेकस्यामुपभृति युगपद्गृहीतं तथैव पशौ प्राप्तम्। तत्रानुयाजानां द्रव्यविकारः श्रूयते 'पृषदाज्येनानुयाजान् यजती'ति। प्रयाजाज्यन्त्वविकृतमेव। तत्र द्वयोः सङ्करेऽवश्यं भाविनि, चिन्त्यते किं कालभेदेन तस्यामेवोपभृति द्वयं गृहीतव्यम्? उत तस्मिन्नेव काले पात्रभेदेनेति।

तत्र—पदार्थत्वाच्छ्रुतत्वाच्च पात्रैकत्वस्य संग्रहः।
गुणत्वात्पाठकल्प्यत्वात् क्रममात्रं तु बाध्यते॥ २७॥

'अष्टावुपभृति गृह्णाती'ति श्रुतमेकत्वम्, पदार्थश्च। क्रमस्तु पदार्थानाङ्गुणः, पाठकल्प्यश्च।

तत एकस्मिन्नेव पात्रे प्रयाजाज्यं गृहीत्वा प्रयाजेषु हुतेषु, पश्चात्पृषदाज्यं ग्रहीतव्यमित्येवं प्राप्ते—

उच्यते—उभयोर्ग्रहणाङ्गत्वात्पात्रैक्यस्य क्रमस्य च।
विकृतौ चानुमानेन प्राप्तेस्तुल्यं बलाबलम्॥ २८॥

एवं चाविशेषे सति प्रयाजाज्यग्रहणेनोपस्थितस्यानुयाजपृषदाज्यग्रहणस्याकरणे न किञ्चित् कारणमस्तीति, तदैव पात्रान्तरमुपादाय ग्रहीतव्यम्।

इति सप्तममग्नीषोमीयपशौ प्रयाजानुयाजयोः पात्रभेदाधिकरणम्।

नारिष्टहोमस्योपहोमपूर्वताधिकरणम् ॥ ८ ॥

प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्नत्वचोदितस्य शेषाम्नानम् ॥ १७ ॥ मुख्यानन्तर्यमात्रेयस्तेन तुल्यश्रुतित्वादशब्दत्वात्प्राकृतानां व्यवायः स्यात् ॥१८॥ अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात् ॥१९॥ तथा चान्यार्थदर्शनम् ॥ २० ॥

'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेदि'ति नक्षत्रेष्टिं विधाय, ऊपहोमा विहिताः—'सोऽत्र जुहोति, अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहे'ति। प्रकृतौ च प्रधानानन्तरं नारिष्टहोमः। ते चोदकेनात्र प्राप्ताः। तत्र संशयः—किमुपहोमान् हुत्वा, ततो नारिष्टहोमाः, विपरीतं वेति।

तत्र प्रत्यक्षपाठेन प्रधानानन्तरश्रुतान्।
उपहोमाननुष्ठाय नारिष्ठानामनुष्ठितिः ॥ २९ ॥

उच्यते—क्लृप्तोपकारसाकाङ्क्षा विकृतिः प्राकृतं पुरः।
गृह्णाति वैकृतं पश्चात्तदाकाङ्क्षा वशीकृता ॥ ३० ॥

प्रकारापेक्षा हि विकृतिभावना प्रत्यक्षश्रुतमपि संनिहितमकॢप्तोपकारम्परित्यज्य प्राकृतं प्रकारमुत्पादकपदार्थविशिष्टं प्रथमं गृहीत्वा पश्चात्सन्निध्याऽम्नाताङ्गं प्रयोजनापेक्षावशेन वैकृतं गृह्णाति, तेन यत्र प्राकृतवैकृतयोरेकस्थानपतितयोः क्रमापेक्षा, तत्रावगतिक्रमानुसारेण प्राकृतं कृत्वा, वैकृतं कर्तव्यम्। न च प्रत्यक्षपाठविरोधः, प्रधानवाक्यशेषेण प्रकृतिवच्छब्देन प्रापितात् प्राकृतात् पश्चादेव वैकृतं पठितं भवति। तस्मान्नारिष्टान्कृत्वा पश्चादुपहोमाः कार्याः।

इति अष्टमं नारिष्टहोमानामुपहोमपूर्वताधिकरणम्।



त्रिदेवनादीनामभिषेकपर्वताधिकरणम् ॥ ९ ॥

कृतदेशात्तु पूर्वेषां स देशः स्यात्तेन प्रत्यक्षसंयोगात् न्यायमात्रमितरत् ॥ २१ ॥

राजसूयेऽभिषेचनीयं सोमयागं विधाय, अनन्तरं विदेवनादयोऽभिषेकान्ताः-पदार्था विहिताः । तत्राभिषेकोऽभिषेचनीयप्राकृताङ्गमध्येऽपकृष्टो 'माहेन्द्रस्य स्तोत्रं प्रति अभिषिच्यत' इति । सोऽपकृष्यमाणः प्राचो विदेवनादीनपकर्षति ? नेति संशयः ।

तत्र—अपूर्वोह्यभिषेकोऽतो न तदन्तापकर्षणम् ।
करोति वेदिवत्तस्मात्तन्मात्रमपकृष्यते ॥ ३१ ॥

'तथाऽपूर्वमि' ५–१–२९ त्यत्र ह्येतदवस्थितम्—अपूर्वः पदार्थोऽपकृष्यमाणो न प्राचीमपकर्षाय कल्पत इति । तेन यथा 'पूर्वद्युरमावास्यायां वेदिम्-करोती'ति वेदिमात्रापकर्षः,क्लृप्तक्रमत्त्वान्न पूर्वेषाम्,तथाऽत्राप्यभिषेकस्यैवापकर्षः, अन्ये 'त्वन्ते तु बादरायणः' इति न्यायादभिषेचनीयसकलप्राकृताङ्गोत्तरकालम् कर्तव्या इति प्राप्ते—

अभिधीयते—अभिषेकेण पूर्वेषाङ्क्रमः प्रत्यक्षपाठतः ।
परत्वं प्राकृताङ्गेभ्यस्त्वमनुमानेन गम्यते ॥ ३२ ॥

यद्यप्यत्राप्रकृतिपूर्वत्वेन प्रयाजादिवैलक्षण्यादपकर्षावस्थायां वेदिवत् क्लृप्तः क्रमः, तथाऽप्यत्रैव क्रमकल्पनायामभिषेकपूर्वभावित्वं विदेवनादीनाम् प्रत्यक्षपाठनिमित्तम, अभिषेचनीयप्राकृताङ्गोत्तरकालता तु तेषामनुमानात्, तच्च दुर्बलम् । अतः प्रत्यक्षपाठाद्विदेवनादीनामभिषेकात्पूर्वानुष्ठानात्तदन्तापकर्षः ।

इति नवमं विदेवनादीनामभिषेकपूर्वताधिकरणम् ।



सावित्रहोमादीनां दीक्षणीयापूर्वप्रयोगाधिकरणम् ॥ १० ॥

## प्राकृताच्च पुरस्ताद्यत् ॥ २२ ॥

अग्नौ सावित्रहोमोखासम्भरणाद्यपूर्वपदार्थान् विधाय, पश्चाद्दीक्षणीयादयः प्राकृताः सगुणाः। तत्र दीक्षणीयादीन् कृत्वा सावित्रादयः ? उत विपरीतम् वेति संदेहः ।

तत्र—प्रकृतेः पूर्वविज्ञानात्प्राकृतानां पुरस्क्रिया ।
पश्चात्तु वैकृतानां स्याद्बादरायणदर्शनात् ॥ २३ ॥

दीक्षणीयादिपुनःश्रवणन्तु गुणार्थत्वान्न पश्चादनुष्ठानन्दीक्षणीयादीनाङ्गमयति, गुणानां परतन्त्रत्वात्। यत्र गुणीः, तत्र तेषां विधानम्। अतः प्राकृतानाम्पूर्वानुष्ठानम्।

उच्यते—गुणार्थे श्रूयमाणानामपि प्रत्यक्षपाठतः।
पश्चादवगतेस्तेषां युक्ता पश्चादनुष्ठितिः॥ ३४॥

गुणवाक्येपि कीर्त्त्यमानानां दीक्षणीयादीनां तत्र तावदवगतिर्जायते, सा च प्रत्यक्षपाठनिमित्ता दुणगुणिनोः समानसंस्थानत्वात्, तत्रैव गुणिनामनुष्ठानम् गमयतीत्यानुमानिकपाठनिमित्तंपूर्वानुष्ठानमनादरणीयम्।

इति दशमं सावित्रहोमादीनां दीक्षणीयापूर्वताधिकरणम्।

---

## यजमानसंस्काराणां रुक्मप्रतिमोकात्पूर्वभाविताधिकरणम्॥ ११॥

### सन्निपातश्चेद्यथोक्तमन्ते स्यात्॥ २३॥

तत्रैव दीक्षणीयद्यनन्तरं रुक्मप्रतिमोचनाद्याम्नातम्, प्रकृतौ च दीक्षणीयानन्तरं दीक्षितसंस्काराः। तदिह रुक्मप्रतिमोचनादि कृत्वा दक्षितसंस्काराः कार्याः ? विपरीतं वेति।

तत्र प्रत्यक्षपाठेन दीक्षणीयाद्यनन्तरम्।
रुक्मादिकमनुष्ठेयं पश्चाद्दीक्षितसंस्कृतिः॥ ३५॥

उच्यते—दीक्षा दीक्षितसंस्कारानुपस्थापयति क्रमात्।
तेषामुपस्थितानां च नाऽक्रियाहेतुरस्ति नः॥ ३६॥

प्रकृतिक्लृप्तक्रमवशेनानन्तरमुपस्थितान् दीक्षितसंस्कारान् कृत्वा पश्चात् क्रियमाणम्य रुक्मप्रतिमोचेनादेः पश्चात्पाठोपपत्तौ, नावश्यमनन्तरानुष्ठानमनन्तरपाठो ह्यवश्यं पठिन्यतयाऽप्युपपन्नो नानन्तर्यं गमयति। सावित्रहोमादेः पश्चादनुष्ठाने पूर्वं न पाठः स्यादिति विशेषः।

इत्येकादशं यजमानसंस्काराणां रुक्मप्रतिमोचनात्पूर्वभावित्वाधिकरणम्।

इति शास्त्रदीपिकायां पञ्चमाध्यायस्य द्वितीयः पादः॥ २॥

---

# अथ पञ्चमाध्यायस्य तृतीयः पादः

प्रयाजादीनामेकादशादिसंख्यायाः सर्वसंपाद्यताधिकरणम् ॥ १ ॥

विवृद्धिः कर्मभेदात्पृषदाज्यवत्तस्य तस्योपदिश्येत ॥ २ ॥ अपि वा सर्वसङ्ख्यत्वाद्विकारः प्रतीयेत ॥ २ ॥

'एकादश प्रयाजान् यजति, षडुपसदः' इति प्राकृतानां संख्याविवृद्धिर्विकृतौ श्रूयते। सा किं प्रत्येकं भवति ? उत सर्वसम्पादिनीति चिन्त्यते।

तत्रोद्दिश्य प्रयाजादि संख्या तस्योपदिश्यते।
उद्देश्यानां च साहित्यं शक्यते न विवक्षितुम् ॥ ३७ ॥

तस्मात्प्रतिप्रयाजम्, प्रत्युपसदं च संख्या स्यादिति प्राप्ते—

उच्यते—प्रायाजादिस्वरूपे हि नेयं संख्या विधीयते।
अशक्यत्वात्प्रयोगे तु लक्षिते सोपदिश्यते ॥ ३८ ॥

न ह्येकैकशः, समुदितानां वा स्वरूपेण संख्यान्वयः सम्भवति, एकस्य पञ्चानां चैकादशत्वासम्भवात्। अतः संख्यान्वयसिद्धये प्रयाजाः स्वप्रयोगम् लक्षयन्ति, ते च तं लक्षयन्तस्तत्राभिधानात्सहावगतास्तथैव लक्षयन्ति, संख्या-चेयमनेकवृत्तिस्वभावा समस्तलक्षितप्रयोगगतापि शक्नोति सर्वेषां प्रयाजानामुपकर्तुम्, अतः सर्वसम्पादनी स्यात्।

इति प्रथमं प्रयाजादीनामेकादशत्वादिसंख्यायाः सर्वसपाद्यत्वाधिकरणम्।



प्रथमादीनां तिसृणामुपसदां स्वस्थानावृद्ध्यधिकरणम् ॥ २ ॥

स्वस्थानात्तु विवृध्येरन्कृतानुपूर्वत्वात् ॥ ३ ॥

'षडुपसदः' इत्यत्र सर्वसम्पादनी संख्येत्युक्तम्। अतस्तिसृणामुपसदाम्—द्विरभ्यासः। तत्र किं दण्डकलितवदावृत्तिः, उत स्वस्थानविवृद्धिरिति चिन्तायाम्। आवृत्तिन्यायानां लोके त्रिरनुवाकः पठ्यतामित्यादौ दण्डकलितवदावृत्तिदर्शनादिहापि तथा स्यात्।

अतः सर्वाः सकृत्कृत्वा पुनः स्यादादितः क्रिया ।
स्वस्थानात्तु विवृद्धयेरन् क्रमबाधोऽन्यथा भवेत् ॥ ३९ ॥

तृतीयां कृत्वा प्रथमायां क्रियमाणायां प्राकृतक्रमबाधः स्यात्, अतस्तदबाधाय स्वे स्वे स्थाने द्विर्द्विरभ्यसितव्याः ।

इति द्वितीयं स्वस्थानविवृद्ध्यधिकरणम् ।

सामिधेनीषु आगन्तूनामन्तेनिवेशाधिकरणम् ॥ ३ ॥

**समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले समर्हणात् ॥ ४ ॥ तच्छब्दा वा ॥ ५ ॥ उष्णिक्ककुंभोरन्ते दर्शनात् ॥ ६ ॥**

'एकविंशतिमनुब्रूयादि'ति सामिधेनीविवृद्धिश्रुतावागमे कर्तव्ये सति, आगम्यमानानामृचां देशविशेषश्चिन्त्यते-किमन्ते निवेशः ? अथवा समिध्यमानवतीं समिद्धवतीं चान्तरा ? उत या धाय्याशब्दोक्ताः, तास्तयोर्मध्ये, अन्ये तु आगन्तवोऽन्ते—इति । तत्र 'अन्ते तु बादरायणः' इति न्यायत्सर्वाः प्राकृतीनामन्ते स्युरित्युपक्रममात्रेण प्रथमः पक्षः ।

'इयं वै समिध्यमानवती असौ समिद्धवती, यदन्तरा, तद्धाय्या' इति—धाय्यानामाकाशत्वेन स्तवनं द्यावापृथिवीसंस्कृतयोः समिध्यमानसमिद्धवत्योर्मध्ये-तासां विधानमनुमापयति । सर्वाश्चागन्तवो निधीयमानतया धाय्या इति सर्वासां तन्मध्ये निवेश इति द्वितीयः पक्षः ।

सिद्धान्तस्तु—न धीयमानमात्रवचनो धाय्याशब्दः, स्तुतशस्त्राद्यर्थतया धीयमानास्वपि तच्छब्दाभावात् । अतो यत्रैव धाय्याशब्दप्रयोगो वेदे दृष्टः । पृथुपाजपत्यौ धाय्ये इत्यादिः,ता एव धाय्याः, न त्वागन्तुकमात्रम् । यतस्तासामेव तन्मध्ये अन्यासां त्वागन्तूनामन्त एव निवेशः । एवञ्च त्रैधातव्याया धाय्याशब्दिकायाः 'अग्ने त्री ते वाजिनेत्ये'तस्यास्त्रिष्टुभोऽन्ते निवेशात् 'त्रिष्टुभा परिदधाती'त्यादिदर्शनमुपपन्नं भवति । तस्माद् धाय्याशब्दितानामन्त एव निवेशः ।

इति तृतीयं सामिधेनीनावागन्तूनामन्ते निवेशाधिकरणम् ।

## बहिष्पवमाने आगन्तूनां पर्यासोत्तरकालताधिकरणम् ॥ ४ ॥

स्तोम विवृद्धौ बहिष्पवमाने पुरस्तात्पर्यासादागन्तवः स्युस्तथा हि दृष्टं द्वादशाहे ॥ ७ ॥ पर्यास इति चाऽन्ताख्या ॥ ८ ॥ अन्ते वा तदुक्तम् ॥९॥ वचनात्तु द्वादशाहे ॥ १० ॥ अतद्विकारश्च ॥ ११ ॥ तद्विकारेऽप्यपूर्वत्वात् ॥ १२ ॥

ज्योतिष्टोमे बहिष्पवमाने त्रयस्तृचाः-स्तोत्रीयः,अनुरूपः, पर्यासश्च । ते च विवृद्धस्तोमकेषु क्रतुषु प्राप्ताः, तत्रागमेन संख्यापूरणं वक्ष्यते । तत्रागम्यमानानामृचामन्ते निवेशः, प्राग्वा प्राकृतात् पर्यासादिति संशयः । तत्र प्रत्यक्षपाठेन द्वादशाहे वृषण्वतां प्राक्पर्यासान्निविष्टत्वादन्यत्राप्यनुमीयते । द्वादशाहे षाडहिके द्वितीयेऽहनि विवृद्धस्तोमके प्राकृतौ स्तोत्रीयानुरूपौ पठित्वा, तत आगन्तवो वृषण्वत्य ऋचः पठिताः । ततः पश्चात्प्राकृतः पर्यासः पठितः, तदनेन पाठेन प्राक्पर्यासादागन्तूनां निवेशदर्शनात् ,अन्यत्रापि सर्वत्र सर्वेषामागन्तूनां तत्रैव निवेशः-इति सामान्यतोदृष्टमात्रेण पूर्वपक्षप्रतिभा । पर्यासशब्दश्चान्तवचनो लोके वेदे च-प्रसिद्धः—क्षेत्रपर्यासो नदीपर्यास इत्येवमादि । तद्यद्यागन्तवोऽन्ते स्युः, पर्याससमाख्या प्राकृतस्य तृचस्य बाध्येत, अतोऽपि प्राक्पर्यासान्निवेशः ।

उच्यते—नेदृशेनानुमानेन शास्त्रार्थोऽध्यवसीयते ।

समाख्या प्रकृतावेव चरितार्थेति साऽप्यतः ॥ ४० ॥

अन्ते निवेशमागन्तोर्न्यायप्राप्तं न बाधते ।
द्वादशाहविकारेऽपि केवलानां वृषण्वताम् ॥ ४१ ॥

प्राक्पर्यासान्निवेशः स्यादतिदेशविधेर्बलात् ।
अन्ये त्वागन्तवोऽन्ते स्युर्बादरायणदर्शनात् ॥ ४२ ॥

इति चतुर्थं बहिष्पवमाने आगन्तूनां पर्यासोत्तरकालताधिकरणम् ।

———

तत्रैवागन्तूनां साम्नामन्ते निवेशाधिकरणम् ॥ ५ ॥

अन्ते तूत्तरयोर्दध्यात् ॥ १३ ॥ अपि वा गायत्रीबृहत्यनुष्टुप्सु-वचनात् ॥ १४ ॥

विवृद्धस्तोमकेष्वेव क्रतूष्वुत्तरयोर्माध्यन्दिनार्भवपवमानयोः सामागमः वक्ष्यते। तत्रागम्यमानानां साम्नां किमन्त्ये तृचे निवेशः, अथवा गायत्रीबृहत्यनुष्टुप्स्विति। तत्रागन्तुत्वादन्ते निवेशः। यत्तु 'त्रीणि ह वै यज्ञस्योदराणि-गायत्री बृहत्यानुष्टुप् च, अत्र ह्येवावपन्ति,अत एवोद्वपन्ती'ति।तत्त्वविधिरूपत्वाद्यथाकथंचिन्नेयमिति। न। अपूर्वत्वात्तु वचनेनैवेदमनारभ्याधीतं सर्वयज्ञविषयम्। अतो गायत्र्यादिष्वेव निवेशः।

अथवा नैवात्र विचारः, पूर्वोक्तबहिष्पवमानग्रहणप्रत्युदाहरणमात्रमिदम्। बहिष्पवमान एवान्ते विवेशः, उत्तरयोस्तु गायत्र्यादिष्वेव निवेशो वचनादिति।

इति पञ्चमं बहिष्पवमाने आगन्तूनां साम्नामन्तेनिवेशाधिकरणम्।



ग्रहेष्टकादीनां क्रत्वग्निशेषताधिकरणम् ॥ ६ ॥

ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषः स्यात् ॥ १५ ॥ क्रत्वग्नि-शेषो वा चोदितत्वादचोदनानुपूर्वस्य ॥ १६ ॥

'अंशुं गृह्णाति, अदाभ्यां गृह्णाति, चित्रिणीरुपदधाति, वज्रिणीरुपदधाती'त्यनारभ्याधीतं ग्रहेष्टकं किं सवन-चितिशेषः, अतश्च प्रतिसवनम् ,प्रतिचिति आवर्त्तनीयम्,उत यागाग्न्यङ्गम् ,सकृदेव कर्त्तव्यमिति। प्रत्यक्षेण ग्रहैरिष्टकाभिश्च सवनानां चितीनां चारम्भदर्शनात् तादर्थ्यं मन्यते पूर्वपक्षवादी।

न। निष्फलत्वात्सवनचितीनां फलवज्ज्योतिष्टोमाङ्गत्वं ग्रहाणाम् ,इष्टकादीनाञ्च फलवदग्न्यङ्गत्वं युक्तम्। 'इष्टकाभिरग्निं चिनुते' इति वाचनिकमेवाग्न्यङ्गत्वम्।

इति षष्ठं ग्रहेष्टकादीनां क्रत्वग्निशेषत्वाधिकरणम्।



## चित्रिण्यादीनां मध्यमचितावुपधानाधिकरणम् ॥ ७ ॥

### अन्ते स्युरव्यवायात् ॥ १७ ॥ लिङ्गदर्शनाच्च ॥ १८ ॥

### मध्यमायां तु वचनाद् ब्राह्मणवत्यः ॥ १९ ॥

स्थिते सकृदनुष्ठाने, क्रमश्चिन्त्यते—किं चित्रिण्यादीनामुत्तमायामुपधानम् ? उत मध्यमायामिति।

क्लृप्तक्रमव्यवायार्थमन्तेऽनारभ्यचोदिताः ।
'यां काञ्चिदि'ति वाक्यन्तु विधये न भवत्यलम् ॥ ४१ ॥

सर्वासामिष्टकानां पठितेन कल्पितेन वा ब्राह्मणेन तद्वत्त्वात् सर्वासाञ्च मध्यमायामुपधानासम्भवात्, यासां प्राप्तं तदनुवादमात्रमिदम् 'यां काञ्चिद् ब्राह्मणवतीमिष्टकामभिजानीयात्, तां मध्यमायां चिता'विति, न तु विधायकम्। अतः क्लृप्तक्रमाणां प्राकरणिकीनाव्यवायार्थमनारभ्याधीतानामुत्तमायां विवेशः—

उच्यते—वचनान्मध्यमायां स्युः प्रत्यक्षब्राह्मणोदिताः ।
जानातिरभिपूर्वोऽयं प्रत्यक्षे वर्तते यतः ॥ ४२ ॥
वाक्यं चार्थवदेवं स्याद्वादमात्रं ह्यनर्थकम् ।
चित्रिण्यादेर्निवेशोऽतो मध्यमायां चितौ भवेत् ॥ ४३ ॥

इति सप्तमं चित्रिण्यादीनां मध्यमचितावुपधानाधिकरणम्।



## लोकम्पृणातः पूर्वं चित्रिण्याद्युपधानाधिकरणम् ॥ ८ ॥

### प्राग्लोकम्पृणायास्तस्याः सम्पूरणार्थत्वात् ॥ २० ॥

स्थितं मध्यमायां निवेशः-इति। तत्रापि किं प्राकरणिकीनामन्ते चित्रिण्यादीनां निवेशः ? अथ वा लोकम्पृणायाः प्रागिति ? तत्राऽव्यवायार्थमन्ते स्युः लोकन्पृणायास्तुन्यदेवास्योनम्. यच्छिद्रम, तदेतया पूरयति, लोकम्पृण-छिद्रम्-पृणे'ति यत्पूरणार्थत्वम्'। तच्चित्यन्तरेऽपि सावकाशम्। न हि सा मध्यमायात्रविषया,मन्त्रमात्रस्य प्रत्यक्षविधानात्, इष्टकायास्तु कल्प्यं विधानम् अतश्चित्यन्तरेऽपिसावकाशत्वेन न न्यायप्राप्तः चित्रिण्यादीनामन्ते निवेशः शक्यते बाधितुमित्यन्ते निवेशः।

नैवम्—अविशेषश्रुतस्य वचनस्य सावकाशत्वेन न्यायमात्रेण सङ्कोचासम्भवात्।

मध्यमायामपि चितावन्ते लोकम्पृणा भवेत्।
पूरणार्थेति तस्याः प्राक् चित्रिण्यादेर्निवेशनम्॥ ४४॥

इति सप्तमं लोकंपृणातः पूर्वं चित्रिण्यादीनामुपधानाधिकरणम्।



इष्टिसंस्कृताग्नावग्निहोत्राद्यनुष्ठानाधिकरणम् ॥ ६ ॥

**संस्कृते कर्म संस्काराणां तदर्थत्वात्॥ २२॥ अनन्तरं व्रतं तद्भूतत्वात्॥ २२॥ पूर्वं च लिङ्गदर्शनात्॥ २३॥ अर्थवादः-वाऽर्थस्य विद्यमानत्वात्॥ २४॥ न्यायविप्रतिषेधाच्च॥ २५॥**

आधानप्रकरणे पवमानहवींषि विहितानि। तान्याधानाद्विप्रकृष्यन्ते—'द्वादशसु रात्रिष्वनुनिर्वपेदि'त्यादिभिः। तत्राग्निहोत्रादीनि किमाधानानन्तरमेव प्रवर्तन्ते? उत तेषु कृतेष्विति विचारे, कर्तव्यानि, आहवनीयस्य निष्पन्नत्वादाधानमात्रस्य तन्निरपेक्षस्य तदुत्पादकत्वात्, पवमानहविर्भिस्तु निष्पन्नस्यैवाहवनीयस्य संस्कारमात्रं क्रियते, पूर्वमेव ह्याहवनीयादयो निष्पन्नाः, निष्पन्नेषु तेषु भवितव्यं कर्मभिरिति प्राप्ते—

उच्यते—न निरपेक्षमाधानमग्नीनामुत्पादकम्, पवमानहविषामपि तदुत्पादकत्वात्। न च विकल्पः, तेषामाधानोत्तरकाले विधानात्। अतः समुच्चितानाम्—तदुत्पादकत्वान्न तेभ्यः प्रागाहवनीयनिर्वृत्तिः। यदाऽप्याधानाङ्गं पवमानहवींषि, तदाऽप्यनङ्गे न प्रधानेन साध्यानिष्पत्तेस्तदुत्तरकालमेवाग्निनिष्पत्तिः। यत्तूक्तम्—निष्पन्नस्यैवाग्नेः संस्कारमात्रं हविर्भिरिति। तथाऽप्यस्य संस्कारस्याहवनीयकार्योपयोगित्वात्तेन विना निष्पन्नस्याप्यग्निहोत्रादिकार्याक्षमत्वञ्च तदुत्तरकाले एव कर्मणां प्रवृत्तिः।

इति नवममिष्टिसंस्कृतेऽग्नावग्निहोत्राद्यनुष्ठानाधिकरणम्।



अग्निचिद्वर्षणादिव्रतानां क्रत्वन्तेऽनुष्ठानाधिकरणम् ॥ १० ॥

**सञ्चिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य ॥ २६ ॥ क्रत्वन्ते वा प्रयोगवचनाभावात् ॥ २७ ॥ अग्नेः कर्मत्वनिर्देशात् ॥ २८ ॥**

अग्निचिद्व्रतानि 'वर्षति न धावेदि'त्यादीनि चयनानन्तरमेव भवन्ति ? क्रत्वन्ते वेति संशये ।

धात्वर्थश्चयनं भूतं निमित्तं तदनन्तरम् ।
व्रतान्यतः प्रवर्तेरन्नाहिताग्निव्रतादिवत् ॥ ४५ ॥

नैवम्—भावनाया निमित्तत्वं धातुस्तदुपसर्जनम् ।
तस्याश्च फलनिर्वृत्त्या निवृत्तिरुपलक्ष्यते ॥ ४६ ॥

न ह्यत्र चयनस्य स्वरूपनिर्वृत्तिर्निमित्तम्, तत्करणिका त्वग्निकर्मिका भावना भूता निमित्तम् । तस्याश्चाग्न्युपकारो भाव्यः, सोऽपि च क्रतुम् साधयतोऽग्नेः—र्धधारणम्, तच्चाक्रतुसमाप्तेर्विततम्, न ततः प्राग् निर्वृत्तं भवति, तन्निर्वृत्त्या च विना न भावनानिर्वृत्तिः, फलापवर्गित्वाद्भावनानामाधानस्य त्वग्निगतमदृष्टम् भाव्यं, तच्चानन्तरमेव निर्वृत्तमिति विशेषः ।

इति दशममग्निचिद्व्रतानां क्रत्वन्ते अनुष्ठानाधिकरणम् ।

—:o:—

दीक्षाया इष्टिसिद्धताधिकरणम् ॥ ११ ॥

**परेणाऽऽवेदनाद्दीक्षितः स्यात्, सर्वैर्दीक्षाभिसम्बन्धात् ॥ २९ ॥ इष्ट्यन्तेवा तदर्था ह्यविशेषार्थसम्बन्धात् ॥ ३० ॥ समाख्यानां च तद्वत् ॥ ३१ ॥**

'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः' इतीष्टिः, 'दण्डेन दीक्षयती'त्यादि च श्रूयते । तत्र किं सर्वैर्दीक्षितो भवत्युतेष्ट्यै व ? दण्डादीनि तु तद्व्यञ्जनीति । सर्वेषां तादर्थ्यावगमाददृष्टार्थानां चैकप्रयोगविधिसंग्रहात्स-मुच्चयसिद्धेः सर्वान्ते दीक्षासंग्रह इति प्राप्ते—

अभिधीयते—निरपेक्षैव वाक्येन दीक्षार्थेष्टिर्विधीयते ।
दण्डादि त्वक्रियारूपं तद्व्यञ्जनतयोच्यते ॥ ४७ ॥

'दीक्षिष्यमाणः' इति लृट् क्रियार्थायां क्रियायामुपपदे विधीयते । तेन दीक्षार्थत्वमिष्टेः । दीक्षा च क्रत्वङ्गभूतयमनियमसंग्रहः, तं करिष्यमाणस्य पुरुषस्य दीक्षिष्यमाणशब्दनिर्दिष्टस्य संस्कारार्थेष्टिः, सा च निरपेक्षाऽवगम्यते । तद्यदि दण्डादिश्रवणमन्यथा नोपपद्यते । ततो नैरपेक्ष्यं बाध्येत । तत्तु व्यञ्जनतयापि उपपन्नं न निरपेक्षश्रुतिं बाधितुं न क्षमते । किञ्च दण्डादीनि द्रव्यरूपाणि नोदासीनानि संस्कारं जनयन्ति । न चैषामाश्रयभूता इतिकर्तव्यताभूता वा काचित् क्रिया श्रूयते । अतः कथं दण्डादिभिः संस्कारो जन्यत इतिं न ज्ञायते । अभिव्यक्तिस्तु दृष्टत्वात्प्रमाणान्तरदृष्टसंयोगादिवशेनैव शक्यते सम्पादयितुम् । तस्मादिष्टयन्ते एव दीक्षितस्याभिव्यञ्जनमात्रार्था दण्डादय इति, इष्टयन्त एव दीक्षितधर्माः प्रवर्तेरन् ।

इत्येकादशमं दीक्षायाइष्टिसिद्धताधिकरणम् ।

—:o:—

काम्येष्टीनामनियमेनानुष्ठानाधिकरणम् ॥ १२ ॥

**अङ्गवत्क्रतूनामानुपूर्व्यम् ॥ ३२ ॥ न वाऽसम्बन्धात् ॥ ३३ ॥ काम्यत्वाच्च ॥ ३४ ॥ आनर्थक्यान्नेति चेत् ॥ ३५ ॥ स्याद्विद्यार्थत्वाद्यथा परेषु सर्वस्वारात् ॥ ३६ ॥**

क्रत्वन्तराणामैन्द्राग्नादीनां काम्यानाम्, नैमित्तिकानां च क्रमेण पठितानामङ्गानामिव पाठवशात्क्रमनियममाशङ्क्य पाठस्य स्वयमविधायकत्वाद्विधायकस्य चैषामेकस्याभावान्नानाप्रयोगवचनैरेकैकश्येन विधीयमानाना मिथोऽनपेक्षणादनियमेन कामानाम्, निमित्तानां चोपनिपातान्नास्ति क्रमनियम इति स्थितम् ।

इति द्वादशं काम्येष्टीनामनियमेनानुष्ठानाधिकरणम् ।

—:o:—

[यज्ञानामग्निष्टोमपूर्वकत्वाधिकरणम् ॥ १३ ॥

य एतेनेत्यग्निष्टोमः प्रकरणात् ॥ ३७ ॥

क्रत्वन्तराणामनियम इति स्थितम्। क्वचिद्वचनवशात्पौर्वापर्यं भवति। तथाहि श्रूयते—'एष वाव प्रथमो यज्ञो यज्ञानाम्, यज्ज्योतिष्टोमः, यएनानिष्ट्वाऽन्येन यजेते' ता.ब्रा. १६-१-२ति। तत्र किमेतच्छब्दः सर्वसंस्थं ज्योतिष्टोमं निर्दिशति? उताग्निष्टोमसंस्थमेवेति।

तत्राविशेषतः सर्वसंस्थोऽनेनाभिमृश्यते।
अग्निष्टोमस्तु नित्यत्वात्संस्था ह्यागन्तवो यतः॥ ४८॥

ज्योतिष्टोमस्य ह्यग्निष्टोमसंस्था नैजं रूपमिति, तादृश एव प्रतीयते, नसंस्थान्तरयुक्तः, तेषामागन्तुकत्वात्। अपि च 'एतेनेति करणनिर्देशाज्ज्यो'तिष्टोमकरणिका भावना इष्ट्वेति शब्देन कथ्यते, न च संस्थासु एतस्य करणत्वम्, आश्रयमात्रत्वात्, न च संस्थानां क्रतुभावानान्तर्भावः फलार्थत्वात्, अग्निष्टोमसंस्था तु क्रतुभावनान्तर्गतेति तत्संस्थस्यैव परामर्शः।

इति त्रयोदशं यज्ञानामग्निष्टोमपूर्वकत्वाधिकरणम्।

—:०:—

ज्योतिष्टोमविकाराणामग्निष्टोमपूर्वकत्वाधिकरणम् ॥ १४ ॥

अथान्येनेति संस्थानां सन्निधानात् ॥ ३९ ॥ तत्प्रकृतेर्वाऽऽपत्तिविहारौ हि न तुल्येषूपपद्येते ॥४०॥ प्रशंसा च विहरणाभावात् ॥४१॥ विधिप्रत्ययाद्वा, न ह्येकस्मात् प्रशंशा स्यात् ॥ ४२ ॥

एतच्छब्दार्थे निरूपिते, तदपेक्षोऽन्यशब्दः किं संस्थासु वर्तते? उताग्निष्टोमान्यमात्र इति संशये।

संस्था एवान्यशब्देन कथ्यन्ते प्रकृता हि ताः।
न त्वेवं स्यान्न संस्थानामस्ति प्रकरणं यतः॥ ४९॥
ज्योतिष्टोमाधिकारोऽयं वाक्यशेषे च कीर्तनात्।
यज्ञानामितिशब्देन सर्वे सन्निहिता हि ते॥ ५०॥

तस्माज्ज्योतिष्टोमान्यत्वाविशेषात्संस्थानामेकाहाहीनसत्राणां चायमन्यवाद इति, सर्वेषां तेषां ज्योतिष्टोमात्पश्चाद्भावोऽङ्गमनेन वाक्येन विधीयते।

इति चतुर्दशं ज्योतिष्टोमविकाराणामग्निष्टोमपूर्वकत्वाधिकरणम्।

—:०:—

सर्वेषामेकानेकस्तोमकामानामग्निष्टोमपूर्वकत्वाधिकरणम् ॥ १५ ॥

**एकस्तोमो वा क्रतुसंयोगात् ॥ ४३ ॥ सर्वेषां वा चोदनाविशेषात्प्रशंसा स्तोमानाम् ॥ ४४ ॥**

पूर्वाक्षेपेणेदमारभ्यते—न सर्वनिर्देशः, किं त्वेकस्तोमानां त्रिवृदग्निष्टोमः, पञ्चदश उक्थः, एकविंशः षोडशीत्यादीनामेव। कुतः? वाक्यशेषात्। 'यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते' इत्यारभ्याऽविशेषश्रवणं वाक्यशेषेण विशेषे स्थाप्यते।

न त्वेवमन्यशब्देन ह्यविशेषः प्रतीयते।
वाक्यशेषस्तु संयोगमात्रेणवोपपद्यते ॥ ५१ ॥

'यो त्रिवृदन्यं यज्ञक्रतुमापद्यतेहि स तं दीपयती"ता. १६-१-४ति विनापि व्याप्त्या संयोगमात्रेण त्रिवृदादीनामेकस्तोमकेष्वपि दीपकत्वं सम्भवतीत्यविशेषात्सर्ववाद इति स्थितम्।

इति पञ्चदशमेकानेकस्तोमकामाग्निष्टोमापूर्वकत्वाधिकरणम्।

इति शास्त्रदीपिकायां पञ्चमस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

—:०:—

# अथ पञ्चमाध्यायस्य चतुर्थः पादः

## पाठक्रमापेक्षया श्रुत्यर्थयोर्बलवत्त्वाधिकरणम् ॥ १ ॥

**क्रमकोपोर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ॥ १ ॥**

किं श्रुत्यर्थाभ्यां तुल्यबलः पाठः,उत दुर्बल इति चिन्त्यते। तत्र 'आश्विनः-दशमो गृह्यते 'इति श्रुतम्। किमाश्विनस्य पाठक्रमात् तृतीयस्थानं ग्रहणम्? उत-श्रुतिबलाद्दशमे—इति। तथा 'अग्निहोत्रं जुहोति, यवागूं पचती'ति किं पाठवशाद् हुत्वा पक्तव्यम्,उतार्थवशाद्विपर्यय इति? प्रामाण्याविशेषादनियमं मन्वानस्योत्तरम्

क्रमे श्रुत्यैव विहिते पाठतः कोऽनुकल्पयेत्।
प्रयोजनविरोधे वा कः पाठमनुरुध्यते ॥ ५२ ॥

हुत्वा हि पचमानस्य भवेद् द्वयमनर्थकम्।
पाकश्चैव यवागूश्च तां पक्त्वा जुहुयादतः ॥ ५३ ॥

इति प्रथमं पाठक्रमापेक्षया श्रुत्यर्थयोर्बलवत्वाधिकरणम्।



## मुख्यक्रमेणाग्नो यस्य पूर्वमवदानाद्यनुष्ठानाधिकरणम् ॥ २ ॥

**अवदानाभिधारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥ २ ॥**

**यथाप्रदानं वा तदर्थत्वात् ॥ ३ ॥ लिङ्गदर्शनाच्च ॥ ४ ॥**

दर्शपूर्णमासयोः सान्नाय्यधर्माः पूर्वं प्रवर्तन्ते, पश्चादाग्नेयधर्माः। प्रदानं त्वाग्नेयस्य प्रथमम्, पश्चात्सान्नाय्यस्य, ततः स्विष्टकृदवदानम्, प्रयाजशेषाभिधारणम्,वेद्यामासादनं च किं प्रवृत्तिक्रमात्सान्नाय्यस्य पूर्वं भवति,उत मुख्यक्रमादाग्नेयस्येति, प्रवृत्तिमुख्ययोर्बलाबलाज्ञानात्सन्देहे अनियमे प्राप्ते—

मुख्यक्रमो बलीयानित्याह। तस्मिन्क्रियमाणे प्रथम एकः पदार्थः-प्रधानाद्विप्रकृष्यते। अन्ये सर्वे सन्निकृष्टा भवन्ति। प्रवृत्तिक्रमे पुनराश्रीयमाणे

बहूनां विप्रकर्षः। तस्मान्मुख्यक्रमो बलीयान्। नचात्र प्रधानावदानमुदाहरणमित्युक्तं तन्त्ररत्ने।

इति द्वितीयं मुख्यक्रमाधिकरणम्।

इष्टिसोमयोः पौर्वापर्यानियमाधिकरणम्॥ ३॥

**वचनादिष्टिपूर्वत्वम्॥ ५। सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात् तदर्थे नानर्थकं हि स्यात्॥ ६॥ तदर्थवचनाच्च नाविशेषात्तदर्थत्वम्॥ ७॥ अयक्ष्यमाणस्य च पवमानहविषां कालनिर्देशाद्विशङ्का स्यात्॥ ८॥ इष्टिरयक्ष्यमाणस्य तादर्थ्ये सोमपूर्वत्वम्॥९॥**

इष्टिपूर्वत्वं सोमस्याम्नातं 'दर्शपूर्णमाभ्यामिष्ट्वा सोमेन यजेते'ति। तत्किम् नियतम्, उत विपर्ययोऽपि लभ्यत इति। वचनादिष्टिपूर्वत्वम्। सोमपूर्वत्वस्य तु नैवं साक्षाद्वचनमस्ति, तस्मादिष्टिपूर्वत्वमेव स्यात्।

सत्यम्—न साक्षादस्ति वचनम् आधानानान्तर्यं तु सोमस्य श्रुतम्; तद्व शाच्चार्थादिष्टेः सोमपूर्वत्वं सञ्जायते, न ह्याधानानन्तर्यं सोमस्येष्टिपूर्वत्वे सम्पादयितुं शक्यम्। तच्च श्रुतं 'सोमेन यक्ष्यमाणोऽग्निमादधीते'ति। सर्वश्चादधानः सोमेन यक्ष्यमाण एव नित्यत्वात्सोमस्य। अतः सोमेनान्तरं यक्ष्यमाण इत्येतदभिप्रायमिदम्। अतः सोमपूर्वत्वमपि स्यात्।

इति तृतीयमिष्टिसोमयोः पौर्वापर्यनियमाधिकरणम्।

ब्राह्मणस्यापीष्टिसोमयोः पौर्वापर्यनियमाधिकरणम्॥ ४॥

**उत्कर्षाद् ब्राह्मणस्य सोमः स्यात्॥ १०॥ पौर्णमासी वा श्रुतिसंयोगात्॥ ११॥ सर्वस्य चैककर्मत्वात्॥ १२॥ स्याद्वा विधिस्तदर्थेन॥ १३॥ प्रकरणात्तु कालः स्यात्॥ १४॥ स्वकाले स्यादवि-**

**प्रतिषेधात् ॥ १५ ॥ अपनयो वाऽऽधानस्य सर्वकालत्वात् ॥ १६ ॥ पौर्णमास्यूर्ध्वं सोमाद् ब्राह्मणस्य वचनात् ॥ १७ ॥ एकं वा शब्दसामर्थ्यात्प्राक्कृत्स्नविधानम् ॥ १८ ॥**

स्थिते कल्पद्वये, चिन्त्यते–किं ब्राह्मणस्य सोमपूर्वत्वमेव? उत तस्यापीतरवद् द्वावेव कल्पाविति ? तदर्थं चिन्त्यते—'किमाग्नेयो वै ब्राह्मणो देवतया' स सोमेनेष्ट्वाऽग्नीषोमीयो भवति, यदेवादः पौर्णमासं हविः, तत्तर्ह्यनुनिर्वपेत् तर्हि स उभयदेवतो भवती'ति। अनेन वचनेन कृत्स्नौ दर्शपूर्णमासावूर्ध्वं सोमादुत्कृष्येते। अथवा कर्मान्तरविधिरयम् ?उत पौर्णमासीमात्रोत्कर्षः ? अथवैकहविरुत्कर्ष इति ? यदि कृत्स्नोत्कर्षो ब्राह्मणस्य सोमपूर्वत्वमेव भवति, पक्षान्तरेषु तस्याप्युभौ कल्पाविति।

तत्र—इष्टेरुत्कर्षणं यस्माद् ब्राह्मणस्य विधीयते।
तेनास्य सोमपूर्वत्वमुभयं क्षत्रवैश्ययोः ॥ ५४ ॥

यद्यपि 'यदेवादः पौर्णमासं हविरि'त्येकदेशोत्कर्षः श्रूयते, तथाऽपि समस्तसाध्यत्वेन श्रुतं फलं नैकदेशात्तदुत्पत्तुमर्हति। न चाफलस्यानुष्ठानमस्तीति तस्याप्युत्कर्षः। कृत्स्नोत्कर्षात्सोमपूर्वत्वमेव विप्रस्य, क्षत्रियवैश्ययोरेव कल्पद्वयमिति पूर्वः पक्षः।

अत्र सिद्धान्त्येकदेश्याह—कर्मान्तरमिदं पौर्णमासीधर्मकम्, तन्नामकं वा विधीयते। एवं धात्वर्थविधिर्भवति, अश्रुतस्य चोत्कर्षः कल्पितो न भवति, न त्वेतत्कर्मान्तरं विशिष्टविधिगौरवान्नात्.नश्चानेकार्थकल्पना,धर्मलक्षणा वा युक्ता। प्रकरणात्तु पौर्णमास्या एवायं कालविधिः, तत्संयोगात् दर्शस्यापि उत्कर्ष एव इत्येवमपर्यवसितेऽधिकरणे।

## अन्तरार्गभण्यधिकरणम्।

अनन्तरोक्तोपजीवनेन पूर्वपक्षं वक्तुं चिन्तान्तरं क्रियते। 'सोमेन यक्ष्यमाणोऽग्निमादधीत, नर्तुं प्रतीक्षेत्न नक्षत्रमिति किमयमृतुनक्षत्रातिक्रम आधानस्य? उत सोमस्येति ? प्रकरणादाधानस्येति प्राप्ते—

वचनान्तरेणास्यामेव शाखायां 'यदहरेवैनमि'त्यादिना आधानकालानादरस्योक्तत्वात्सोमकाल एवाऽयम्। यद्यपि शतपथे 'अपहतपाप्मानो वा ऋतवः' असौ खलु वाव आदित्य उद्यन्नेषां पाप्मानमपहन्ति,तस्माद्यदा श्रद्धा चोपनमेत्,

अथादधीत, अथ यजेते' २-१-३-९ त्युक्तम्, तथाऽप्यस्यां शाखायामाहित इति, ततपरःएवायं सोमेनाधानानन्तरं यक्ष्यमाण आदधीत तथा कुर्वन् सोमस्यतुं नक्षत्रं च संपदादिकं नाद्रियेत—इति।

स्थितादुत्तरम्—न कृत्स्नोत्कर्षः, पौर्णमासीमात्रश्रवणात्। यत्तु नैकदेशात् फलमिति। समुदायादेव विततात्फलमित्यदोषः। तस्मात्कृत्स्नोत्कर्षाभावात् ब्राह्मणस्याप्युभौ कल्पौ।

सिद्धान्तस्तु—गृह्णीम एतत्कृत्स्नोत्कर्षः, विप्रस्यापि द्वौ कल्पाविति। यत्तु पौर्णमास्युत्कर्ष इति, तन्न मृष्यामहे। न सकलपौर्णमास्युत्कर्षः।

किन्तु— अदःशब्दपरामृष्टमग्नीषोमीयमेव हि।
हविरुत्कृष्यते अन्यत्तु यथाप्राप्तमवस्थितम्॥ ५५॥
तन्मात्ररहितत्वेन विप्रस्यापि पुरा भवेत्।
तेन तस्याप्युभावेव कल्पौ क्षत्रियवैश्यवत्॥ ५६॥

इति चतुर्थं ब्राह्मणस्यापोष्टिसोमयोः पौर्वापर्यानियमाधिकरणम्।



आज्यस्य सोमादनुत्कर्षाधिकरणम्॥ ५॥

**पुरोडाशस्त्वनिर्देशां तद्युक्ते देवताभावात्॥ १९॥ आज्यमपीति चेत्॥ २०॥ न मिश्रदेवतात्वादैन्द्राग्नवत्॥ २१॥**

स्थितमग्नीषोमीयस्योत्कर्ष इति। स किं पुरोडाशस्य? उताज्यस्यापीति—चिन्तायाम्।

तत्राग्नीषोमभिसम्बन्धादाज्यस्यापीति मन्यते।
विष्णुप्रजापतिभ्यां तु सोमात्प्रागपि तद्भवेत्॥ ५७॥

यद्यप्यग्नीषोमौ यष्टुमनर्हो यजमानः, तथाऽपि नाज्यमुत्क्रष्टुमर्हति। स हि प्रागपि विष्णुं प्रजापतिं वा यक्ष्यति। तस्मान्नाज्योत्कर्षः।

इति पञ्चममाज्यस्य सोमादनुत्कर्षाधिकरणम्।



विकृतानामैन्द्राग्नादीनां सद्यस्कालताधिकरणम् ॥ ६ ॥

**विकृतेः प्रकृतिकालत्वात्सद्यस्कालोत्तरा विकृतिस्तयोः प्रत्यक्षशिष्टत्वात् ॥ २२ ॥ द्वैयहकाल्ये तु यथान्यायम् ॥ २३ ॥ वचनाद्वैककाल्यं स्यात् ॥ २४ ॥**

विकृतयो व्यहकालाः ? सद्यस्काला वेति संशये, प्रकृतिवत् व्यहकालाः । न च वचनविरोधः, प्रकृतिवदेव । प्रकृतौ हि "पौर्णमास्यां पौर्णमास्या यजेते"ति वाचनिकं कालं वचनान्तरवशादेकदेशेन योजयित्वा व्यहकालत्वमेवाश्रितम्, तथा-विकृतावपि 'य इष्ट्या पशुने'त्यादिविहितकाल एकदेश एव स्यात्। व्यहकालस्य प्रकृतितः प्राप्तत्वात, वचनं त्विदं व्यवस्थानिवृत्त्यर्थम्। प्रकृतितो हि पौर्णमासीविकाराणाम्, अमावास्याविकाराणां च तद्वदेव कालव्यवस्थायां प्राप्तायाम्, अव्यवस्थार्थम् 'य इष्ट्या पशुने'त्यादिवचनम्। सम्भवति च द्वयोरपि प्रकृतिविकृत्योर्द्व्यहकालत्वमेकस्याश्चतुर्दश्यामुपक्रमसम्भवात्, अतो द्व्यहकालाः ।

उच्यते—न प्रत्यक्षश्रुतः कालः सङ्कोचं चोदकाद् व्रजेत्।
सर्वाङ्गयुक्ता विकृतिः पञ्चदश्यामतो भवेत् ॥ ५८ ॥

इति षष्टं विकृतीनामैन्द्राग्नादीनां सद्यस्कालताधिकरणम् ।

---

सोमात्सान्नाय्यादीनामुत्कर्षाधिकरणम् ॥ ७ ॥

**सान्नाय्याग्नीषोमीयविकारादूर्ध्वं सोमात्प्रकृतिवत् ॥ २५ ॥**

'नासोमयाजी सन्नयेत्, आग्नेयो वै ब्राह्मणः' इति वचनाभ्याम् सान्नाय्याग्नीषोमीययोः सोमोत्तरकालत्वम्, तद्विकाराणामप्यतिदेशात् तत्कालत्वमिति, सुहृद्भूत्वोपदिष्टवान् ।

इति सप्तमं सोमात्सान्नाय्यादीनामुत्कर्षाधिकरणम् ।

---

सोमविकाराणां दर्शपूर्णमासात्प्रागकर्तव्यताधिकरणम् ॥ ८ ॥

## तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥ २६ ॥

इष्टिपूर्वत्वम्, सोमपूर्वत्वञ्चोभयमस्तीत्युक्तम्, अतः प्रकृतिवत्सोमविकाराणामपीष्टेः प्रागूर्ध्वं च सम्भवं मन्यते। न त्वेवम्।

न हीष्टेः प्रागनुष्ठानं सोमस्याहत्य चोदितम्।
आधानानन्तरोक्त्या तु संज्ञातं प्राक्त्वमर्थतः ॥ ५९ ॥

आधानानन्तरत्वं च विकृतीनां न सिद्ध्यति। ज्योतिष्टोमोर्ध्वकालत्वात् द्वयोश्च तदसम्भवात्। 'एष वाव प्रथमो यज्ञानामि'त्यनेव वचनेन ज्योतिष्टोमानन्तरकालत्वाद्विकृतीनाम् नाधानानन्तर्यं सम्भवति, एकश्चायमनन्तरकालोन द्वाभ्यां प्रकृतिविकृतिभ्याम वरोद्धुं शक्यः, प्रत्यक्षवचनात्तु प्रकृत्या संगृहीत इति, न विकृतेः सम्भवति। तदसम्भवाच्च न विकृतयः प्राग्भावमिष्टेर्लभन्ते, न चाहत्यप्रकृताविष्टेः प्राक्त्वमुक्तम् यदतिदिश्येत, इष्ट्युत्तरकालत्वंन्तु साक्षादुक्तम् प्रकृताविति, तदेव विकृतिष्वतिदिश्यते।

अतः सोमविकाराणां दर्शादेः परतः क्रिया।
एवं निरूपिता सम्यक् षट्प्रमाणा क्रमस्थितिः ॥ ६० ॥

इत्यष्टमं सोमविकाराणांदर्शपूर्णमासात्पूर्वकर्तव्यताधिकरणम्।

इति श्रीमहामहोपाध्यायश्रीपार्थसारथिमिश्रकृतौ शास्त्रदीपिकायाम्
पञ्चमाध्यायस्य चतुर्थः पादः

॥ पञ्चमोऽध्यायः समाप्तः ॥



